॥ श्रीः ॥

भट्टनारायणप्रणीतं

# वेणीसंहारम् ।

जगद्धरकृतया टिप्पण्या समेतम् ।

मूल्यं १।≈ रूप्यकः ।

# THE

# VEṆĪSAṂHĀRA

BY

## BHAṬṬA NĀRĀYAṆA

**With the Commentary of Jagaddhara and various readings etc.**

EDITED BY

KĀS'ĪNĀTH PĀṆḌURANG PARAB.

REVISED BY

NĀRĀYAṆ RĀM ĀCHĀRYA "KĀVYATĪRTH"

WITH CO-OPERATION OF THE S'ĀSTRIMAṆḌAL.

---

**Ninth Edition.**

---

PUBLISHED BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA-SĀGAR' PRESS,

BOMBAY.

1940.

*Price 1¼ Rupee.*

॥ श्रीः ॥

भट्टनारायणप्रणीतं

# वेणीसंहारम्।

जगद्धरकृतया टिप्पण्या पाठान्तरादिभिश्च समेतम्।

परबोपाह्वेन पाण्डुरङ्गात्मजेन काशीनाथेन

पूर्वसंस्कृतस्यास्य

नवमं संस्करणम्

श्रीमदिन्दिराकान्तचरणान्तेवासिना

नारायण राम आचार्य "काव्यतीर्थ" इत्यनेन

शास्त्रिमण्डलसाहाय्येन

संशोधितम्।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागरमुद्रणयन्त्रालयेऽङ्कयित्वा च प्रकाशितम्।

शाकः १८६२, सन १९४०

मूल्यं १। सपादो रूप्यकः।

॥ श्रीः ॥

# वेणीसंहारम् ।

## जगद्धरकृतया टिप्पण्या समेतम् ।

प्रथमोऽङ्कः ।

नान्दी[1]

निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः
करैरिन्दोरन्तश्छुरित इव संभिन्नमुकुलः[2] ।
विधत्तां सिद्धिं नो नयनसुभगामस्य सदसः
प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम् ॥ १ ॥

कण्ठस्थाहिमणीविभूषिततनू राजज्जटापल्लवो
हृष्यन्मौलिसुधाकरैककुसुमस्तत्पञ्चशाखाश्रयः ।
स्थाणुर्मे फलदोऽस्तु नित्यमधिकं गौरीमुखेन्दुद्रव-
त्पीयूषद्रवपानदोहदवशात्कल्पद्रुमत्वं वहन् ॥

गुरूपदेशमासाद्य विभाव्य निपुणं हृदा ।
श्रीजगद्धरधीरेण टिप्पणी क्रियते शुभा ॥

इह तावन्निर्विघ्नं प्रारिप्सितसिद्धिमनुरुध्य कविः स्वेष्टदेवताकीर्तनरूपं मङ्गलं नान्दीमुखेनाह—**निषिद्धैरिति** । अयं पुष्पाणामञ्जलिः नोऽस्माकं सिद्धिं विधत्तां करोतु । कीदृशीम् । अस्य सदसः सभाया नयनसुभगां नेत्रप्रीतिजननीम् । तथा च सदस्यानामपि नेत्रानुरागं विदधात्विति भावः । कीदृशोऽञ्जलिः । हरिचरणयोः कृष्णपदद्वये प्रकीर्णो विस्तीर्णः । इष्टदेवतापूजोपकरणीभूत इति भावः । अत एव तद्द्वारा देवता प्रीता स्यात्, तथा च निर्विघ्नस्वेष्टलाभ इति मङ्गलाचरणफलम् । अत्राञ्जलिपदेन लक्षणयाञ्जलिस्थपुष्पाणि लक्ष्यन्ते । पुनः कीदृशः । एभि-

1 नान्दी—नन्दयति=आनन्दयति स्तवेन देवादीन्, आशीर्वादेन सभ्यान् इति या विघ्नोपशान्तये ह्यादौ क्रियमाणा आशीर्वचनसमलङ्कृता देवद्विजादीनां स्तुतिः । 2 संभिन्नमुकुलः [ संभिन्नाः=विकसिताः मुकुला यस्मिन् सः ] निषिद्धैः अपि मधुकरैः लुलितमकरन्दः [ लुलितः=चालितः मकरन्दः=पुष्परसः यस्मिन् सः ] अन्तः छुरित इव अयं हरिचरणयोः प्रकीर्णः पुष्पाणां अञ्जलिः अस्य सदसः नयनसुभगां [ नयनयोः सुभगां=प्रीतिदां ] नः सिद्धिं विधत्ताम् । शिखरिणी वृत्तम् । तल्लक्षणं च—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति ।

अपि च,

> कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं
> गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् ।

---

र्मधुकरैर्लुलितमकरन्दः पुरोवर्तिभ्रमरैः पीतरसः । कीदृशैः । निषिद्धैरपि निवारितैरपि । करादिचालनेन निवारिता अपि प्रसभरसलोभात्पतन्तस्तैरिति भावः । यद्वा निषिद्धैः धर्मशास्त्रनिषिद्धैः । 'छिद्राणि कीटदष्टानि कुसुमानि विवर्जयेत्' इति मनुवचनात् । पुनः कीदृशः । संभिन्नमुकुलः प्रफुल्लकलिकः । अत्रोत्प्रेक्षितं कारणमाह—अभ्यन्तर इन्दोः करैश्चन्द्रकिरणैश्छुरित इव व्याप्त इव । तथा च सुधाकरकरसंपर्कादिव प्रफुल्लतेति भावः । 'मकरन्दः पुष्परसः' इत्यमरः । अत्र हिमकरकरस्पर्शान्मुकुलसंभेदेन निशाकरप्रकाश्यानि कुसुमानि योग्यतया विवक्षितानीति केचित् । सामान्यतः पुष्पाणीह विवक्षितानि । प्रफुल्लताहेतुश्चोत्प्रेक्षितोऽन्यत्रस्थ इव । अन्यथा चोत्प्रेक्षाया अप्रसङ्गः । उत्प्रेक्षा च—'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते या तु तामुत्प्रेक्षां विदुर्बुधाः ॥' इति लक्षिता । इवशब्दश्चोत्प्रेक्षाभिव्यञ्जकः । तथा च दण्डी—'मन्ये-शङ्के-ध्रुवं-प्रायो-नून-मित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इत्यपरे । 'मधुव्रतो मधुकरो मधुलिट्' इत्यमरः । 'भानुः करो मरीचिः' इति च । 'भिन्नौ दारितसंगतौ' इति च । 'सदः समिति संयति' इति शाश्वतः । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । इह नान्दी त्रिभिः श्लोकैर्द्वादशपदा । तदुक्तं **संगीतसर्वस्वे**—'प्रशस्तपदविन्यासा चन्द्रसंकीर्तनान्विता । आशीर्वादपरा नान्दी योज्येयं मङ्गलान्विता ॥ काचिद्द्वादशपदा नान्दी काचिदष्टपदा तथा । सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः ॥ चन्द्रसंकीर्तनं यत्र तदधीनो रसो मतः । प्रीते चन्द्रमसि स्फीता रसश्रीरिति भालुकिः ॥' इति । तत्रापि पदं केचन विभक्त्यन्तमूचिरे । केचित्तु पदं पद्यस्य चतुर्थभागमाहुः । तदिह द्वितीयपक्षाश्रयणेन त्रिभिः श्लोकैर्द्वादशपदा नान्दी । इह निषिद्धपदेन मित्रादिना निषिद्धा अपि सुयोधनादयो निजदर्पादगणिततन्निषेधा युद्धायैव लग्ना इति ध्वनितम् । संभिन्नमुकुलपदेन च युधिष्ठिरादीनां वनवासादिदुःखानन्तरं सुखप्रकाशो दर्शित इति केचित् । नान्द्यां वस्तुनिर्देशस्यानङ्गतया तत्सूचनमत्राकिंचित्करम् । सूचनं तु 'सत्पक्षाः–' (१।६) इत्यादिनाग्रे कर्तव्यमेव । तत्प्रतीकस्य तदर्थत्वादित्यन्ये ॥१॥ बहुविघ्नशङ्कया तन्नाशार्थं पुनर्मङ्गलमाचरन्नान्दीनिर्वाहार्थमाह—**कालिन्द्या इति** । कंसद्विषः कृष्णस्यानुनयो वो युष्मान्

---

1 कालिन्द्याः पुलिनेषु केलिकुपितां [ केल्या=कौतुकेन कुपितां ] रासे [ रासः='नटैर्गृहीतकण्ठानामन्योन्यात्तकरश्रियम् । नर्तकीनां भवेद्रासो मण्डलीभूय नर्तनम् ॥' एवंविधः क्रीडाविशेषः, तस्मिन् । तथा च **भागवते** रासक्रीडावर्णनम्—'इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः । जहुर्विरहजं तापं तद-

तत्पादप्रतिमानिवेशितपदस्योद्धूतरोमोद्गते-
रक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ २ ॥
अपि च,
दृ[1]ष्टः सप्रेम देव्या किमिदमिति भयात्संभ्र[1]माच्चासुरीभिः

पुष्णातु पुष्टान् करोतु । कीदृशः । अक्षुण्णोऽखण्डितः । अत्र हेतुमाह—प्रसन्नदयितादृष्टस्य । सप्रसादराधावलोकितस्येत्यर्थः । कीदृशस्य । केलिकुपितां कौतुक एव क्रोधवतीं राधिकां कालिन्द्या यमुनायाः पुलिनेषु तोयोत्थितदेशेषूत्सृज्य त्यक्त्वा अनुगच्छतोऽनुप्रयातस्य । कीदृशीम् । रासे गोपक्रीडायां रसमनुरागं गच्छन्तीमत एवाश्रुकलुषां रुदतीम् । तथा च प्रणयकुपिता, रासानुरागिणी, रुदती चेति राधाया अवस्थात्रयं सूचितम् । इदमालोक्य भगवतापि तदनुनयः कृत इत्याशयः । अत एव तत्पादप्रतिमासु तच्चरणपद्धतिषु निवेशितपदस्य दत्तपादस्य । तत्र चात्यन्तानुरागवशादुद्धूतरोमोद्गतेर्जातरोमाञ्चस्य । अत एव प्रसादो राधयापि कृतः । 'मत्पदसंबन्धादेवायं भावाविर्भाववान्, नितरां मत्संगमादिति मयि परमयमनुरक्त' इति सप्रसादं कुपितयापि कान्तया दृष्ट इति भावः । 'तोयोत्थितं तत्पुलिनम्' इत्यमरः । 'रासो विदग्धगोष्ठ्यां च क्रीडायामपि गोदुहाम्' इति विश्वः । अत्र प्रथमार्धेन द्रौपद्याः कोपरोदने सूचिते । उत्तरार्धेन च दुर्योधनवधानन्तरं भीमकृततदीयानुनयस्याक्षुण्णता तस्याश्च प्रसादवत्त्वं सूचितम् ॥ २ ॥
यत्र विवक्षितार्थस्यापर्यवसानादवशिष्टस्य कथनं तत्र 'अपि च' इति शब्दः प्रयुज्यत इति व्युत्पत्तिः, एवमन्यत्रापि । कवेर्हरिहरनिमग्नमानसत्वेन हरौ स्तुतिमुक्त्वा हरेऽपि तामाह—**दृष्ट इति** । धूर्जटिः शिवो युष्मान् पातु रक्षतु । कीदृशः । मयपुरदहने त्रिपुरदाहे सप्रेम प्रीतिसहितं यथा स्यादेवं देव्या भवान्या दृष्टः । 'धन्याऽहं

ङ्गोपचिताशिषः ॥ तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः । स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ रासोत्सवः संप्रवृत्तो गोपीमण्डलमण्डितः । योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः । प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः । भागवत० १० स्कं० पू० अ० ३३ ] रसं उत्सृज्य गच्छन्तीं, अश्रुकलुषां [ अश्रुभिः कलुषां=मलिनां ] राधिकां अनुगच्छतः तत्पादप्रतिमानिवेशितपदस्य [ तस्याः=राधायाः पादप्रतिमासु=पादन्यासजनितचिह्नेषु निवेशिते पदे=स्वचरणौ येन सः ] उद्धूतरोमोद्गतेः [ उद्धूता=सञ्जाता रोमोद्गतिः=रोमाञ्चः यस्य स तस्य ] प्रसन्नदयितादृष्टस्य [ प्रसन्ना च सा दयिता च तया=प्रशान्तक्रोधया राधया सप्रेमदृष्टस्य ] कंसद्विषः [ कंसं द्वेष्टीति कंसद्विद् तस्य=कृष्णस्य ] अक्षुण्णः अनुनयः [=प्रियाप्रसादनव्यापारः ] वः [=रङ्गस्थान् ] पुष्णातु । शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' इति तल्लक्षणम् ।

1 मयपुरदहने [ मयेन निर्मितानि पुराणि तेषां दहनं तस्मिन्=त्रिपुरा-

पाठा०-१. 'संभ्रमादासुरीभिः'.

शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन ।
आकृष्यास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः
सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ३ ॥

यद्वल्लभेनायमतिबलो महासुरो निषूदित' इति प्रीतिमत्या भगवत्या दृष्ट इति भावः । तदेव असुरीभिरसुरवधूभिः 'किमिदमापतितम्' इति कृत्वा भयात्त्रासात् संभ्रमादुद्वेगाच्च दृष्टः । 'आः कष्टं, कथमीदृशस्याप्यसुरराजस्यायं दशापरिपाकः !' इति, 'अस्मत्स्वामिनामप्येवं कदाचित्स्यात्' इति भीतिरुद्वेगश्च ताभिः कृत इति भावः । ऋषिभिर्वसिष्ठादिभिः सकरुणं दयान्वितं यथा स्यादेवं दृष्टः । 'अहह कथमयं वराको जगदीशेन हरेण समूलमुन्मूलितः !' इति तेषां दया । अत्रोपपत्तिमाह—**शान्तेति ।** शान्तमुपशमवत् यदभ्यन्तरं तेन तत्त्वमनारोपितरूपं सारो बलं येषां तैः । शान्तमानसे रिपुनाशेऽपि करुणा युज्यत एव । सस्मितेन हास्यवता विष्णुना नारायणेन दृष्टः । 'यदयमधिकबलोऽसुरराजो हरेण ध्वस्तः, तन्मम दैत्यारेर्भारलाघवमेव जातम्' इत्युत्साह एव हासहेतुः । सगर्वैरहंकारान्वितैः दैत्यवीरैर्दृष्टः । गर्वे हेतुमाह—अस्त्रमाकृष्य कोदण्डादिकमुद्यम्योपशमितवधूसंभ्रमैः शान्तनिजकान्तोद्वेगैः । 'आः क इह मदस्त्रप्रभावाद्विपक्षपक्षप्रसर' इति, 'मा भैषीः' इति निजवधूमनुद्विग्नमानसां कुर्वाणैरिति भावः । देवताभिरिन्द्रादिभिः सानन्दं सहर्षं दृष्टः । अत्र प्रबलारातिवध एवानन्दहेतुः । सर्वत्र मयपुरदहन इत्यन्वीयते । 'संभ्रमोऽत्र यमिच्छन्ति भयमुद्वेगकारणम्' इत्यमरः (!) । असुरीत्यत्र 'पुंयोगादाख्यायाम्' (४।१।४८) इति ङीप् । मयो नाम दैत्यशिल्पी । तेन रचितं पुरं मयपुरम् । 'धूर्जटिर्नीललोहितः' इत्यमरः । भारतसंग्रामोऽपि देव्या द्रौपद्या पूर्ववैरात् सप्रेम दृष्टः । असुरीभिरिवासुरीभिर्दुर्योधनादिवधूभिः भयोद्वेगाभ्यां दृष्टः । कारुणिकैर्नारदादिभिः सदयं दृष्टः । कृष्णेन हसता दृष्टः । दैत्यवीरैर्घटोत्कचादिभिः सगर्वं दृष्टः । सानन्दमिन्द्रादिभिश्च दृष्ट इत्यपि कविना कटाक्षितमिति वदन्ति । अत एव पत्रावलीरूपा नान्दीयम् । तदुक्तं तत्रैव—'वाच्यार्थबीजरचिता शंकरादिपदान्विता । संयुक्ता

सुरपुरदहनावसरे ] देव्या सप्रेम दृष्टः, असुरीभिः 'इदं किम्' इति भयात् संभ्रमाच्च [ दृष्टः, ] शान्तान्तस्तत्त्वसारैः [ शान्तं अन्तस्तत्त्वं=अन्तःकरणं तदेव सारः येषां ते तैः ] ऋषिभिः सकरुणं [ दृष्टः ] सस्मितेन विष्णुना [ च दृष्टः ] सगर्वैः उपशमितवधूसम्भ्रमैः [ उपशमितः वधूनां सम्भ्रमो यैः ] दैत्यवीरैः अस्त्रं आकृष्य [ दृष्टः ] देवताभिश्च सानन्दं [ दृष्टः ] धूर्जटिः [ धूः=गङ्गा जटासु अस्येति तथोक्तः=शिवः ] युष्मान् पातु । स्रग्धरा वृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।' इति तल्लक्षणात् ।

पाठा०–१. 'शान्तोऽन्तस्तत्त्वसारैः'. २. 'सस्मितं च'. ३. 'आदायास्त्रं'. 'आदृष्टः शीघ्रमुच्चैः शमितनिजवधूसंभ्रमैः'.

( नान्द्यन्ते । )

सूत्रधारः—अलमतिप्रसङ्गेन[2] ।

---

चन्द्रपद्माभ्यां पत्रावल्यभिधीयते ॥' इति ॥ ३ ॥ **नान्द्यन्त इति** । नन्विदमसंगतम् । नहि नान्दीपाठानन्तरं सूत्रधारो रङ्गभूमिं प्रविशति । किंतु प्रविश्य पठति । न चान्येनैव नान्दी पठनीया । सूत्रधारपठनीयत्वेन तस्या उक्तत्वात् । 'सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः' इति वचनात् । उच्यते—नान्दी तावद्रङ्गप्रवेशानन्तरं सूत्रधारेणैव पठनीया । 'नान्द्यन्ते । सूत्रधार' इति सूत्रधारसाम्यात्स्थापके प्रयोगः । तदुक्तं तत्रैव—'नान्दीं प्रयुज्य निष्क्रामेत्सूत्रधारः सहानुगः । स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥ पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥' इति । अत एव कुत्रचित्पुस्तके 'नान्द्यन्ते स्थापकः' इत्येव पाठः । केचित्तु—नावश्यं नान्दी सूत्रधारेण पठनीया । किंतु मङ्गलार्था येनकेनचित्पठ्यते, सूत्रधारश्च रङ्गपूजार्थं प्रविष्ट इति स एव पठति । तदुक्तम्—'नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः ॥' इत्याहुः । तन्न । 'सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः' इति भरतविरोधात् । तत्र सूत्रधारस्योपलक्षणत्वे प्रमाणाभावात् । अन्ये तु—नान्द्यवसाने सूत्रधारः प्रविशति वदति वा । तदन्ते सूत्रधारस्यैव श्रुतत्वात्सापि तेनैव पठनीया । प्रथमं च सूत्रधार इति नोक्तम् । मङ्गलार्थं देवतानमस्कारादेरेव विधानादित्यूचुः । ननु प्रस्तावनायाः पूर्वं बहूनि नाट्याङ्गानि सन्ति तानि किमिति नोक्तानि । तदुक्तं तत्रैव—'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः । सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् ॥ स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ।' अत आह—**अलमिति** । अयमाशयः—पूर्वोक्ता-

---

पाठा०–१. नान्दी—

जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीजः ।
दामोदरो निजोदरगह्वरनिक्षिप्त[1]जगदण्डः ॥ १ ॥ ( १. 'निविष्ट'. )
जगति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् ।
मध्येपयः पयोधेरपर इवाम्भोनिधिः कृष्णः ॥ २ ॥

अपि च,

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ३ ॥'

२. 'अलमतिविस्तरेण'.

श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः ।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥ ४ ॥

(समन्तादवलोक्य ।) तत्रभवतः परिषदग्रेसरान्विज्ञाप्यं नः किंचिदस्ति ।

कुसुमाञ्जलिरपर इव प्रकीर्यते काव्यबन्ध एषोऽत्र ।
मधुलिह इव मधुबिन्दून्विरलानपि भजत गुणलेशान् ॥ ५ ॥

तदिदं कवेर्मृगराजलक्ष्मणो भट्टनारायणस्य कृतिं वेणीसंहारं नाम

---

न्यङ्गानि न भवन्ति । किंतु परिषदोऽभिमुखीकरणानि । सा चेत्स्वयमेव कृतावधाना नवनाटकदर्शनोत्सुका च तत्रान्यत्प्रयुज्यमानं रसभङ्गाय भवेदिति कृतं तत्प्रणयनेन । अन्यथा तस्या रसविच्छेदः स्यादिति । इदानीं व्यासप्रशंसामाह—**श्रवणेति** । तं कृष्णद्वैपायनं व्यासमहं वन्दे नमस्करोमि । यत्तदोर्नित्याभिसंबन्धादाह—यो भारतनामकममृतं विरचितवानकरोत् । आप्यायनादिकर्तृत्वेनामृतत्वं भारतस्य । कीदृशम् । श्रवणं कर्णस्तदेवाञ्जलिपुटं तेन पेयं श्राव्यमथ च पानीयम् । अन्यदप्यमृतमञ्जलिपुटेन पीयते । तं कीदृशम् । अरागं रागशून्यम् । विषयानुरागविहीनमित्यर्थः । अत एवाकृष्णं निष्कलुषम् । तदिह प्रतिपाद्यभारतकथाया आदिकर्ता व्यासस्तत्त्वविदिति तत्कीर्तनं शुभकृदेव भवतीति तदेव कृतमिति भावः ॥ ४ ॥ तत्रभवतो मान्यान् परिषदग्रेसरान् सभापुरोगान् । विज्ञाप्यं संबोध्यम् । **कुसुमाञ्जलिरिति** । एष काव्यबन्धोऽपरः कुसुमाञ्जलिरिव प्रकीर्यते विस्तार्यते । अत्र काव्यबन्धे विरलानपि स्वल्पानपि गुणकणान् भजत गृह्णीत । हे सभ्या इति शेषः । यथा मधुकराः कुसुमाञ्जलौ मधुबिन्दून्विरलानपि गृह्णन्ति तथेत्यर्थः । अनेन मदीयनाटके स्वल्पा अपि गुणा गुणिभिर्ग्राह्या इत्यौद्धत्यपरिहारोऽपि कृत इति ध्वनितम् ॥ ५ ॥ मृगराजलक्ष्मणः सिंहचिह्नस्य नारायणभट्टस्य । कृतिनाटकशब्दयो-

1 यः श्रवणाञ्जलिपुटपेयं [ श्रवणावेव अञ्जलिपुटं तेन पेयं=पातुं योग्यं ] भारताख्यं अमृतं विरचितवान् तं अरागं [ न वर्तते रागः=रजोगुणः यस्मिन् स तं ] अकृष्णं [ नास्ति कृष्णः=तमोगुणः यस्मिन् स तं ] कृष्णद्वैपायनं अहं वन्दे । आर्या जातिः । तल्लक्षणं च—'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या' इति । 2 मृगराजः=सिंह इति लक्ष्म=चिह्नं यस्य; ''कविसिंह'' इति विरुदभाजः । केचित्तु ''मृगराजलक्ष्मणा'' इत्यनेन 'सिंह' इत्युपाभिधत्वं तत एव ग्रन्थकर्तुर्वङ्गदेशीयत्वं च प्राहुः ।

---

पाठा०—१. 'अतृष्णम्'. २. 'समन्तादवलोक्य' इति क्वचिन्नास्ति. ३. 'तद्भवन्तः परिषदग्रेसराः, विज्ञाप्यं नः किंचिदस्ति', 'भवन्तः परिषदग्रेसराः, विज्ञाप्यं नः किंचिदस्ति;', 'तत्रभवन्तः परिषदग्रेसराः, विज्ञाप्यं नः किंचिदस्ति'; 'तत्रभवतः परिषदग्रेसरान्सर्वान्विज्ञापयामि'. ४. 'यदिदम्'. ५. 'रसकवेः'. ६. 'कृतिः'; 'अभिनवकृतिम्'.

नाटकं प्रयोक्तुमुद्यता वयम् । तदत्र[1] कविपरिश्रमानुरोधाद्वा उदात्तकथावस्तुगौरवाद्वा[2] नवनाटकदर्शनकुतूहलाद्वा[3] भवद्भिरवधानं दीयमानमभ्यर्थये ।

---

रजहल्लिङ्गतया सामानाधिकरण्यम् । **वेणीसंहारमिति** । वेण्या द्रौपदीकेशरचनाविशेषेण हेतुना संहारो विनाशो दुःशासनादीनां यत्र तत्तथा । यद्वा वेण्याः संहारो मोक्षणं यत्र तत्तथा । भारतानन्तरमिह वेणीमोक्षणकथनात् । **नाटक**मिति । तदुक्तं तत्रैव—'प्रकृतित्वादथान्येषां भूयो रसपरिग्रहात् । संपूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ॥ नाटके सूच्यमर्थं तु पञ्चभिः प्रतिपादयेत् । विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥ तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः । प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ॥' अङ्कद्वयस्यान्तरिति प्रथमेऽङ्के न कर्तव्य इत्यर्थः । 'अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना । अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कार्थस्य सूचना ॥ अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः । एभिः संसूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत् ॥ दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् । संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् । अङ्गेनैव निबध्नीयान्नैवाङ्केन कदाचन ॥ नाधिकारिवधः क्वापि त्याज्यमावश्यकं न च । एकाहाचरितैकार्थमित्थमासन्ननायकम् ॥ पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः । एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः ॥ पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं वरम् ॥' इति नाटकलक्षणं भरतोक्तम् । तत्रैव प्रसङ्गान्नायकनायिकयोर्लक्षणम्—'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः । रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ धृत्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः । शूरो दृश्यश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥ विनेयः शीलसंपत्तिर्मधुरः प्रियदर्शनः । त्यागः सर्वस्वदानं स्याद्दक्षः क्षिप्रकरो मतः ॥ प्रियंवदोऽनुत्कटवाक् सस्नेहो लोकरञ्जनः । मितप्रशस्तवाग्वाग्मी नित्यकर्मरतः शुचिः ॥ ख्यातवंशो रूढवंशः षोडशात्रिंशको युवा । वाङ्मनःकर्मभिर्यश्च न चलः स स्थिरो मतः ॥ धृतिः सर्वेषु या प्रीतिरुत्साहोऽग्लानिरेव च । स्मृतिः कालान्तरे ज्ञानं प्रज्ञा तीक्ष्णमतिर्मता ॥ कलाश्चात्र चतुःषष्टिर्मानश्चित्तसमुन्नतिः । शूरः सङ्ग्रामनिपुणो रूपवान्दृश्य उच्यते ॥ अतिप्रतापस्तेजस्वी शास्त्रचक्षुस्त्रयीपरः । आत्मवत्परभूतानि यः पश्यति स धार्मिकः ॥ प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः । तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ॥' अयमर्थः—नाटके भारतादिप्रसिद्धो राजर्षिर्दिव्यो वा नायकः कर्तव्यो न तु कविना स्वयमुत्पाद्य कथां कल्पितो नायकः कर्तव्य इति । 'स्वान्या साधारणस्त्रीति तद्गुणा नायिका त्रिधा । स्वकीया तत्र वक्तव्या मुग्धा मध्या

---

पाठा०—१. 'तत्र च'. २. 'कविपरिश्रमानुरोधादुदात्तकथावस्तुगौरवान्नवनाटकदर्शनकुतूहलाच्च'. ३. 'नवनाटककुतूहलात्'.

( नेपथ्ये । )

भाव, त्वर्यतां त्वर्यताम् । एते खल्वार्यविदुराज्ञया पुरुषाः सकल[1]मेव शैलूषजनं व्याहरन्ति—'प्रवर्त्यन्ताम[2]परिहीयमानमातोद्यविन्यासादिका विधयः । प्रवेशकालः किल [3]तत्रभगवतः पाराशर्यनारदतुम्बरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहित-

---

प्रगल्भिता ॥ शीलार्जवादिसंयुक्ताऽकुटिला च पतिव्रता । लज्जावती चापरुषा निपुणा च प्रियंवदा ॥ साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् । रूपकेषु च रंगेव कर्तव्या प्रहसं विना ॥ अन्यस्त्री द्विविधा प्रोक्ता कन्यकोढा तथापरा । रंगे प्रधने कर्तव्या वान्योढा नाट्यवेदिभिः ॥ कन्यानुरागमिच्छातः कुर्यादङ्गादिसंश्रयम् ॥' इति । 'नाटके वृत्तयः प्रोक्ताश्चतस्रो नाट्यवेदिभिः । भारती कैशिकी चैव सात्वत्यारभटी तथा ॥' तत्र शृङ्गारी कामकलावच्छिन्नो व्यापारः कैशिकी । 'विशोका सात्वती सत्वशौर्यत्यागार्जवैः पुनः । मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः । भवेदारभटी नाम नाट्ये तिस्रस्तु वृत्तयः ॥ भारती शब्दवृत्तिः स्याद्रसे रौद्रे च युज्यते । शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ॥ एवमङ्गानि कार्याणि प्रधानस्याविरोधतः । आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः ॥ अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् । यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ॥ यदा तु सरसं वस्तु मूलादेव प्रवर्तते । आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥ प्रत्यक्षनेतृचरितो बिन्दुव्यापिपुरःसरः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः । गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम् ॥ न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् । रसं वा न तिरोदध्याद्वस्त्वलंकारलक्षणैः ॥ एको रसोऽङ्गीकर्तव्यो वीरः शृङ्गार एव वा । अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् । शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः । बीभत्सोऽद्भुत इत्येवमष्टौ नाट्ये रसाः स्मृताः ॥' यद्यपि 'अविकारस्थितिः शान्तः शान्तस्तु नवमो रसः' इत्यस्ति, तथापि न स सर्वसंमतो न नाट्यविषयश्चेति न पृथगुक्तः स्थायिभावाभावादस्य नाट्यविषयता न संभवतीति । उदात्तं हृद्यम् । कथावस्तु कथाप्रधानं नायकः । तस्य गौरवादाह्लादात् ॥ नेपथ्यं रङ्गभूमिः । 'नेपथ्यं रङ्गभूमौ स्यान्नेपथ्यं तु प्रसाधने' इति विश्वः । भावो मान्यः । 'मान्यो भावेति वक्तव्यः' इत्यमरः । खलुशब्दो वाक्यभूषायाम् । आर्यश्चासौ विदुरश्चेति विशेषणसमासः । विदुरोऽत्र नायकः, तस्याज्ञया आदेशेन । शैलूषो नटः । अपरिहीयमानमपरित्यज्यमानं यथा स्यादेवम् । विधयः प्रकाराः । प्रवर्त्यन्ताम् । कीदृशाः । आतोद्यविन्यासो वीणादिवादनमादौ येषां ते तथा । 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः । किल निश्चये ।

---

पाठा०–१. 'सर्वमेव'. २. 'अपरिहीयमानम्' इति क्वचिन्नास्ति. ३. 'तत्रभवतः'.

काम्यया स्वयं प्रतिपन्नदौत्यस्य देवकीसूनोश्चक्रपाणेर्महाराजदुर्योधनशिबिरसंनिवेशं प्रति प्रस्थातुकामस्य' इति ।

**सूत्रधारः**—( आकर्ण्य । सानन्दम् । ) अहो नु खलु भोः, भगवता सकलजगत्प्रभवस्थितिनिरोधप्रभविष्णुना विष्णुनाद्यानुगृहीतमिदं भरतकुलं सकलं च राजचक्रमनयोः कुरुपाण्डवराजपुत्रयोराहवकल्पान्तानलप्रशमहेतुना स्वयं संधिकारिणा[1] कंसारिणा दूतेन । तत्किमिति पारिपार्श्विक[2], नारम्भयसि कुशीलवैः सह संगीतकमेलकम् ।

( प्रविश्य । )

**पारिपार्श्विकः**—भवतु । आरम्भयामि । कतमं समयमाश्रित्य गीयताम् ।

**सूत्रधारः**—नन्वमुमेव तावच्चन्द्रातपनक्षत्रग्रहक्रौञ्चहंससप्तच्छदकुमुदकोकनदकाशकुसुमपरागधवलितदिङ्मण्डलं स्वादुजलजला-

---

तुम्बरुर्मुनिविशेषः । 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः । भरतकुलं युधिष्ठिरादिवंशः । काम्या इच्छा । प्रतिपन्नदौत्यस्य अङ्गीकृतदूतकर्मणः । सूनोः पुत्रस्य । 'सूनुः पुत्रकनिष्ठयोः' इति विश्वः । शिबिरसंनिवेशः सैन्यविन्यासः । तं प्रति प्रवेशकालश्चक्रपाणेरित्यन्वयः ॥ 'अहो नु खलु भोः' इत्यव्ययसमुदायोऽत्याश्चर्याविष्कारे । निरोधो विनाशः । प्रभविष्णुना प्रभुणा । राजचक्रं क्षत्रियसंघः । आहवो युद्धम् । कल्पान्तानलः प्रलयाग्निः । स्वयं प्रतिपन्नदौत्येनेत्यन्वयः । कंसारिः कृष्णः । **पारिपार्श्विक इति** । 'सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह । काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः ॥' इति । भरतः कुशीलवो नटः । 'भरताखु कुशीलवाः' इत्यमरः । संगीतकमेलकम् । ऐक्यमिति यावत् ॥ नक्षत्र-

---

1 संधिः=उभयोः पक्षयोः एकीकरणं, तत्कारिणा । 2 पारिपार्श्विकः—परि=पार्श्वं यथा भवति तथैव वर्तितुं शीलमस्यास्तीति स तथोक्तः सूत्रधारात् किञ्चिदूनो नटविशेषः ।

---

पाठा०—१. 'काङ्क्षया'. २. 'स्वयम्' इति क्वचिन्नास्ति. ३. 'प्रतिपन्नदूत्यस्य'. ४. 'शिबिरं प्रति'. ५. 'भोः' इति क्वचिन्नास्ति. ६. 'जगदुत्पत्तिस्थिति'; 'जगत्प्रभवस्थिति'. ७. 'राजकम्'; 'राजन्यकम्'. ८. 'प्रशमनहेतुना अनेन'. ९. 'स्वयं प्रतिपन्न दौत्येन संधिकारिणा'. १०. ( 'नेपथ्ये । )'. ११. 'संगीतकम्'. १२. 'कम्'. १३. 'संगीतकमारम्भयामि'. १४. 'ग्रह' इति क्वचिन्नास्ति. १५. 'कोकनद' इत्येतस्य स्थाने 'पुण्डरीक'. १६. 'गगनदिङ्मण्डलम्'.

शयं शरत्समयमाश्रित्य प्रवर्त्यतां संगीतकम् । तथा ह्यस्यां शरदि,—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥ ६ ॥

**पारिपार्श्विकः**—( ससंभ्रमम् । ) भाव, शान्तं पापम् । प्रतिहतममङ्गलम् ।

**सूत्रधारः**—( सवैलक्ष्यस्मितम् । ) मारिष, शरत्समयवर्णनाशंसया हंसा धार्तराष्ट्रा इति व्यपदिश्यन्ते ।

**पारिपार्श्विकः**—न खलु न जाने । किंत्वमङ्गलाशंसयास्य वो वचनस्य यत्सत्यं कम्पितमिव मे हृदयम् ।

---

नभिन्यादि । ग्रहाः सूर्यादयः । क्रौञ्चः 'हंकूद' इति प्रसिद्धः पक्षी । सप्तच्छदः 'तिमन' इति प्रसिद्धो वृक्षः । 'रक्तोत्पलं कोकनदम्' इत्यमरः । 'तथा हि' इत्ययं शब्द उक्तविभावनार्थः । 'श्लेषच्छायोपशेषैश्च समुद्दिष्टं विसर्पति । यत्फलोदयपर्यन्तं तद्बीजमिति कीर्तितम् ॥' इति भरतात् श्लेषेण बीजमाह—**सत्पक्षा इति ।** धार्तराष्ट्रा हंसविशेषाः । कालवशात् शरन्माहात्म्यात् मेदिनीपृष्ठे निपतन्ति । मानसं सरः परिहृत्यायान्तीत्यर्थः । अथ च धार्तराष्ट्रा धृतराष्ट्रपुत्रा दुर्योधनादयो भूमौ पतन्तीत्यर्थः । कीदृशाः । सत्पक्षाः श्रेष्ठपक्षयुक्ताः श्रेष्ठसैन्यवन्तश्च । मधुरगिरो मधुरवाणीकाः । प्रसाधिता आशा दिशो यैस्ते तथा । पक्षे प्रकर्षेण साधिता आयत्तीकृता आशा दिशः प्रत्याशा वा यैस्ते तथा । मदोद्धता आरम्भा येषां ते । मदो हर्षोऽहंकारश्च । 'धार्तराष्ट्राः सितेतरैः' इत्यमरः ॥ ६ ॥ इह श्लोके प्रवर्तकरूपा प्रस्तावना । यदुक्तं तत्रैव—'प्रवृत्तकालमाश्रित्य

---

1 अत्र शरद्वर्णनया प्रकरणेन 'धार्तराष्ट्रादि'शब्दानां हंसाद्यर्थाभिधाने नियमनात् दुर्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः। 2 मारिषः—मर्षणात्=सहनात् मारिषः, यद्वा मा रेषति=न हिनस्ति दुष्टाभिनयादिना रङ्गस्थानां शान्तिं मनोविनोदं चेति तथाविधः ।

---

पाठा०—१. 'हंसान्धार्तराष्ट्रानिति व्यपदिशामि न धृतराष्ट्रसुतान्'. २. 'तत्किं शान्तं पापं प्रतिहतममङ्गलम्'; 'ननु राजपुत्रास्तत्किं प्रलपसि शान्तं पापं प्रतिहतममङ्गलमिति'. ३. 'भाव, न खलु न जाने । किंत्वमङ्गलत्वादस्य वचसो यत्सत्यं प्रकम्पितमिव मे हृदयम्'; 'न खलु जाने । अमङ्गलाशंसयास्य वो वचनस्य यत्सत्यं कम्पितमिव मे हृदयम्'; 'भवतु न जाने । अमङ्गलाशंसयास्य वो वचनस्य कम्पितमिव मे हृदयम्'; 'भवतु न जाने । किंत्वमङ्गलाशंसयास्य वचनस्य कम्पितमिव मे हृदयम्'; 'न जाने । अमङ्गलाशंसयास्य वो वचनस्य कम्पितमिव मे हृदयम्'.

**सूत्रधारः**—मारिष, ननु सर्वमेवेदानीं प्रतिहतममङ्गलं स्वयं [1]प्रतिपन्नदौत्येन संधिकारिणा कंसारिणा । तथा हि—

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
[1]रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु [2]कुरुराजसुताः सभृत्याः ॥ ७ ॥

( [3]नेपथ्ये । साधिक्षेपम् । )

[2]आः दुरात्मन् वृथामङ्गलपाठक शैलूषापसद—

---

वर्णना या विधीयते । तदाश्रयस्य पात्रस्य प्रवेशेन प्रवर्तकम् ॥' इति । आर्याच्छन्दः । यत्र पटाक्षेपेण पात्रप्रवेशस्तत्र प्रविश्येति प्रयुज्यते ॥ 'शान्तं पापमनाकाङ्क्ष' इति भरतः । तथा च न वक्तव्यमित्यर्थः ॥ सवैलक्ष्यं सलज्जम् । 'किंचिन्न्यूनस्तु मारिषः' इत्यमरः । मारिष एव मर्षणान्मार्ष इति । 'मार्षो मारिष इत्यपि' इति शब्दभेदः ॥ न खलु न जाने किंतु जानाम्येव । खलुशब्दो निषेधे । 'अलंखल्वोः प्रतिषेध–' (३।४।१८) इति सूत्रम् । वो युष्माकम् । 'यत्सत्यमसंभाव्येऽर्थे' इति भरतः । तथा च यत्सत्यम् । असंभावनीयमिदमित्यर्थः ॥ **निर्वाणेति ।** निर्वाणो निस्तेजीकृतो वैरमेव दहनो यैस्ते तथा । प्रशमादुपशमात् । विनाशादिति यावत् । रक्तेभ्यः सानुरागेभ्यः प्रसाधिता दत्ता भूर्यैस्ते तथा । अथ च रक्तेन रुधिरेण प्रसाधिताऽलंकृता भूर्यैस्ते तथा । विग्रहो युद्धं शरीरं वा । स्वस्थाः सुस्थिता मृताश्च । 'विग्रहः समराङ्गयोः' इति धरणिः । 'सुस्थिते च मृते स्वस्थः' इति विश्वः ॥ ७ ॥ लेशगण्डोऽयम् । यदुक्तं तत्रैव–'द्व्यर्थता यत्र वाक्यानां लेशेनापि प्रतीयते । शब्दभङ्गीगतो योंऽशो लेशगण्डः स उच्यते ॥' आशब्द आक्षेपे ।

---

1 अत्र 'रक्तादि'पदानां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम्; तल्लक्षणं तु—'वचः सातिशयं श्लिष्टं नानाबन्धसमाश्रयम् । पताकास्थानकमिदं द्वितीयं परिकीर्तितम्' ॥ इति । श्लोके चास्मिन् वैरिवैकृतादिविभावो रौद्रो रसः । 2 अत्र सूत्रधारवाक्यस्य 'कुरुराजसुताः' इति पदार्थमादाय पात्रस्य भीमस्य प्रवेशः, अत एव वाक्यार्थसूचितः कथोद्धातः; तल्लक्षणं च—'सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा । भवेत्पात्रप्रवेशश्चेत् कथोद्धातः स उच्यते' ॥ इति । 3 नेपथ्यं=रङ्गस्थलस्य यवनिकान्तरितो कुशीलवाद्यवस्थानप्रदेशः । 'कुशीलवकुटुम्बस्य स्थली नेपथ्य इष्यते' इति तल्लक्षणात् ।

---

पाठा०–१. 'प्रतिपन्नदौत्येन' इति क्वचिन्नास्ति. २. 'आः पाप दुरात्मन्'.

लाक्षागृहानल-विषान्न-सभाप्रवेशैः
प्राणेषु वित्त[1]निचयेषु च नः प्रहृत्य ।
[2]आकृष्य पाण्डववधूपरिधानकेशा-
न्स्वस्था [3]भवन्ति मयि जीवति धार्तराष्ट्राः ॥ ८ ॥

( [4]सूत्रधारपारिपार्श्विकावाकर्णयतः । )

पारिपार्श्विकः—[5]भाव, कुत एतत् ? ।

सूत्रधारः—([6]पृष्ठतो विलोक्य । ) अये, [7]कथमयं वासुदेवगमनात् कुरुसंधानममृष्यमाणः पृथुललाटतटघटितविकट[8]भृकुटिना दृष्टिपातेनापिबन्निव नः सर्वान्सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिवर्तते। तन्न युक्तमस्य पुरतः स्थातुम् । [9]तदित आवामन्यत्र गच्छावः ।

( इति निष्क्रान्तौ । )

प्रस्तावना ।

---

शैलूषो नटः । अपसदोऽधमः । **लाक्षेति** । जतुगृहाग्निविषलड्डुककपटद्यूतादिभिरस्मान् वित्तादिषु प्रहृत्येत्यन्वयः । पाण्डववधूर्द्रौपदी । परिधानं परिधानीयवस्त्रम् ॥ ८ ॥ इष्टावमाने विद्धकम् ॥ यदुक्तं तत्रैव—'नाटकीयफले हेतुभूतस्याध्यक्षकीर्तनम् । आफलोदयमुत्साहावमानाभ्यां हि विद्धकम् ॥' अये इति निपातो व्यासङ्गादिनानाकलितस्याकलने संभ्रमाभिधायी । 'अये चित्रेऽवधारणे' इति भरतः । कुटिलभ्रूभङ्गो भ्रुकुटिः । नोऽस्मान् । दृष्टिपातेनालोकितेन । 'पृथुललाटे'त्याद्यस्यैव विशेषणम् । इत एवाभिवर्तत इहैव तिष्ठति ॥ निष्क्रान्तौ सूत्रधारपारिपार्श्विकौ ॥ **प्रस्तावनेति** । प्रस्तावनाऽऽमुखसंधिपर्यायः । यदुक्तं तत्रैव—'सूत्रधारेण सहिताः संलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्विक एव वा ॥ आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥' इति । इयं प्रस्तावना वाक्यार्थकथोद्घातरूपा । 'सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा । गृहीत्वा

---

1 अत्र वैरप्रकाशनेन आत्मसंभावनया च वैरोद्धारप्रकारस्य इतिवृत्तस्य सूचनारूप उपक्षेपः; 'काव्यार्थस्य समुत्पत्तिः उपक्षेप इति स्मृतः ।' इति तल्लक्षणात् ।

---

पाठा०--१. 'वित्तनिवहेषु'. २. आकृष्टपाण्डववधूपरिधानकेशाः'. ३. 'भवन्तु'. ४. 'सूत्रधारपारिपार्श्विकौ—आकर्ण्य ।'; 'सूत्रधारः—( आकर्ण्य सभयं नेपथ्याभिमुखमवलोक्य । )'. ५. 'आः कुत एतत्'. ६. 'पृष्ठतोऽवलोक्य, सभयम्'. ७. 'एष खलु'. ८. 'विकटकीनाशतोरणत्रिशूलायमानभीषणभ्रुकुटिरापिबन्निव नः सर्वान्दृष्टिपातेन'. ९. 'तदित आवाम्' इत्यादि क्वचिन्न वर्तते.

( ततः प्रविशति सहदेवेनानुगम्यमानः क्रुद्धो भीमसेनः । )

**भीमसेनः**—आः[1] दुरात्मन् वृथामङ्गलपाठक शैलूषापसद,—(‘लाक्षागृहानल–’ ( १।८ ) इत्यादि पुनः पठति । )[2]

**सहदेवः**—( सानुनयम् । ) आर्य, मर्षय मर्षय । अनुमतमेव नो भरतपुत्रस्यास्य वचनम् । पश्य,—(‘निर्वाणवैरदहनाः’ (१।७) इति पठित्वान्यथाभिनयति ।[3] )

**भीमसेनः**—(सोपालम्भम्[4] । ) न खलु न खल्वमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणाम् । संधेयास्ते[5] भ्रातरो युष्माकम् ।

**सहदेवः**—( सरोषम् । ) आर्य,

धृतराष्ट्रस्य तनयान्कृतवैरान्पदे पदे ।
राजा न चेन्निषेद्धा स्यात्कः क्षमेत तवानुजः ॥ ९ ॥

**भीमसेनः**—एवमिदम्[6] । अत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः[1] । पश्य,—

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम् ।

---

प्रविशेत्पात्रं कथोद्धातः स उच्यते ॥’ इति भरतः ॥ **प्रविशतीति** । सर्वत्र प्रवेशे पूर्वसूचितस्यान्वयः । ‘नासूचितस्य पात्रस्य प्रवेशः’ इति भरतवचनात् ॥ मर्षय क्षमस्व । भरतपुत्रस्य नटस्य । अन्यथा मरणार्थतया ॥ सोपालम्भं विसंवादसहितम् । वीप्सितो नखलुशब्दोऽत्यन्तनिषेधवचनः ॥ **धृतराष्ट्रस्येति** । पदे पदे । प्रतिस्थानमित्यर्थः । चेच्छब्दो यद्यर्थे । निषेद्धा निषेधकः ॥ ९ ॥ इह श्लोके यद्यपि वाक्ये गर्भितनामालंकारदोषस्तथापि रसान्तरद्योतनाय तद्वाक्यमिति न दोषकक्षामवगाहत इत्यवधेयम् ॥ इह ‘अहं भिन्नो भवद्भ्यः’ इत्यनेन भेदसंधिः । यदाह—‘भेदस्तु भिन्नता’ इति । प्रभृतिशब्द आरम्भपर्यायः ॥ **प्रवृद्धमिति** । प्रवृद्धमुपचितम् । खलु निश्चये । कुरुभिरिति

---

1 अत्र भेदाख्यं सन्ध्यङ्गम्; ‘भेदः संहतभेदनम्’ इति तल्लक्षणात् ।

---

पाठा०–१. ‘आः पाप दुरात्मन्’. २. ‘-‘लाक्षागृहानल–’ इति पूर्वोक्तं पठति’. ३. ‘सभृत्याः कुरवः क्षतजालंकृतवसुंधराः क्षतशरीराश्च स्वर्गस्था भवन्त्विति ब्रवीति’. ४. ‘सावेगम्’. ५. ‘यतः संधेयास्ते भ्रातरो युष्माकम्’; ‘संधेयाश्च ते भ्रातरो युष्माकम्’. ६. ‘( सरोषम् । ) एवमिदम्’.

जरासंधस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा संधिं भीमो विघटयति यूयं घटयत ॥ १० ॥

सहदेवः—( सानुनयम् । ) आर्य, एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः ।

भीमसेनः—किं नाम कदाचित्खिद्यते गुरुः? । गुरुः खेदमपि जानाति? । पश्य,—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ ११ ॥

---

सहार्थे तृतीया । आर्यो राजा । किरीटी अर्जुनः । युवां नकुलसहदेवौ न हेतू भवतः । विरूढं जातं स्मृतं च । 'संधिर्ना संघटनके संधानेऽपि च कथ्यते' इति विश्वः ॥ १० ॥ **तथाभूतामिति** । तथाभूतां ऋतुमतीं नग्नां च । पाञ्चालतनयां द्रौपदीम् । वन उषितमस्माभिर्वासः कृतः । तद्दृष्ट्वा स्थितमवस्थानं कृतं तद्दृष्ट्वेत्यन्वयः । अनुचितारम्भाः कन्यालंकरणादिकास्तैर्निभृतं गुप्तं यथा स्यादेवम् । मयि खिन्नेऽपि सति गुरुरद्यापि कुरुषु खेदं न वहतीत्यन्वयः ॥ ११ ॥

---

1 पुरा तु बृहद्रथो नाम मगधदेशराजा 'पत्नीभ्यां नातिवर्तिष्ये' इति समयं कृत्वा काशिराजस्य यमजे कन्ये चोपयेमे; कृतेष्वपि पुत्रकामादियष्टिषु राजा पुत्रं नाससाद । उपायनादिभिश्च परितोषितश्चण्डकौशिकमुनिः आम्रफलमेकं राज्ञे प्रादात् । राज्ञीभ्यां तत् फलं द्विधा कृत्वा भक्षितं, तेन च गर्भिण्यौ राज्ञ्यौ यथासमयमागते सति सजीवे शरीरशकले प्राजायेतां; ते च शकले विधानबलचोदिता जरा नाम राक्षसी संयोजयामास । "जरया संधितो यस्मात् 'जरा-संधो' भवत्वयम् ।" अत एव च तस्य 'जरासन्ध' इति नामाप्यभूत् ।

---

पाठा०–१. 'च कुरुत'. २. 'सहदेवः—एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः'. ३. 'भीमसेनः—( सहासम् । ) किं नाम मयि खिद्यते गुरुः । ( सामर्षम् । ) गुरुः खेदमपि जानाति'; 'भीमसेनः—किं नाम मयि खिद्यते गुरुः । वत्स, गुरुः खेदमपि जानाति'; 'भीमसेनः—( सबाष्पक्रोधम् । ) किं नाम कदाचित्खिद्यते गुरुः । ( सामर्षम् । ) वत्स, गुरुः खेदमपि जानाति'; 'भीमसेनः—( सहासम् । ) किं किम्, गुरुः खेदमपि जानाति'. ४. 'वहति'.

तत्सहदेव, निवर्तस्व । एवं चापि[1] चिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद्विज्ञापय राजानम् ।

**सहदेवः**—आर्य[2], किमिति ? ।

**भीमसेनः**—

युष्मच्छासनलङ्घनांहसि[3] मया मग्नेन नाम स्थितं[2]
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासित[4]शोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥ १२ ॥

( इत्युद्धतं[5] परिक्रामति । )

**सहदेवः**—( तमेवानुगच्छन्नात्मगतम् । ) अये, कथमार्यः पाञ्चाल्याश्चतुःशालकं प्रति प्रस्थितः[6] ! । भवतु तावदहमत्रैव तिष्ठामि । ( इति स्थितः । )

**भीमसेनः**—( प्रतिनिवृत्त्या[7]वलोक्य च । ) सहदेव[3], गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि ।

---

**युष्मदिति** । अंहसि पापे । नाम प्राकाश्ये । 'नाम प्राकाश्यसंभाव्योपगमे कुत्सने तथा' इति विश्वः । विगर्हणा निन्दा । स्थितिमतां धैर्यवताम् । क्रोधेनोल्लासिता समुत्तोलिता शोणितेनारुणा रक्ता गदा यस्य । उच्छिन्दतो नाशयतः । दिवसं व्याप्य । 'कालाध्वनोरत्यन्तसंयोगे' ( २।३।५ ) इति द्वितीया । अद्येदानीम् । 'इदानीमद्य' इति कलापसूत्रम् । अस्मिन्नहनीत्यर्थेऽनन्वयः स्यादित्यवधेयम् ॥ १२ ॥ इह परिकररूपः संधिः । यदुक्तं तत्रैव—'कार्याकार्यस्य हेतूनामुक्तिः परिकरो मतः' इति ॥ चतुःशालकं 'चउसार' इति प्रसिद्धं गृहम् ॥ अगारं गृहम् । आयुधसहा-

---

1 युष्मच्छासनलङ्घनांहसि—युष्मच्छासनस्य=भवदाज्ञाया लङ्घनं=उल्लङ्घनम्, अतिक्रमणमित्यर्थः, तज्जनितं यत् अंहः=पापं तस्मिन् । 2 अमर्षनामा चात्र भावः; 'अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता । तत्र स्वेद-शिरःकम्प-तर्जना-ताडनादयः ॥' इति तल्लक्षणात् । 3 अत्र परिवर्तकाख्यः सात्त्वतीविशेषः; तल्लक्षणं च—'प्रारब्धादन्यकार्याणां कारणं परिवर्तकः ।' इति ।

---

पाठा०—१. 'चातिचिरप्रवृद्धामर्षोद्दीपितस्य'. २. 'आर्य किं विज्ञापयामि'. ३. 'लङ्घनाम्भसि'. ४. क्रोधोच्छ्वासित; 'हेलोल्लासित'. ५. 'इति साटोपं परिक्रामति'; 'इत्युक्त्वा परिक्रामति'. ६. 'प्रविष्टः'. ७. 'परानिवृत्य'.

सहदेवः—आर्य, नेदमायुधागारम्, पाञ्चाल्याश्चतुःशालकमिदम् ।

भीमसेनः—(सवितर्कम् ।) किं नाम नेदमायुधागारम्? पाञ्चाल्याश्चतुःशालकमिदम्? (विचिन्त्य, सहर्षम् ।) आमन्त्रयितव्यैव मया पाञ्चाली । (सप्रणयं सहदेवं हस्ते गृहीत्वा ।) वत्स, आगम्यताम् । यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु ।

(उभौ प्रवेशं नाटयतः । भीमसेनः सक्रोधं भूमावुपविशति ।)

सहदेवः—(ससंभ्रमम् ।) आर्य, इदमासनमास्तीर्णम् । अत्रोपविश्यार्यः पालयतु कृष्णागमनम् ।

भीमसेनः—(उपविश्य स्मृत्वा ।) वत्स, कृष्णागमनमित्यनेनोपोद्घातेन स्मृतम् । अथ भगवान्कृष्णः केन पणेन संधिं कर्तुं सुयोधनं प्रति प्रहितः? ।

सहदेवः—आर्य, पञ्चभिर्ग्रामैः ।

योऽसद्वितीयः ॥ आः स्वीकारे आमन्त्रयितव्या संवेदनीया ॥ कृष्णागमनं द्रौपद्यागमनमथ च हरेरागमनम् ॥ उपोद्घात उक्तिः । तदुक्तममरे—'उपोद्घात उदाहारः' इति । यद्वा प्रकृतानुकूलिनी चिन्ता उपोद्घातः । भगवानैश्वर्यादिमान् इह श्रीकृष्णो निगूढार्थो दूतः । यदुक्तं तत्रैव—'उद्देश्यकार्याबाधेन विपक्षे नायके स्वयम् । वाग्युद्धनिरतो यस्तु स निगूढार्थ उच्यते ॥' इति । पञ्चग्रामदानादानेन तयोस्तेन वैरप्रकाशनात् । 'अहहेत्यद्भुते खेदे'

1 'वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्यः' इत्युक्तत्वादनुजस्य भीमेन वत्सेति संबोधनं युक्तम् ।

पाठा०-१. 'सहदेवः—आर्य, नेदमायुधागारम् । भीमः—किं तर्हि । सहदेवः—पाञ्चाल्याश्चतुःशालकमिदम्'. २. 'सवितर्कम्' इति क्वचिन्नास्ति. ३. '(किंचिद्विहस्य ।)'. ४. 'एव' इति क्वचिन्नास्ति. ५. '(सहदेवं हस्ते गृहीत्वा ।) वत्स, यदार्यः कुरुभिः संधानमिच्छन्नस्मान् पीडयति । पश्यतु । (उभौ—प्रवेशं नाटयतः ।) सहदेवः—आर्य, इदमासनमास्तीर्णम् । अत्रोपविशत्वार्यः । पालयतु कृष्णागमनम्'. '(सप्रणयं सहदेवं हस्ते गृहीत्वा ।) वत्स, आगम्यताम् । सहदेवः—यदादिशत्यार्यः । भीमसेनः—वत्स, यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु । (परिक्रम्य उभौ गृहप्रवेशं नाटयतः । भीमः सक्रोधं भूमावुपविशति ।) सहदेवः—(ससंभ्रमम् ।) आर्य, इदमासनमास्तीर्णम् । अत्रोपविश्यार्यः पालयतु कृष्णागमनम् ।'. ६. 'अत्रोपविश्य मुहूर्तमार्यः'. ७. 'उपविश्य स्मृत्वा ।' इति क्वचिन्नास्ति. ८. 'कथोद्घातेन'. ९. तत्स्मृतम्'. १०. 'प्रकारेण'. ११. 'प्रेषितः'.

**भीमसेनः**—( कर्णौ पिधाय । )अहह[1], देवस्याजातशत्रोरप्ययमीदृशस्तेजोपकर्ष इति यत्सत्यं कम्पितमिव मे हृदयम् । ( परिवृत्य स्थित्वा । ) तद्वत्स, न[2] त्वया कथितं न च मया भीमेन श्रुतम्,—

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥ १३ ॥

( नेपथ्ये । )

स[3]मस्ससदु समस्ससदु भट्टिणी । [ समाश्वसितु समाश्वसितु भट्टिनी । ]

**सहदेवः**—( नेप[4]थ्याभिमुखमवलोक्यात्मगतम् । )अये, कथं याज्ञसेनी मु[5]हुरुपचीयमानबाष्पपटलस्थगितनयना आर्यसमीपमुपसर्पति ? । तत्कष्टतरमापतितम् ! ।

य[1]द्वैद्युतमिव ज्योतिरा[6]र्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥ १४ ॥

( ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च । )

( द्रौपदी सा[7]स्रं निःश्वसिति । )

---

इत्यमरः । यत्सत्यं निश्चये । तदुक्तं तत्रैव—'यत्सत्यमिति भावार्थम्' ॥ **यत्तदूर्जितमिति** । ऊर्जितं बलवत् । क्षात्रं क्षत्रियसंबन्धि । दीव्यता अक्षैर्द्यूतेन क्रीडमानेन । 'दिवः कर्म च' इति चकारात्तृतीया । नूनं निश्चये । तदपि तेजः ॥ १३ ॥ नेपथ्ये । भट्टिनि, समाश्वसिहि समाश्वसिहि । आत्मगतम् । 'यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते' इति भरतः । याज्ञसेनी द्रौपदी । अश्रुणः पूर्वावस्था बाष्पः । स्थगितं पिहितम् ॥ **यद्वैद्युतमिति** । वैद्युतं विद्युत्प्रभवम् ।

---

1 अत्र दिष्टाख्यं लक्षणाङ्गम्; 'देशकालस्वरूपेण वर्णना दिष्टमुच्यते ।' इति तल्लक्षणात् ।

---

पाठा०—१. 'अहह, हन्त, देवस्य'; 'अहह, कथं तस्य देवस्य'. २. 'न मया श्रुतं न त्वया कथितम्'; 'न त्वया कथितं न च भीमसेनेन श्रुतम्'. ३. समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णुं णिचाणुबद्धकुरुवेरो कुमालो भीमसेणो ।'. ४. 'कर्णं दत्वा, नेपथ्याभिमुखमवलोक्य, आत्मगतम्'. ५. 'मुहुर्मुहुरुपचितबाष्पपटलस्थगितनयना आर्यस्य समीपं समुपसर्पति । तत्कष्टात्कष्टतरमापतितम्'; 'मुहुरुपचीयमानबाष्पपटलनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम्'; 'मुहुरुपचीयमानबाष्पपटलावृतनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम्'. ६. 'आर्यक्रोधेन संभृतम्'. ७. 'सबाष्पं निःश्वसिति'.

**चेटी**—समस्ससदु समस्ससदु भट्टिणी। अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुरुवेरो कुमालो भीमसेणो[1]। [ समाश्वसितु समाश्वसितु भट्टिनी। अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेनः। ]

**द्रौपदी**—हञ्जे बुद्धिमदिए, होदि एदं जइ महाराओ[2] पडिऊलो ण भवे। ता णाहं पेक्खिदुं तुवरदि मे हिअअं। आदेसेहि मे णाहस्स वासभवणं। [ हञ्जे बुद्धिमतिके, भवत्येतद्यदि महाराजः प्रतिकूलो न भवेत्। तन्नाथं प्रेक्षितुं त्वरते मे हृदयम्। आदेशय मे नाथस्य वासभवनम्। ]

( इति परिक्रामतः। )

**चेटी**—एदु एदु भट्टिणी। [ एत्वेतु भट्टिनी। ]

**चेटी**—एदं वासभवणं। एत्थ पविसदु भट्टिणी। [ एतद्वासभवनम्। अत्र प्रविशतु भट्टिनी। ]

**द्रौपदी**—हञ्जे, कहेहि णाहस्स मह आगमणं। [ हञ्जे, कथय नाथस्य ममागमनम्। ]

**चेटी**—जं देवी आणवेदि। ( इति परिक्रम्योपसृत्य च। ) जअदु जअदु कुमालो। [ यद्देव्याज्ञापयति। जयतु जयतु कुमारः। ]

---

आर्ये भीमे। संभृतं जातम्। प्रावृट् वर्षाकालः। नूनं निश्चये ॥ १४ ॥ द्रौपदी। सास्रं सनयनजलम्। अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेनः। अत्र 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः ॥ हञ्जे बुद्धिमतिके, अस्त्येवैतद्यदि महाराजः प्रतिकूलो न भवेत्। तन्नाथं प्रेक्षितुं त्वरते मम हृदयम्। आदेशय मे नाथस्य वासभवनम्। अत्र 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः ॥ एतु एतु भर्तृका एतद्वासभवनम्। अत्र प्रविशतु भट्टिनी। अत्र एतु आगच्छतु ॥ हञ्जे, कथय नाथस्य ममागमनम् ॥ यद्देव्याज्ञापयति। जयतु जयतु

---

पाठा०-१. 'द्रौपदी—हञ्जे, होदि एदं जइ महाराओ पडिऊलो ण भवे। चेटी—एसो कुमालो चिट्ठदि। ता णं उवसप्पदु भट्टिणी। द्रौपदी—हञ्जे, एवं करेम्ह। ( उभे परिक्रामतः। ) चेटी—जअदु जअदु कुमालो। भीमः—( अपश्यन्निव 'यत्तदूर्जितम्' इति पुनः पठति। )' २. 'महाराअस्स पडिऊलो हुविस्सदि'.

( भीमसेनोऽशृण्वन् 'यत्तदूर्जितम्' (१।१३) इति पुनः पठति । )

**चेटी**—(परिवृत्य ।) भट्टिणि, पिअं दे णिवेदेमि । परिकुविदो[1] विअ कुमालो लक्खीअदि । [ भट्टिनि, प्रियं ते निवेदयामि । परिकुपित इव कुमारो लक्ष्यते । ]

**द्रौपदी**—हञ्जे, जइ एवं ता अवहीरणा वि एसा मं आसासअदि । ता एअंते[2] उवविट्टा भविअ सुणुमो दाव णाहस्स ववसिदं । [ हञ्जे, यद्येवं तदवधीरणाप्येषा मामाश्वासयति । तदेकान्त उपविष्टा भूत्वा शृणुमस्तावन्नाथस्य व्यवसितम् । ]

( उभे[3] तथा कुरुतः । )

**भीमसेनः**—( सहदेवमधिकृत्य[4] । ) किं नाम पञ्चभिर्ग्रामैः संधिः ।

> मथ्नामि कौरवशतं समरे न कोपा-
> दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
> संचूर्णयामि गदया न सुयोधनोरू
> संधिं करोतु भवतां नृपतिः पणेन ॥ १५ ॥

**द्रौपदी**—( सहर्षम्[5] । जनान्तिकम् । ) णाह[6], अस्सुदपुव्वं खु दे

---

कुमारः । भट्टिनि, प्रियं ते निवेदयामि । परिकुपित इव कुमारभीमसेनो लक्ष्यते । अत्र जयत्वित्यत्र यद्यपि जयतेरनभिधानादुत्वं न भवतीति रूपावतारे दृश्यते तथापि तस्य प्रायिकत्वम् । प्राकृते जयदु जयत्वित्यस्याभिधानात् । प्राकृतस्य च 'तद्भवस्तत्समो देशीत्यनेकः प्राकृतः क्रमः' इति नियमात् । संस्कृतक्रमवत्त्वात् । अन्यथा क्रमहान्यापत्तेः। किंच। 'जयतात्······भवानीपतिः' (७।१।३५) इत्यादि-दर्शनाज्जयत्विति साधु । अन्यथा 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति तातङोऽप्राप्तिः । जयतीत्यत्रोकारस्याकरणादित्यवधेयम् ॥ हञ्जे, यद्येवं ततोऽवधीरणाप्येवं तस्य मां समाश्वासयति । तदेकान्त उपविष्टा भूत्वा शृणुमस्तावन्नाथस्य व्यवसितम् । कोऽन्यो मम परिभवेन खिद्यते । अत्र व्यवसितमध्यवसायः ॥ **मथ्नामीति ।** 'वर्तमानसामीप्ये वर्तमानवद्वा' ( ३।३।१३१ ) इति भविष्यति लट् । नकारः सर्वत्र शिरश्चालने । मथ्नामि विमर्दयिष्यामि । उरस्तो वक्षःस्थलात् । पञ्चम्यां तसिः । सप्तम्यां

---

**पाठा०**—१. 'चेटी—देवि, परिकुविदो विअ कुमालो लक्खिअदि' २. 'एअंते' इति क्वचिन्नास्ति. ३. 'इति तथा कुरुतः'; 'तथा कुरुतः'. ४. 'सक्रोधम्, सहदेवमधिकृत्य ।'. ५. 'श्रुत्वा । सहर्षम्'. ६. 'णाह, अस्सुदपुव्वं एदिसं वअणं । ता पुणो वि भणाहि'.

एदिसं वअणं । ता पुणो पुणो दाव भणाहि । [ नाथ, अश्रुतपूर्वं खलु ते ईदृशं वचनम् । तत्पुनःपुनस्तावद्भण । ]

( भीमसेनोऽश्रृण्वन्नेव 'मथ्नामि कौरवशतं-' ( १।१५ ) इति पुनः पठति । )

सहदेवः—आर्य, किं महाराजस्य संदेशोऽयमार्येणाव्युत्पन्न इव गृहीतः ? ।

भीमसेनः—का पुनरत्र व्युत्पत्तिः ।

सहदेवः—आर्य, एवं गुरुणा संदिष्टम् ।

भीमसेनः—कस्य ? ।

सहदेवः—सुयोधनस्य ।

भीमसेनः—किमिति ? ।

सहदेवः—

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान्कंचिदेकं च पञ्चमम् ॥ १६ ॥

भीमसेनः—ततः किम् ? ।

---

वा तरविः । पिबामि संचूर्णयामीत्यत्रापि भविष्यति लट् ॥ १५ ॥ इह प्रतिमुखरूपः संधिः । यदुक्तं तत्रैव—'आनुषङ्गिककार्येण क्रियते यत्प्रकाशनम् । नष्टस्येवेह बीजस्य तद्धि प्रतिमुखं मतम् ॥' व्यवसायनामा वचनसंधिरयम् यदा—'प्रतिज्ञाहेतुसंयुक्तं व्यवसायो वचो मतः' इति । जनान्तिकम् । 'अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्' इति भरतः । अश्रुतपूर्वः खल्वीदृश आलापो नाथस्य । तन्नाथ, पुनःपुनस्तावदेवं भण । अत्र 'खलु' निश्चये वाक्यभूषायां वा अव्युत्पन्नः । पञ्चग्राममात्रम् । इह भाषणरूपो निर्वहणसंधिः । यदुक्तं तत्रैव—'सामवादादिसंपन्नं भाषणं भाषणं मतम् ॥' इन्द्रप्रस्थमिति ॥ १६ ॥ विषभोजनेत्यादौ

---

1 'आर्य, किम्' इत्यत आरभ्य 'युष्मान् ह्रेपयति' ( १।१७ ) इत्यन्तेन युक्त्याख्यं सन्ध्यङ्गम्; तल्लक्षणं—'संप्रधारणमर्थानां युक्तिः' इति ।

---

पाठा०-१. 'भीमः—सहदेव, पश्य । ('मथ्नामि कौरवशतं' इत्यादि पुनः पठति ।)'. २. 'अयमार्येण'. ३. 'एवं'. ४. 'तत्र'. ५. 'आर्य' इति क्वचिन्नास्ति. ६. 'आर्येण'. ७. 'भीमसेनः—किमिति' इति क्वचिन्नास्ति. ८. 'देहि मे चतुरो ग्रामान्पञ्चमं कंचिदेव तु'.

**सहदेवः**—तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदा[1]हद्यूतसभाद्यपकारस्थानोद्धाटनमेवेदं मन्ये[2] ।

**भीमसेनः**—( साटोपम् । ) वत्स, एवं कृते किं भवति[3] ? ।

**सहदेवः**—आर्य, एवं कृते [4]लोके तावत्स्वगोत्रक्षयाशङ्कि हृदय[5]मोविष्कृतं भवति, कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता भवति ।

**भीमसेनः**—मू[6]ढ, सर्वमप्येतदनर्थकम् । कुरुराजस्य तावदसंधेयता तदैव [7]प्रतिपादिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातम् । [8]लोकेऽपि च धार्तराष्ट्रकुलक्षयः किं लज्जाकरो भवताम् ? । अपि च रे मूर्ख,—

> युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
> न लज्जयति दाराणां सभायां केशकर्षणम् ॥ १७ ॥

**द्रौपदी**—( जनान्तिकम् । ) णाह, ण लज्जंति एदे । तुमं वि दाव मा विसुमरेहि । [ नाथ, न लज्जन्त एते । त्वमपि तावन्मा विस्मार्षीः । ]

**भीमसेनः**—व[9]त्स, कथं चिरयति पा[10]ञ्चाली ? ।

---

यथायोगं कुशस्थलेत्यादिसंबन्धः विषभोजनादेस्तत्तत्स्थाने वृत्तत्वात्तत्तत्स्मरणम् ॥ अन्यथा मन्यन्ते प्रकारान्तरेण जानन्ति । त इति शेषः ॥ असंधेयताऽसंधानविषयता । निधनं विनाशः ॥ **युष्मानिति** । ह्रेपयति लज्जायुक्तान् करोति । 'दाराः पुंभूम्नि' इत्यमरः । इह यद्यप्येकैव द्रौपदी बह्वर्थवाचिदाराशब्देनायोग्यतया प्रतिपादयितुं न शक्यते तथापि लक्षणया तदपि शक्यत इत्यदोषः । केशकर्षणं कर्तृ ॥१७॥ नाथ, न लज्जन्त एते । त्वमपि पुनर्मा विस्मार्षीः न विस्मर ॥ चिरयति

---

पाठा०—१ 'दाह' इति क्वचिन्नास्ति. २. 'मन्यामहे'. ३. 'किं कृतं भवति'. ४. 'लोकेष्वयशः स्वगोत्रक्षयाशङ्कि'. ५. 'आविष्कृतं कुरुराजस्यासंधेयता च दर्शिता भवति'. ६. 'मूढ' इति क्वचिन्नास्ति. ७. 'निवेदिता'. ८. 'प्रसिद्धश्च लोकेऽपि धार्तराष्ट्रकुलक्षयः । ( सहदेवो लज्जां नाटयति । ) भीमः—'किं लज्जाकरो भवताम् । अपि च रे मूर्ख'. ९. '( सस्मरणम् ) वत्स.' १०. त्वरते मे मनः संग्रामावतरणाय'.

**सहदेवः**—आर्य, का खलु वेलात्र[1]भवत्याः प्राप्तायाः ? । किंतु रोषावेशवशाद[2]र्यागताप्यार्येण नो[3]पलक्षिता ।

**भीमसेनः**—( दृ[4]ष्ट्वा, सादरम् । ) देवि, व[5]र्धितामर्षैरस्माभिरागतापि भवती नोपलक्षिता । अतो न मन्युं कर्तुमर्हसि ।

**द्रौपदी**—णाह, उदासीणेसु तुम्हेसु मह[6] मण्णु, ण उण कुविदेसु । [ नाथ, उदासीनेषु युष्मासु मम मन्युः, न पुनः कुपितेषु । ]

**भीमसेनः**—यद्येवमपगतपरिभवमात्मानं समर्थयस्व । ( हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्य । ) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि ? ।

**द्रौपदी**—णा[7]ह, किं वि उव्वे अकालणं तुम्हेसु सण्णिहिदेसु । [ नाथ, किमप्युद्वेगकारणं युष्मासु संनिहितेषु । ]

**भीमसेनः**—किमिति नावेदयसि ? । ( केशानव[8]लोक्य । ) अथवा किमावेदितेन ।

> जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेषु च[9] ।
> पाञ्चालराजतनया व[10]हते यदिमां दशाम् ॥ १८ ॥

**द्रौपदी**—हञ्जे बुद्धिमदिए, क[11]हेहि णाहस्स को अण्णो मह परिहवेण खिज्जइ ? । [ हञ्जे बुद्धिमतिके, कथय नाथस्य कोऽन्यो मम परिभवेण खिद्यते ? । ]

---

विलम्बते ॥ का खलु कियती । प्राप्ताया आगतायाः ॥ नाथ, उदासीनेषु युष्मासु मम मन्युः, न पुनः कुप्यमानेषु ॥ समर्थयस्व जानीहि ॥ नाथ, न खलु किमप्युद्वेगकारणं युष्मासु संनिहितेषु जीवत्सु च ॥ **जीवत्स्विति** । 'यस्य च भावेन भावलक्षणम्' ( २।३।३७ ) इति सप्तमी । दूरमिति क्रियाविशेषणमतिशयार्थम् । अप्रोषितेष्वपरदेशवासिषु ॥ १८ ॥ हञ्जे बुद्धिमतिके, कथय नाथस्य सर्वं व्यवसितम् । कोऽन्यो मम परिभवेन खिद्यते । यद्देव्याज्ञापयति । शृणोतु कुमारः ।

---

पाठा०–१ 'तत्रभवत्याः'. २. आर्यागतापि' इति क्वचिन्नास्ति. ३. 'न लक्षिता'. ४. '( दृष्ट्वा विवृत्यावलोक्य च, सादरम् )' '( विवृत्यावलोक्य च । ) कथमागता । ( सादरम् । )'. ५ 'समुद्धतामर्षैः'. ६. 'मह' इति क्वचिन्नास्ति. ७. 'णाह, किं उव्वेअकालणम्'; 'णाह, ण किं वि उव्वेअकालणम्'. ८. 'केशानवलोक्य, निःश्वस्य'. ९. 'अपि'. १०. 'वहतीयमिमां दशाम्'. ११. 'णिवेदेहि दाव णाहस्स'.

**चेटी**—जं देवी आणवेदि । (भीममुपसृत्य । अञ्जलिं बद्ध्वा ।) [1]सुणादु कुमालो । इदो वि अहिअदरं अज्ज उव्वेअकालणं आसी देवीए । [ यद्देव्याज्ञापयति । शृणोतु कुमारः । इतोऽप्यधिकतरमद्योद्वेगकारणमासीद्देव्याः । ]

**भीमसेनः**—किं नामास्मादप्यधिकतरम् ?, बुद्धिमतिके, कथय,—

कौरव्यवंशदावेऽस्मिन्क एष शलभायते ।
[2]बद्धवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव ॥ १९ ॥

**चेटी**—सुणादु कुमालो । अज्ज [3]खु देवी अंबासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जाए गंधालीए पादवंदणं कादुं [4]गदा । [ शृणोतु कुमारः । अद्य खलु देव्यम्बासहिता सुभद्राप्रमुखेन सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गता । ]

**भीमसेनः**—[5]युक्तमेतत् । वन्द्याः खलु गुरवः । ततस्ततः ।

**चेटी**—तदो पडिणिवुत्तमाणा भाणुमदीए [6]देवी दिट्ठा । [ ततः प्रतिनिवर्तमाना भानुमत्या देवी दृष्टा । ]

---

इतोऽप्यधिकतरमद्योद्वेगकारणं समासादितं देव्या ॥ **कौरव्येति** । अत्र यद्यपि 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' ( २।४।६२ ) इति ण्यञो लुक्प्रसङ्गस्तथापि दुर्योधन एकस्मिन्नेव 'कुर्वादिभ्यो ण्यः' इति कौरव्यशब्दं व्युत्पाद्य 'तत्र साधुः' इति सूत्रे तस्माद्यत्प्रत्ययः । एवं 'कौरव्याः पशवः' ( १।२५ ) इत्यादावप्यूह्यम् । 'वने च वनवह्नौ च दवो दावः प्रकीर्तितः' इति शाश्वतः । 'बद्धवेणीम्' इत्यत्र भूतार्थक्तप्रत्ययस्यासाधुत्वमग्रे वेणीबन्धनादित्यदेश्यम् । वेण्यास्तदा बद्धत्वादग्र उन्मोकस्य कथनात् । अत एव वेण्याः संहार उन्मोकोऽत्रेति ग्रन्थनामापि घटते । शलभायते पतङ्गवदाचरति । वेणी केशवेशः प्रवाहश्च । 'एनाम्' इत्यत्रानन्वादेशात् 'एताम्' इति युक्तः पाठः । तयोरनित्यत्वात् । कृष्णां द्रौपदीं श्यामां च ॥ १९ ॥ शृणोतु कुमारः । अद्य खलु देव्यम्बासहिता सुभद्राप्रमुखेन सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गता ॥ ततस्तस्मात्प्रति-

---

**पाठा०**—१. 'कुमाल, इदो वि अहिअं अज्ज मण्णुकालणं आसी देवीए'; 'कुमाल, अदो वि अज्ज अत्थि अवरं मण्णुकालणं देवीए उप्पणं'. २ 'मुक्तवेणीम्'. ३. 'खु' इति क्वचिन्नास्ति; 'अज्ज क्खु भट्टिणी सहीए सहिदा'. ४. 'गदा आसी'. ५. 'युज्यते, यतोऽभिवन्दनीया गुरवः'; 'युज्यते । एवमेतत् । अभिवन्दनीया गुरवः'. ६. 'देवी' इति क्वचिन्नास्ति.

भीमसेनः—(सक्रोधम् ।) आः, ! शत्रोर्भार्यया दृष्टा ? । हन्त, स्थानं[2] क्रोधस्य देव्याः ! । ततस्ततः ।

चेटी—तदो ताए देवीं पेक्खिअ सहीजणदिण्णदिट्ठिए[3] सगव्वं ईसि विहसिअ भणिअं । अइ[4] जण्णसेणि, कीस तुम्हाणं अज्जवि केसा ण संजमीअंति ? । [ ततस्तया देवीं प्रेक्ष्य सखीजनदत्तदृष्ट्या सगर्वमीषद्विहस्य भणितम् । अयि याज्ञसेनि, कस्माद्युष्माकमद्यापि केशा न संयम्यन्ते ? ]

भीमसेनः—सहदेव, श्रुतम् ? ।

सहदेवः–आर्य,[5] उचितमेवैतत्तस्याः । दुर्योधनकलत्रं हि सा । पश्य,—

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि हि मूर्च्छयते विषविटपि[6]समाश्रिता वल्ली ॥ २० ॥

भीमसेनः—बुद्धिमतिके, ततो देव्या किमभिहितम् ? ।

---

निवर्तमाना भानुमत्या देवी दृष्टा । अत्र 'खलु' वाक्यभूषायाम् । अम्बा माता कुन्ती । आ इत्याक्षेपे । ततस्तया देवीं प्रेक्ष्य सखीजनदत्तदृष्ट्या सगर्वमीषद्विहस्य भणितम् । अयि याज्ञसेनि द्रौपदि, किमिति युष्माकमद्यापि केशा न संयम्यन्त इति । संयमनमिह बन्धनम् । कलत्रशब्दस्याजहल्लिङ्गतया कलत्रं सेति सामानाधिकरण्यम् । 'कलत्रं श्रोणिभार्ययोः' इति विश्वः ॥ **स्त्रीणामिति** । साहचर्यान्नित्यसमाजात् मधुरा कोमला मधुररसा वा । मूर्च्छयते मूर्च्छां करोति । यद्वा मूर्च्छयते जनमिति शेषः । विषविटपो विषशाखाविस्तारः । 'विस्तारो विटपोऽस्त्रियाम्' इत्यमरः । क्वचित् 'विषविटपिसमाश्रिता' इति पाठः । स तु मनोहरः वल्ल्या वृक्षसाहचर्यात् । वल्ली लता । आर्याच्छन्दः ॥ २० ॥ कुमार, यदि परिहीनं मम वचनं भवेत्ततो देवी वदति ॥ ततो मया परिकुप्य भणितम् । अयि

---

1 अत्र दृष्टान्ताख्यं लक्षणाङ्गम्, 'दृष्टान्तो यस्तु पक्षेऽर्थसाधनाय निदर्शनम्' इति तल्लक्षणात् । 2 अत्र 'विषविटप°' इति टीकानुगुणः पाठः ।

---

पाठा०–१. 'आः कथम्'. २. 'युक्तं क्रोधस्थानम्'; 'स्थानं क्रोधस्य सांप्रतं देव्याः'; 'स्थानं खेदस्य देव्याः'. ३. 'सहीअणदिण्णदिट्ठीए'. ४. 'भीमः—न केवलं दृष्टा उक्ता च । अहो किं कुर्मः । ततस्ततः । चेटी—अइ जण्णसेणि, पंचग्गामा पत्थीअंति त्ति सुणीअदि । ता कीस दाणीं वि दे केसा ण संजमीअंति'. ५. 'आर्य, किमिहोच्यते । दुर्योधनकलत्रं हि सा'. ६. 'विषविटपसमाश्रिता'.

**चेटी**—कुमाल, जइ पंडिहीणं मम वअणं भवे तदो देवी भणादि। [ कुमार, यदि परिहीनं मम वचनं भवेत्तदा देवी भणति। ]

**भीमसेनः**—किं पुनरभिहितं भवत्या ?।

**चेटी**—तदो मए परिकुव्विअ भणिअं–'अइ भाणुमदि, तुम्हाणं अमुक्केसु केसहत्थेसु कधं अम्हाणं देवीए केसा संजमीअंति ?' त्ति। [ ततो मया परिकुप्य भणितम्–'अयि भानुमति, युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्ते ?' इति। ]

**भीमसेनः**—( सपरितोषम्। ) साधु बुद्धिमतिके, साधु। तदभिहितं यदस्मत्परिजनोचितम्। ( अधीरमासनादुत्तिष्ठन्। ) भवति पाञ्चालराजतनये, श्रूयताम्। अचिरेणैव कालेन,—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।

---

भानुमति, युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशहस्ताः संयम्यन्ते इति। अत्र केशहस्ताः प्रशस्तकेशाः॥ 'साधु बुद्धिमतिके, साधु' इत्यनेन हर्षरूपशिल्पकमुक्तम्। यदुक्तं तत्रैव—'चित्तप्रसादो हर्षः स्यात्तन्निमित्तस्य संगमे' इति। सावष्टम्भं निर्भयम्॥ **चञ्चदित्यादि**। हे देवि, तव कचान्केशान् भीम

---

1 अत्र वेणीसंहारहेतोः क्रोधबीजस्य पुनरुपादानात् समाधानाख्यं सन्ध्यङ्गम्; 'बीजागमः समाधानम्' इति लक्षणात्। चञ्चद्भ्यां=वेगात् आवर्तमानाभ्यां भुजाभ्यां भ्रमिता या चण्डा=दारुणा गदा तया योऽभितः=सर्वत्र ऊर्वोर्घातः तेन सम्यक् चूर्णितं=पुनरनुत्थानोपहतं कृतं ऊरुयुगलं युगपदेव ऊरुद्वयं यस्य तथोक्तस्येत्यर्थः।

---

**पाठा०**–१. परिजणहीणा भवे'. 'जइ मम बुद्धिपडिहीणत्तणं तदो देवी भणादि'. २. 'कुमाल, मए एवं भणिदं. ३. 'केसेसु'. ४. 'अभिहितं भवत्या'. ५. '( स्वाभरणानि बुद्धिमतिकायै प्रयच्छति।)', '( इति स्वाभरणानि बुद्धिमतिकायै प्रयच्छति। अधीरमासनादुत्तिष्ठन्।)'. ६. 'अत्रभवति पाञ्चालराजतनये, किं बहुना। श्रूयताम्।'; 'अपि पाञ्चालराजतनये, अलं विषादेन। किं बहुना श्रूयताम्।'; 'भवतु। पाञ्चालराजतनये, श्रूयताम्।' 'अयि पञ्चालतनये, अलं विषादेन। किं बहुना, यत्करिष्ये तच्छ्रूयताम्।'.

स्त्यानावविद्धघनशोणितशोणपाणि-
उत्तंसयिष्यति कचांस्तव देवि भीमः ॥ २१ ॥

द्रौपदी—किं णाह, दुक्करं तुए परिकुविदेण ?। सव्वहा अणुगेण्हंतु एदं ववसिदं दे भादरो। [ किं नाथ, दुष्करं त्वया परिकुपितेन ?। सर्वथानुगृह्णन्त्वेतद्व्यवसितं ते भ्रातरः।]

सहदेवः—अनुगृहीतमेतदस्माभिः।

(नेपथ्ये महान्कलकलः। सर्वे सविस्मयमाकर्णयन्ति।)

भीमसेनः—

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः

---

उत्तम्भयिष्यति बन्धयिष्यति। कीदृशः सन्। सुयोधनस्य स्त्यानं स्तिमितमपविद्धं क्षिप्तं घनं निरन्तरं यच्छोणितं तेन शोणो लोहितः पाणिर्यस्य स तथा। 'स्त्यानं स्तिमितसंघयोः' इति विश्वः। 'आविद्धक्षिप्तेरिताः समाः' इत्यमरः। चण्डः प्रचण्डः ॥ २१ ॥ इह स्त्यानेत्यादिकः प्रतिकाररूपो गण्डः। यदुक्तं तत्रैव—'प्रतिक्रियान्वितं वाक्यं प्रतीकार इति स्मृतः।' इति परिन्यासरूपो मुखसंधिः। यदुक्तं तत्रैव—'परिन्यासस्तु कार्यस्य भाविनो निश्चयाद्वचः'। नाथ, अतिदुष्करं त्वया परिकुपितेन व्यवसितम्। तदनुमन्यन्तामेतद्व्यवसितं देवताः।

1 स्त्यानेन=आश्यानतया, न तु कालान्तरशुष्कतयेत्यर्थः; अपविद्धं घनं=सान्द्रं, न तु रसमात्रस्वभावं यत् शोणितं=रुधिरं तेन शोणौ=लोहितौ पाणी=हस्तौ यस्य सः। अत्र 'स्त्यान' इति पदग्रहणेन द्रौपदीक्रोधप्रक्षालने त्वरा संसूचिता। समासेन च सन्ततवेगवहनस्वभावात् तावत्येव विश्रान्तिमलभमाना चूर्णितोरुद्वयसुयोधनानादरणपर्यन्ता प्रतीतिः एकत्वेनैव भवतीति औद्धत्यस्य परं परिपोषिका। दीर्घसमासरचनालङ्कृतवाक्यत्वात् दीप्तिरस्मिन् श्लोके विभाव्यते; तथा चोक्तं—'रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः। तद्व्यक्तिहेतू शब्दार्थावाश्रित्योजो व्यवस्थितम्॥' इति। 2 अत्र 'उत्तम्भयिष्यति' इति पाठष्टीकानुगुणः। 3 अत्र द्रौपद्या भीमस्य गुणाख्यानात् विलोभननामाङ्गम्; तल्लक्षणं च—'गुणाख्यानं विलोभनम्।' इति। 4 अत्रापि 'मन्थायस्तार्णवाम्भः' इत्यादिना 'रसति स्फीतं यशोदुन्दुभिः' (१।२५) इत्यन्तेन द्रौपद्या विलोभनात् विलोभनाभिधमङ्गम्; 'गुणाख्यानं विलोभनम्' इति तल्लक्षणात्।

---

पाठा०—१. 'अवबद्ध'; 'अवनद्ध'. २. 'उत्तम्भयिष्यति'. ३. 'तुइ परिकुविदे'. ४. 'सव्वहा' इति क्वचिन्नास्ति. ५. 'तधा वि अणुगेण्हंतु दे ववसिदं देवदाओ'; 'अणुगेण्हंतु तुए एदं ववसिदं देवदाओ'. ६. 'प्रतिगृहीतं मङ्गलवचनमस्माभिः'. ७. 'भीमसेनः—(सानन्दम्।) आर्ये, किमेतत्'. ८. 'मन्थायस्तार्णवार्णः'. ९. 'द्रुति'. १०. 'वलन्'.

कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्॥२२॥

(प्रविश्य संभ्रान्तः।)

**कञ्चुकी**—कुमार, एष खलु भगवान्वासुदेवः।

(सर्वे कृताञ्जलयः समुत्तिष्ठन्ति।)

**भीमसेनः**—(ससंभ्रमम्।) क्वासौ भगवान्?।

**कञ्चुकी**—पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः।

(सर्वे संभ्रमं नाटयन्ति।)

**भीमसेनः**—किं संयतः?।

**कञ्चुकी**—नहि नहि, संयमितुमारब्धः।

**भीमसेनः**—किं कृतं देवेन?।

**कञ्चुकी**—ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्च्छित-

---

कलकलोऽकस्मादुत्थितो महाशब्दः॥ **मन्थेत्यादि**। मन्थो मन्थनदण्डस्तेनायस्तः क्षिप्तो योऽर्णवः समुद्रः तदम्भसा प्लुतं व्याप्तं यत्कुहरं मध्यं तेन चलन् यो मन्दरनामा शैलस्तच्छब्दवद्गम्भीरोऽयं दुन्दुभिः केन ताडित इत्यन्वयः। कोणाघातेषु सत्सु। 'ढक्काशतसहस्राणि भेरीशतशतानि च। एकदा यत्र हन्यन्ते कोणाघातः स उच्यते॥' इति भरतः। घटा समूहः। संघट्टो मिलनम्। अग्रदूतः प्रथमकथकः। उत्पातनिर्घातवातोऽशुभः प्रचण्डपवनः। प्रतिरसितं प्रतिरवः॥ २२॥ कञ्चुकी महल्लकः। संयतो बद्धः। 'बद्धे कीलितसंयतौ' इत्यमरः। इह समयरूपो निर्वहणसंधिः। यदाह—'विरोधस्याख्यानं यद्वा दुःखस्य समयो मतः'। सावेगं सस्नेहम्। हन्त हर्षे। विश्वरूपं विश्वंभरमूर्तिः। संपातो

---

1 'वायुना निहतो वायुर्गगनाच्च पतत्यधः। प्रचण्डघोरनिर्घोषो निर्घात इति कथ्यते।' इत्यत एवास्य प्रचण्डध्वनिविशिष्टं दुन्दुभिसादृश्यम्।

---

पाठा०—१. 'कुरुपति'. २. 'समो'. ३. 'ताड्यते'. ४. 'ससंभ्रमम्' इति क्वचिन्नास्ति. ५. 'क्वासौ क्वासौ भगवान्'. ६. 'संयन्तुम्'. ७. 'कथं स भगवान्वासुदेवः संयतः'. ८. 'भीमः—(सपरितोषम्।) हन्त, विघटितः संधिर्भग्नावूरू च सुयोधनस्य। अथ किं कृतं देवेन'.

मवधूय कुरुकुलमस्मच्छिबिरसंनिवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति ।

**भीमसेनः**—(सोपहासम्[1]।) किं नाम दुरात्मा सुयोधनो भगवन्तं संयमितुमिच्छति ! । (आकाशे दत्तदृष्टिः ।) आः दुरात्मन्कुरुकुलपांसुल[2], एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम् ।

**सहदेवः**—आर्य, किमसौ दुरात्मा सुयोधनहतको[3] वासुदेवमपि भगवन्तं स्वरूपेण[4] न जानाति ? ।

**भीमसेनः**—वत्स, मूढः खल्वयं दुरात्मा कथं जानातु ! । पश्य,—

आत्मारामा विहितरतयो[5] निर्विकल्पे समाधौ
ज्ञानोत्सेकाद्विघटिततमोग्रन्थयः[6] सत्त्वनिष्ठाः ।
यं वीक्षन्ते[7] कमपि[8] तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः[9] कथमयममुं वेत्ति[10] देवं पुराणम् ॥ २३ ॥

---

मेलकम् । हतको निन्द्यः । पांसुल पापकारिन् । मूढो मूर्खः । खलु वाक्यभूषायां निश्चये वा ॥ **आत्मेत्यादि** । सत्त्वनिष्ठाः सात्त्विकभावापन्ना मुनयो यं भगवन्तं वीक्षन्ते साक्षात्कुर्वन्ति । कीदृशाः । आत्मैवारामो वनं येषां ते । तथा चात्मवनयोस्तुल्यत्वेनात्यन्तमौदास्यमाविष्कृतम् । यद्वा आत्मनि आसमन्ताद्भावेन रमन्त इत्यात्मारामाः । त्यक्तेतरसङ्गा इत्यर्थः । पुनः कीदृशाः । निर्विकल्पे निष्कलुषे निर्णीते त्यक्तभेदे वा समाधौ नियमविशेषे विहितरतयः कृतानुरागाः । 'विहितधृतयः' इत्यपि पाठः । तत्र विहिता धृतिर्धारणा यैस्ते । इदं त्वत्यन्ताभ्यासवैराग्याभ्यां भवति । तथा च गीता–'असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥' इति । यद्वा आत्मारामे आत्मनीवारामेऽप्यासमन्ताद्विहितरतयः कृतानुरागाः । यद्वा आत्मैवारामो वनं तत्रासमन्ताद्भावेन विहितरतयः । अस्मिन्नर्थद्वये निर्विकल्पे समाधौ सति यं

---

1 विघटिताः=विनाशं प्रापिताः तमोग्रन्थयः संशयविपर्ययादयो येषां ते तथोक्ताः, तथा चोक्तं माण्डूक्योपनिषदि—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इति ।

---

पाठा०–१. 'विहस्य'; 'सहासम्'. २. 'पांसन'. ३. 'सुयोधनो'. ४. 'स्वेन रूपेण'. ५. 'मतयः'; 'धृतयः'. ६. 'ज्ञानोद्रेकात्'. ७. 'ध्यायन्ते'. ८. 'किमपि'. ९. 'मोहात्मा'. १०. 'वेत्तु'.

[1]आर्य जयंधर, किमिदानीमध्यवस्यति गुरुः ? ।

**कञ्चुकी**—स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः । ( इति निष्क्रान्तः । )

( नेपथ्ये कलकलानन्तरम् । )

भो[2] भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयोऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च, शृण्वन्तु भवन्तः,—

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृ[2]पसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरु[3]वने यौधिष्ठिरं जृम्भते ॥ २४ ॥

---

वीक्षन्त इत्यर्थः । पुनः कीदृशाः । ज्ञानोत्सेकात् तत्त्वज्ञानमाहात्म्यात् विनाशिततामसगुणा विनाशितमिथ्याज्ञाना वा । अनेन धृतेः फलमुक्तम् । 'ज्ञानोद्रेकात्' इत्यपि पाठः । उद्रेकः प्रौढिः । अनेन तत्रासङ्ग उक्तः । अत्र तु प्रथमं वनवासः, ततः समाधिलाभः, ततस्तत्त्वज्ञानेन मिथ्याज्ञानविनाशः, ततः सत्त्वनिष्ठता, ततः साक्षात्कार इति तत्त्वज्ञानोत्पादकः क्रमोऽपि बोद्धव्यः । यद्वा अन्यत्र सङ्गत्यागः; ततो धृतिः, ततः प्रज्ञाप्रौढिः, ततोऽविद्यालक्षणतमोग्रन्थिभेदः, ततो राजसप्रवृत्त्युच्छेदो मूलोच्छेदात्, ततः सात्त्विकी प्रवृत्तिः, तस्याः फलमीश्वरप्रसादः, तेन भगवान्समस्ततमःप्रकाशयोः परतरो दृश्यते । तमेवं तादृशपुरुषोऽपि न पश्यति । किं पुनर्मूढो दुर्योधन इति भावः । यं कीदृशम् । कमपि अनिर्वचनीयम् । तमसां मिथ्याज्ञानानां ज्योतिषां तत्त्वज्ञानानां परस्तात्परम् । ताभ्यामप्यगम्यमित्यर्थः । अत एव कमपीत्युक्तम् । तं देवं कथमयं मोहान्धो जानातीति । पुनः कीदृशम् । पुराणमनादिसिद्धम् । तथा च यमनियमादिसिद्धपुरुषधौरेयगम्यमिति ध्वनितम् ॥ २३ ॥ जयंधरनामा कञ्चुकी । अध्यवस्यति करोति ॥ **यत्सत्येति** । अवश्यपालनीयः संकल्पो व्रतम् । सत्यमेव व्रतम् । मन्दीकृतम् । मयेति शेषः । मनसेति विशेषणद्वारा विशेष्यप्रतिपत्तिरिति वा । यत् क्रोधज्योतिः । शम-

---

1 'आर्य जयन्धर,...गुरुः ?' इत्युपक्रमे 'आर्यस्य क्रोधज्योतिः' (पृ० ३०) इत्यनेन छन्नस्य द्रौपदीकेशसंयमनहेतोः युधिष्ठिरक्रोधस्योद्भेदः; 'उद्भेदो गूढभेदनम्' इति तल्लक्षणात् । 2 अत्र 'स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः' इत्यादि ( १।८ ) बीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानाख्यमङ्गम्; तल्लक्षणं तु—'बीजस्यागमनं यत्तु तत्समाधानमुच्यते ॥' इति ।

---

पाठा०—१. आर्य मैत्रेय, किमिदानीमध्यवस्यन्ति गुरवः'. २. 'नृपवधू'. ३. 'कुरुकुले'.

**भीमसेनः**—( आकर्ण्य । सहर्षम् । ) जृम्भतां जृम्भतामप्रतिहत-प्रसरमार्यस्य क्रोधज्योतिः ।

**द्रौपदी**—णाह, किं दाणीं एसो पलअजलहरत्थणिदमंसलो-द्घोसो क्खणे क्खणे समरदुंदुही ताडीअदि ? । [ नाथ, किमिदानीमेष प्रलयजलधरस्तनितमांसलोद्घोषः क्षणे क्षणे समरदुन्दुभिस्ताड्यते ? । ]

**भीमसेनः**—देवि, किमन्यत् ! । यज्ञः प्रवर्तते ।

**द्रौपदी**—( सविस्मयम् । ) को एसो जण्णो ? । [ क एष यज्ञः ? । ]

**भीमसेनः**—रणयज्ञः । तथा हि,—

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।

---

वता शान्तेन मया । द्यूतमेवारणिर्यज्ञकाष्ठमेदस्तत्र संभृतं समुपचितम् । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । नृपसुता द्रौपदी । कुरुरेव वनम् । यौधिष्ठिरं युधिष्ठिरसंबन्धि जृम्भते प्रकाशते ॥ २४ ॥ नाथ, किमिदानीमेष प्रलयजलधरमन्थरस्तनितमांसलोद्घोषभीषणः क्षणे क्षणे समरदुन्दुभिस्ताड्यते । अत्र मन्थरस्तनितं गम्भीरगर्जितं तद्वन्मांसलोऽधिको य उद्घोष उच्चैःशब्दस्तेन भीषणः । इह विद्रवनामा गर्भसंधिः । यदाह—'शङ्काकलङ्कप्रभवः संभ्रमो विद्रवो मतः' इति । ननु भणामीत्यर्थे । अधुना 'बीजप्ररोह उद्भेदो यत्किंचित्प्रभवात्मकः' इति भरतादुद्भेदरूपं मुखसंधिमाह—**चत्वार इति** । चत्वारो भीमार्जुनसहदेवनकुलाः । कर्मोपदेष्टाऽऽचार्यः । दीक्षितो दीक्षां प्रापितः । नरपतिर्युधिष्ठिरः । पत्नी द्रौपदी । गृहीतव्रता कृतनियमा । कौरव्याः कुरुकुलजाताः ।

---

1 अत्र लोकोत्तरसमरदुन्दुभिध्वनेः विस्मयरसावेशात् द्रौपद्याः परिभावना; तल्लक्षणं च—'कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना' इति ।

---

पाठा०-१. '( आकर्ण्य सहर्षामर्षम् । )'. २. भीमसेनः—( सहर्षम् ) जृम्भतां जृम्भताम् । संप्रत्यप्रतिहतमार्यस्य क्रोधज्योतिः'. ३. 'आर्यक्रोधज्योतिः'. ४ 'द्रौपदी—( सविस्मयम् । ) णाह'. ५. 'कहं'. ६. 'पलअजलहरघणत्थणिदमंसलो क्खणे क्खणे समरदुंदुही ताडीअदि'; 'पलअजलहरघणकणिअमंसलो क्खणे क्खणे चंडघोसो समरदुंदुही ताडीअदि'; 'पलअजलहरघणत्थणिदमंसलो क्खणे क्खणे समरदुंदुही चंडघोसो दालुनो ताडीअदि'.

कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं [1]यशोदुन्दुभिः॥२५॥

**सहदेवः**—[1]आर्य, गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम्।

**भीमसेनः**—वत्स, एते वयमु[2]द्यता आर्यस्यानुज्ञामनुष्ठातुमेव। (उत्थाय।) [3]तत्पाञ्चालि, गच्छामो वयमिदानीं कुरुकुलक्षयाय।

**द्रौपदी**—(बाष्पं धारयन्ती।) णाह, असुरसमराहिमुहस्स हरिणो विअ मंगलं तुम्हाणं होदु। [4]जं च अंबा कुंदी आसासदि तं तुम्हाणं होदु। [ नाथ, असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु। यच्चाम्बा कुन्त्याशास्ते तद्युष्माकं भवतु। ]

[5]**उभौ**—प्रतिगृहीतं मङ्गलवचनमस्माभिः।

[6]**द्रौपदी**—[2]अण्णं च णाह, पुणो वि तुम्हेहिं समरादो आअच्छिअ अहं समासासइदव्वा। [ अन्यच्च नाथ, पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या। ]

---

पशवो यज्ञार्थं घातनीयाः। राजन्योपनिमन्त्रणाय क्षत्रियाह्वानाय। रसति शब्दायते। स्फीतं मनोज्ञं यथा स्यादेवम्। यशोदुन्दुभिर्यशःप्रधानो वाद्यविशेषः। यद्वा। यशोदुन्दुभिः पटहः। 'स्याद्यशःपटहो ढक्का भेर्यामानकदुन्दुभिः' इत्यमरः॥ २५॥ अनुज्ञात इति पञ्चम्यास्तसिः। इह 'देवि, गच्छामः' इत्यनेन कारणरूपो मुखसंधिः। यदाह—'उद्यमः प्रस्तुतार्थस्य कारणं परिकीर्तितम्'।

1 अत्र 'आर्य, गच्छामः' इत्यादि सहदेवोक्त्या 'तत् पाञ्चालि गच्छामः' इत्यादि भीमोक्त्या चानन्तराङ्कप्रस्तूयमानसङ्ग्रामारम्भणात् करणाख्यं मुखसन्ध्यङ्गम्; 'करणं प्रकृतारम्भः' इति तल्लक्षणात्। 2 अत्र 'अण्णं च' इत्यारभ्य 'पश्यसि वृकोदरम्' (१।२६) इत्यन्तेन सङ्ग्रामस्य सुखदुःखहेतुत्वात् विधानाख्यमङ्गम्; तल्लक्षणं च—'सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्।' इति।

---

पाठा०–१. 'हतो दुन्दुभिः'. २. 'उद्यता एवार्यस्यानुज्ञामनुष्ठातुम्'. ३. 'देवि, गच्छामः'. ४. 'जं च अंबा कुंदी—' इत्यादि कचिन्नास्ति. ५ एतद्वचनं क्वचिन्नास्ति. ६. 'चेटी—अण्णं च देवी भणादि। णाह, तुम्हेहिं पुणो वि समरादो आअच्छिअ अहं आसासइदव्वा'; 'द्रौपदी—णाह, पुणो वि, अम्हेहिं अहं आअच्छिअ समासासिदव्वा'.

**भीमसेनः**—[1]ननु पाञ्चालराजतनये, किमद्याप्यलीकाश्वासनया ? ।

भूयः[2]परिभवक्षान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न [3]पश्यसि वृकोदरम् ॥ २६ ॥

**द्रौपदी**—णाह, [4]मा खु जण्णसेणीपरिहवुद्दीविदकोवाणला अणवेक्खिदसरीरा [5]संचरिस्सध । जदो अप्पमत्तसंचरणिज्जाइं रिउबलाइं सुणीअंति । [ नाथ, मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनवेक्षितशरीराः संचरिष्यथ । यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते । ]

**भीमसेनः**—[6]अयि सुक्षत्रिये,—

अन्योन्यास्फालभिन्नद्विपरुधिर[7]वसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।

---

नाथ, असुरसमराभिमुखस्य हरेर्यन्मङ्गलं वृत्तं तद्युष्माकं भवतु । यच्चाम्बा कुन्ती वदति तद्युष्माकं भवतु । अन्यच्च नाथ, पुनरपि त्वया समरादागत्याहं समाश्वासयितव्या । अलीकं मिथ्या ॥ **भूय इति** । भूयःपरिभवः प्रचुरपराभवः । क्षान्तिः क्षमा । विधुरितं व्याप्तम् । वृकोदरं भीमम् । 'न पश्यसि' इति पाठे भविष्यति लट् ॥ २६ ॥ मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनपेक्षितशरीरावरणा रणे पुनः संचरत । यतोऽप्रमत्तसुखसंचाराणि रिपुबलानीति श्रूयते । अत्र 'खलु' निषेधेऽवधारणे वा । संचरतेत्यत्र यूयमिति शेषः । अप्रमत्तः सावधानः । प्रमत्त इत्यत्र 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति सूत्रेण न नत्वम् । 'न ध्याख्यापृमूर्च्छिमदाम्' (८।२।५७) इति प्रतिषेधात् । **अन्योन्येति** । आस्फालः संघट्टः । भिन्नो दारितः । मस्तिष्कं गोर्द 'गोदि' इति लोके

---

1 अनेन सुदुःखिताया द्रौपद्याः क्रोधोत्साहबीजानुगुण्येनैव प्रोत्साहनात् भेदाख्यमङ्गम्; तल्लक्षणं च—'भेदः प्रोत्साहना मता ।' इति ।

---

पाठा०-१. 'देवि, किमिवालीकाश्वासनाभिः'; 'देवि, किमद्याप्यलीकाश्वासनेन;' 'देवि, किमलीकाश्वासनेन'; 'देवि, किमिवालीकाश्वासनेन'. २. परिभवक्षान्तिलज्जाबन्धुरिताननम्'; 'लज्जाविधुरिताननम्'. ३. 'द्रक्ष्यसि'. ४. 'मा क्खु' 'मा क्खु'. ५. 'परिक्कमिस्सध'. ६. शृणु सुक्षत्रिये, समर्था वयं संक्रमितुम्'; 'अयि सुक्षत्रिये, समर्था वयमस्मिन्रणे परिक्रमितुम् । शृणु'; 'अयि सुक्षत्रिये, समर्था वयं संक्रमितुम्'. ७. 'वसासान्द्रमस्तिष्कपङ्के'.

स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः २७

( इति निष्क्रान्ताः सर्वे । )

## इति प्रथमोऽङ्कः ।

---

प्रसिद्धम् । स्यन्दनो रथः । कृतपदन्यासोऽत एव विक्रान्तः पत्तिः पदातिर्यत्र तादृशे । स्फीतासृक् दीप्तरक्तं तत्पानगोष्ठीषु रसन्त्यशिवशिवाऽमङ्गलशृगालिका सैव तूर्यो मर्दलं तेन नृत्यत्कबन्धोऽपमूर्धकलेवरो यत्र तादृशे ॥ २७ ॥ सर्वे निष्क्रान्ता इति सर्वत्राङ्के कर्तव्यम् । तदुक्तं तत्रैव—'पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः' इति ॥

असूत यं रत्नधरो गुणीशस्तत्तद्गुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ व्यरंसीदाद्योऽयमङ्को वरटिप्पनेऽत्र ॥

इति प्रथमोऽङ्कः ।

---

पाठा०-१. 'मदयन्तिकापि'.

## द्वितीयोऽङ्कः ।

( ततः प्रविशति कञ्चुकी । )

**कञ्चुकी**[1]—आदिष्टोऽस्मि[1] महाराजदुर्योधनेन—'विनयंधर[2], सत्वरं[3] गच्छ त्वम् । अन्विष्यतां देवी भानुमती । अपि निवृत्ता अम्बायाः पादवन्दनसमयान्न वेति । यतस्तां[4] विलोक्य निहताभिमन्यवो राधेय[5]-जयद्रथप्रभृतयोऽस्मत्सेनापतयः[6] समरभूमिं गत्वा संभाजयितव्याः[7]' इति । तन्मया द्रुततरं गन्तव्यमिति । अहो प्रभविष्णुता महाराजस्य, यन्मम जरसाभिभूतस्य मर्यादामात्रमेवावरोधनिवासः[8] । अथवा किमिति जरामुपालभेय[9], यतः सर्वान्तःपुरचारिणामयमेव[10] व्यावहारिको वेषश्चेष्टा च । तथा हि,—

नोच्चैः सत्यपि चक्षुषीक्षितुमलं[11] श्रुत्वापि नाकर्णितं[12]
शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्बिता[13] ।
सर्वत्र स्खलितेषु दत्तमनसा जातं[14] मया नोद्धतं
सेवान्धीकृतजीवितस्य[15] जरसा किं नाम यन्मे कृतम् ॥ १ ॥

**आदिष्टोऽस्मीति** । 'संभावयितव्याः' इत्यनेनान्वयः । अन्विष्यतामनुसंधीयताम् । अपिः प्रश्ने संभावनायां वा । 'अम्बा माताथ जननी' इत्यमरः । राधेयः कर्णः । संभावयितव्याः संनिहितीकर्तव्याः । प्रभविष्णुता प्रभावशालिता । जरसा वार्धकेन । मर्यादामात्रं मर्यादापर्यवसन्नः । अवरोधव्यापारोऽन्तःपुरकर्म । व्यावहारिको व्यवहारजन्यः । उक्तोपन्यासे 'तथा हि' इति शब्दप्रयोगः । **नोच्चैरिति** । चक्षुषि सत्यपि उच्चैरीक्षितुं नालमहं न समर्थः । नाकर्णितं मयेत्यन्वयः । शक्तेनापि मया यष्टिः समाश्रिता । कीदृशी । अधिकारोऽयं मम कञ्चुकिनो यष्टिसमालम्बनमित्यधिकृता योग्या । स्खलितं व्यापारप्रच्यवः ।

1 कञ्चुकं विनीतवेशार्थं अस्यास्तीति कञ्चुकी; 'अन्तःपुरचरो राज्ञो वृद्धो विप्रो गुणान्वितः । उक्ति-प्रत्युक्तिकुशलः कञ्चुकीत्यभिधीयते ॥' इति तल्लक्षणम् ।

पाठा०—१. 'आज्ञापितोऽस्मि'. २. 'यथा विनयंधर'. ३. 'सत्वरम्' इति क्वचिन्नास्ति. ४. 'यतो मया तामवलोक्य'. ५. 'द्रोणराधेयजयद्रथप्रभृतयः'. ६. 'अस्मत्' इति क्वचिन्नास्ति. ७. 'संभावयितव्याः'. ८. 'अवरोधव्यापारः'. ९. 'उपालभे'; 'उपालभामहे'. १०. 'सर्वेषामेवायमन्तःपुरचारिणां वैहारिको वेषः'; 'सर्वान्तःपुरिकाणामयमेव व्यावहारिको वेषः'. ११. 'चक्षुषीक्षितमलम्'. १२. 'नाकर्णितुम्'. १३. 'समालम्ब्यते'. १४. 'यातं तथा'. १५. 'सेवास्वीकृतजीवितस्य'.

( परिक्रम्य दृष्ट्वा । आकाशे । ) विहङ्गिके, अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती ? । (कर्णं दत्वा ।) किं कथयसि—आर्य, एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्तितगुरुदेवपादवन्दनाद्यप्रभृत्यारब्धनियमा, देवगृहे बालोद्याने तिष्ठतीति । तद्भद्रे, गच्छ त्वमात्मव्यापाराय, यावदहमप्यत्रस्थां देवीं महाराजस्य निवेदयामीति । (परिक्रम्य।) साधु पतिव्रते, साधु, स्त्रीभावेऽपि वर्तमाना वरं भवती, न पुनर्महाराजः । योऽयमुद्यतेषु बलवत्सु, अथवा किं बलवत्सु, वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्वद्याप्यन्तःपुरविहारसुखमनुभवति । ( विचिन्त्य । ) इदमपरमयथातथं स्वामिनश्चेष्टितम् । कुतः ?

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः ।

---

उद्धतं यथा स्यादेवं मया न जातम् । नोद्धतेन मया भूतमित्यर्थः । नामानवक्लृप्तौ । जरसा मम किं नाम कृतम् । अपि तु न किमपि । कीदृशस्य । सेवान्धीकृतजीवितस्य । सेवार्थमन्धीकृतं निष्फलीकृतं जीवितं येन तस्येत्यर्थः । क्वचित् 'सेवास्वीकृतजीवितस्य' इति पाठः । तत्र सेवार्थं स्वीकृतं जीवितं जीवनं येन । तथा च सेवानिमित्तमेव ममान्ध्यादिकं न तु जराकृतमिति भावः ॥ १ ॥ **आकाश इति** । 'दूरस्थाभाषणं यत्स्यादशरीरं निवेदनम् । परोक्षान्तरितं वाक्यं तदाकाशं निगद्यते ॥' इति भरतः । विहङ्गिका पक्षिवधूः । देवगृहप्रधानमुद्यानं वनम् । वरं मनागिष्टा । 'मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययम्' इति विश्वः । विहारः क्रीडा । अयथातथमनर्हम् । **आ शस्त्रेति** । यदसौ भीष्मः पाण्डुसूनुभिः शरैः शायितः तन्नास्य तापाय तापार्थम् । तादर्थ्ये चतुर्थी । कीदृशः ।

---

1 'योऽयमुद्यतेषु' इत्यारभ्य 'प्रीतोऽभिमन्योर्वधात्' ( २।२ ) इत्यन्तेन भीष्मादिवधे दृष्टस्य अभिमन्युवधान्नष्टस्य बलवतां पाण्डवानां वासुदेवसहायानां सङ्ग्रामलक्षणबिन्दुबीजप्रयत्नान्वयेन कञ्चुकिमुखे बीजानुसर्पणं परिसर्पः; तल्लक्षणं—'दृष्टनष्टानुसर्पणम्, परिसर्पः' इति ।

---

पाठा०–१. 'कर्णं दत्त्वा, आकाशे'. २. 'गुरुपादवन्दना'. ३. 'देवगृहे' इति क्वचिन्नास्ति. ४. 'अहमपि महाराजस्य संदेशमावेदयामि'. ५. 'अपि' इति क्वचिन्नास्ति. ६. 'बलवत्स्वबलवत्सु वा वासुदेवसहायेषु'. ७. 'अरिषु च'. ८. 'अन्तःपुरविहारम्'; 'अन्तःपुरसुखम्'. ९. 'इदमपरमयथार्थचेष्टितं स्वामिनः' 'इदमयथातथं स्वामिनश्चेष्टितम्'.

प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात्[1] ॥ २ ॥
सर्वथा दैवं नः स्वस्ति करिष्यति[1] । तद्यावदत्रस्थां[2] देवीं महाराजस्य निवेदयामि । ( इति निष्क्रान्तः । )

विष्कम्भकः[2] ।

---

( ततः प्रविशत्यासनस्था देवी भानुमती सखी चेटी च । )

**सखी**—सहि भाणुमदि, कीस दाणीं तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअधीरभावा अतिमेत्तं संतप्पसि ? । [ सखि भानुमति, कस्मादिदानीं त्वं स्वप्रदर्शनमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैवं विगलितधीरभावातिमात्रं संतप्यसे ?]

---

शस्त्रग्रहणादारभ्य सफलपरशोर्मुनेः परशुरामस्यापि जेता । यदयमभिमन्योर्वधात्प्रीतः । कीदृशस्य । महारथविजयश्रान्तस्यैकस्य शत्रुच्छिन्नकोदण्डस्य च । **एकाकीति** । 'एकादाकिनिच्चासहाये' (५।३।५२) इत्याकिनिच्प्रत्ययः ॥२॥ 'दैवं दिष्टं भागधेयम्' इत्यमरः । स्वस्ति कल्याणम् । नोऽस्माकम् ॥ **विष्कम्भक इति** । 'कुतोऽपि स्वेच्छया क्लृप्तो व्यक्तस्तेनोभयोरपि । विष्कम्भकः स विज्ञेयः कथार्थस्यापि सूचकः ॥' इति भरतः ॥ सखि भानुमति, किमितीदानीं त्वं स्वप्नमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वा विगलितधीरतातिमात्रं

---

1 अभिमन्युवधवर्णनं च महाभारते ( द्रोण. अ० ४९ ) 'ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष । अभिदुद्राव सौभद्रं तिष्ठ तिष्ठेति चाब्रवीत् । तावुद्यतगदौ वीरावन्योन्यवधकाङ्क्षिणौ ॥ भ्रातृव्यौ सम्प्रजहाते पुरेव त्र्यम्बकान्धकौ । तावन्योन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ ।···दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः ॥ उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् । गदावेगेन महता व्यायामेन च मोहितः ॥ विचेता न्यपतद्भूमौ सौभद्रः परवीरहा । एवं विनिहतो राजन्नेको बहुभिराहवे । क्षोभयित्वा चमूं सर्वां नलिनीमिव कुञ्जरः ॥' इति । 2 विष्कम्भकः—एकस्य अङ्कस्य समाप्तौ अन्यस्य चारम्भसमये रङ्गभूमौ यददृष्टं भूतं भावि वा तस्य प्रेक्षकाणां परिज्ञानायार्थोपक्षेपकः प्रयोज्यः; तल्लक्षणं यथा—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ।' इति ।

---

पाठा०–१. 'करिष्यतीति'. २. 'तद्यावदहमत्रस्थां देवीं भानुमतीं निवेदयामि महाराजस्य'.

**चेटी**—भट्टिणि, सोहणं भणादि सुवअणा[1]। [2]सिविणअंतो जणो किं ण खु प्पलवदि ! । [ भट्टिनि, शोभनं भणति सुवदना । स्वपन् जनः किं न खलु प्रलपति ! । ]

**भानुमती**—[3]हञ्जे, एव्वं ण्णेदं । किंणु एदं सिविणअं अदिमेत्तं अकुसलदंसणं मे पडिभादि । [ हञ्जे, एवमेतत् । किन्वयं स्वप्नोऽतिमात्रमकुशलदर्शनो मे प्रतिभाति । ]

**सखी**—[4]जइ एव्वं ता कहेदु पिअसही । जेण अम्हे वि पडिट्ठावअंतीओ प्पसंसाए देवदासंकित्तणेण अ पडिहडिस्सामो । [ यद्येवं तत्कथयतु प्रियसखी । येनावामपि प्रतिष्ठापयन्त्यौ प्रशंसया देवतासंकीर्तनेन च परिहरिष्यावः । ]

**चेटी**—[5]देवि, एव्वं ण्णेदं । अकुसलदंसणा [6]वि सिविणआ [7]पसंसाए कुसलपरिणामा होंति त्ति सुणीअदि । [ देवि, एवमेतत् । अकुशलदर्शना अपि स्वप्नाः प्रशंसया कुशलपरिणामा भवन्तीति श्रूयते । ]

**भानुमती**—[8]जइ एव्वं ता कहइस्सं । [9]अवहिदा होध । [ यद्येवं तत्कथयिष्ये । अवहिते भवतम् । ]

---

संतप्यसे ? । अत्र 'कृताभिषेका महिषी' इत्यमरः ॥ शोभनं वदतीति सुवदना । स्वपन्खलु जनो यत्किमपि विप्रलपति । अत्र खलु प्रसिद्धौ । विप्रलपति विसंवादि वचो वदति ॥ सखि, एवमेतत् । किंन्वेष मे स्वप्नोऽतिमात्रमकुशलदर्शनः प्रतिभासते । यद्येवं तत्कथयतु प्रियसखी । येन मया प्रतिष्ठापयन्त्या प्रशंसया देवतासंकीर्तनेन च परिहरिष्यते । अत्र प्रतिष्ठापयन्त्या स्वप्नं शुभार्थकं कुर्वत्येत्यर्थः ॥ देवि, एवमेतत् । अकुशलदर्शना अपि स्वप्नाः प्रशंसया कुशलपरिणामा भवन्तीति श्रूयते । यद्येवं तत्कथयिष्ये ।

---

पाठा०—१. 'भानुमती—एव्वं ण्णेदं ।'. २. 'सिविणअंतो जणो ण हु किं वि ण प्पलवदि'; 'सिविणअंतो जणो ण हु किं किं ण प्पलवदि'; 'सिविणअंतो जणो किं किं ण विप्पलवदि'; 'सिविणअंतो जणो ण किं प्पलवदि'. ३. 'किं उण एदं मे अकुसलदंसणं पडिभादि सिविणअं'; 'मम उण अकुसलदंसणं पडिभादि सिविणअं'; 'किं उण एदं अकुसलं पडिभादि सिविणअं'. ४. 'पिअसहि, जइ एव्वं ता कहेहि सिविणअं । जं अम्हे वि पडिस्साअंतीओ धम्मप्पसंसाए देवदासंकित्तणेण दुव्वादिपडिग्गहेण अ पडिहडिस्सामो'. ५. 'भट्टिणि, सोहणं क्खु भणादि सुवअणा'; 'सोहणं क्खु भणादि सुवअणा'. ६. 'वि' इति क्वचिन्नास्ति. ७. 'देवदाणं पसंसाए'. ८. 'हला देण हि कहइस्सं'. ९. 'अवहिदा दाव होहि'.

सखी[1]—कहेदु पिअसही[2] । [ कथयतु प्रियसखी । ]

भानुमती—मुहुत्तअं चिट्ठ जाव सव्वं सुमरिस्सं । ( इति चिन्तां नाटयति । ) [ मुहूर्तं तिष्ठ यावत्सर्वं स्मरिष्यामि । ]

( ततः प्रविशति दुर्योधनः कञ्चुकी च । )

दुर्योधनः—सूक्तमिदं कस्यचित्[3],—

"गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिणाम्[4] ॥ ३ ॥"

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्य समुच्छ्वसितमिव[5] नश्चेतसा ।

कञ्चुकी—देव, नैवमतिदुष्करमाचार्यस्य शस्त्रप्रभावात्[6] । कर्णजयद्रथयोर्वा का नामात्र[7] श्लाघा ! ।

राजा—विनयंधर, किमाह भवान्[8] ? । एको बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र[9] का श्लाघा कुरुपुङ्गवानाम् ? । तदत्र न खलु कश्चिद्दोषः । मूढ ! पश्य,—

---

अवहिते भवनम् ॥ कथयतु प्रियसखी ॥ मुहूर्तं तिष्ठ तावद्यावत्सर्वं स्मरिष्यामि सूक्तं शोभनोक्तिः । गुप्त्येति । अपकारिणां शत्रूणामपकारो गुप्त्या निभृतं साक्षात्सर्ववेद्यो महान्स्वल्पो वा स्वयं वान्येन वा कृतो महतीं प्रीतिं करोतीत्यन्वयः ॥ ३ ॥ का नाम, अपि तु न कापि । नाम अनवक्लृप्तौ । लूनशरा-

---

पाठा०—१. 'सखी—अवहिदम्हि । कहेदु पिअसही ।'. २. 'भानुमती—अज्ज, किल मे पमदवणे आसीणाए अगदो केण वि अदिसइददिव्वरूवेण णउलेण अहिसदं वावादिदं । उभे—( अवधार्यात्मगतम् । ) संतं पावं संतं पावं । पडिहदममंगलं । ( प्रकाशम् । ) देवि, तदो तदो । भानुमती—हला, भएण विसुमरिदम्हि । ता चिट्ठ जाव सव्वं सुमरिअ कहइस्सं । ( इति चिन्तां नाटयति । )'; 'भानुमती—हला, भएण विसुमरिदम्हि । ता चिट्ठ जाव सव्वं सुमरिअ कहइस्सं । ( इति चिन्तां नाटयति । )'. ३. 'कस्यापि'. ४. 'अपकारिषु'. ५. 'उच्छ्वसितमिव'. ६. 'नेदमतिदुष्करमाचार्यशस्त्रप्रभावाणाम्'; 'नेदमतिदुष्करमाचार्यस्यास्त्रप्रभावेण'. ७. 'नाम' इति कचिन्नास्ति ८. 'भगवान्'. ९. एकाकी बहुभिर्बालो लूनशरासनश्च निहत इति । पश्य'.

हते[1] जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्[2] ।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ ४ ॥

**कञ्चुकी**—( सवैलक्ष्यम् । ) देव, न ममायं संकल्पः । किंतु[2] वः[3] पौरुषप्रतीघातोऽस्माभिरनालोचितपूर्व[4] इत्यत[5] एवं विज्ञापयामि ।

**राजा**—एवमिदम्[6],—

सहभृत्यगणं[3] सबान्धवं सहमित्रं ससुतं[7] सहानुजम् ।
स्वबलेन निहन्ति संयुगे न[4] चिरात्पाण्डुसुतः सुयोधनम् ॥५॥

**कञ्चुकी**—( कर्णौ पिधाय । सभयम् । ) शान्तं[8] पापम् ! । प्रतिहतममङ्गलम् ! ।

---

सनः छिन्नधनुः ॥ **हत इति** । जरति वृद्धे । गाङ्गेये गङ्गापुत्रे भीष्मे । शिखण्डी क्लीबरूपो योधभेदः । तं पुरस्कृत्याग्रेकृत्य गाङ्गेये हते सतीत्यन्वयः ॥ ४ ॥ संकल्प इच्छा । वो युष्माकम् । **सहभृत्येति** । सहभृत्यगणमित्यादौ सभावो वैकल्पिकः । न चिरादित्यत्र अचिरादित्यर्थः । नशब्द एवायं न तु नञ्समासः ॥ ५ ॥

---

1 पाण्डवानां या भीष्महननरूपा श्लाघा तत्सदृश्येवास्माकं अभिमन्युवधरूपा भविष्यति इत्युक्त्या पाण्डव-कौरवश्लाघासादृश्यवर्णनात् लेशाख्यं नाट्याङ्गम्; तल्लक्षणं च—'स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ।' इति । 2 वर्णितं चैतन्महाभारते ( भीष्म० अ० ११९ )—'ततः किरीटी संक्रुद्धो भीष्ममेवाभ्यवर्तत ॥ शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ।······न चैष समरे शक्यो जेतुं वज्रभृता अपि । न चापि सहिता वीरा देवदानवराक्षसाः । मां चापि शक्ता निर्जेतुं किमु मर्त्या महारथाः ॥ एवं तयोः संवदतोः फाल्गुनो निशितैः शरैः । शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ॥···अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः । कृन्तन्ति मम गात्राणि माघमासे गवा इव ॥' इत्यादिना । 3 अत्र 'भीष्मादिवधेन किञ्चिल्लक्ष्यस्य कर्णाद्यवधाच्चालक्ष्यस्य क्रोधबीजस्योद्भेदः' इति दशरूपके; उद्भेदलक्षणं च तत्रैव—'लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत् ।' ( १।३० ) इति । 4 अत्र 'न चिरात् पाण्डुसुतं सुयोधनः' इति वाच्ये 'पाण्डुसुतः सुयोधनम्' इति दर्पेण विपरीतोक्तेः भ्रंशाख्यं नाटकाङ्गम् । तल्लक्षणम् दर्पणे—'दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः ।' इति; तट्टीकाकारस्तर्कवागीशस्तु—'चिरान्न हन्तीति वक्तुमिष्टम्, अचिरात् हन्तीत्यन्यथा जातम्' इति व्याख्यातवान् ।

---

**पाठा०**—१. 'देव, नैवेदं कल्पयितुमर्हसि'. २. 'यतः'. ३. 'तव'. ४. 'नावलोकितपूर्वः'; 'नावलोचितपूर्वः'. ५. 'यत एवं ब्रवीमि'. ६. 'एवमेवैतत्'; 'एवमेतत्'. ७. 'सबलम्'. ८. 'शान्तं पापं शान्तं पापम्'.

**राजा**—विनयंधर, किं मयोक्तम् ? ।

**कञ्चुकी**—

सहभृत्यगणं सबान्धवं सहमित्रंससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतं सुयोधनः ॥ ६ ॥

एतद्विपरीतमभिहितं देवेन ।

**राजा**—विनयंधर, अद्य खलु भानुमती यथापूर्वं मामनामन्त्र्य वासभवनात्प्रातरेव निष्क्रान्तेति व्याक्षिप्तं मे मनः । तदादेशय तमुद्देशं यत्रस्था भानुमती ।

**कञ्चुकी**— इत इतो देवः ।

( उभौ परिक्रामतः । )

**कञ्चुकी**—( पुरोऽवलोक्य । समन्ततो गन्धमाघ्राय । ) देव, पश्य पश्य । एतत्तुहिनकणशिशिरसमीरणोद्वेल्लितवृन्तबन्धुरशेफालिकाविरचितकुसुमप्रकरमीषदालोहितमुग्धवधूकपोलपाण्डुफलिनीविजितश्यामलतासौभाग्यमुन्मीलितबहुलकुन्दकुसुमसुरभिशीतलं प्रभातकालरमणीयमग्रतस्ते बालोद्यानम् । तदवलोकयतु देवः । तथा हि,—

प्रालेयमिश्रमकरन्दकरालकोशैः
पुष्पैः समं निपतिता रजनीप्रबुद्धैः ।
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
संमूर्छितानि कमलान्यलयः पतन्ति ॥ ७ ॥

---

पतति । 'न चिरात्पाण्डुसुतं सुयोधनः' इत्याकारेण ॥ ६ ॥ व्याक्षिप्तं चपलम् ॥ इत इतः । गम्यतामिति शेषः ॥ तुहिनं हिमम् । शिशिरं शीतलम् । उद्वेल्लितं चपलीकृतम् । वृन्तं प्रसवबन्धनम् । बन्धुरं निम्नोन्नतम् । शेफालिका पुष्पभेदः । 'शेफालिका तु सुवहा निर्गुण्डी नीलिकापि सा' इत्यमरः । 'प्रियंगुः फलिनी फली' इत्यमरः । श्यामलता 'सर्तुल' इति प्रसिद्धा । **प्रालेयेति** । प्रालेयं हिमम् । मकरन्दः पुष्परसः । 'करालो दन्तुरे तुङ्गे' इत्यमरः । कोशो मध्यम् । मुकुलं कलिका । अलयो

---

**पाठा०**—१. 'आत्मानम्'. २. 'आक्षिप्तम्'; 'आक्षिप्तमिव'. ३. 'चेतः'. ४. 'इत इत एतु देवः'; 'इत एतु देवः'. ५. 'समीरणोद्वेल्लितबन्धनच्युतशेफालिका–'. ६. 'प्राकारम्'. ७. 'कपोलपाटललोध्रप्रसूनविजित–'. ८. 'वितत'. ९. 'बकुल'. १०. 'कन्दकुसुमसुरभिशीतलम्'; 'कन्दलसमशीतलपरिमलम्'. ११. 'रजनीविबुद्धैः'. १२. 'प्रयान्ति'.

**राजा**—([1]समन्तादवलोक्य।) विनयंधर, इदमपरममुष्मिन्नुषसि [2]रमणीयतरम् । पश्य,—

> जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
>
> [3]र्भाभिर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः ।
>
> स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
>
> मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥ ८ ॥

**कञ्चुकी**—देव[4], नन्वेषा भानुमती सुवदनया तरलिकया च [5]सहोपविष्टा तिष्ठति । तदुपसर्पतु देवः ।

**राजा**—(दृष्ट्वा।) आर्य विनयंधर, गच्छ त्वं साङ्ग्रामिकं मे रथमुपकल्पयितुम् । अहमप्येष[6] देवीं दृष्ट्वानुपदमागत एव ।

**कञ्चुकी**—[7]एष कृतो देवादेशः । (इति निष्क्रान्तः।)

**सखी**—पिअसहि, अवि सुमरिदं तुए ? । [ प्रियसखि, अपि स्मृतं त्वया ? । ]

**[8]भानुमती**—सहि, सुमरिदं । अज्ज किल पमदवणे आसीणाए [9]मम अग्गदो एव्व दिव्वरूविणा णउलेण अहिसदं वावादिदं । [ सखि, स्मृतम् । अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम् । ]

---

भ्रमराः । कमलानि पतन्ति गच्छन्ति ॥७॥ उषसि प्रभाते । **जृम्भेति** । जृम्भारम्भो विकासोपक्रम इत्यर्थः । दलोपान्तः पत्रसमीपम्, तदेव जालमानायो गवाक्षं वा । भातीति भाः । 'अन्येभ्योऽपि दृश्यते' ( ३।२।१७८ ) इति क्विप् । 'पुंलिङ्गोऽप्ययम्' इत्यमरटीकायां श्रीकरः । यद्वा भाभिरिति पक्षे पुंलिङ्गोऽप्ययं भास्शब्दः । 'प्रभायामपि भाःशब्दः सान्तः पुंलिङ्ग एव च' इति शब्दभेदादित्यवधेयमिह सहृदयेन । भानोर्भाभिस्तेजोभिः स्पृश्यमाना इति संबन्धः । 'गन्धमात्रे परिमलो विमर्दोत्थेऽपि दृश्यते' इति धरणिः । स्तोकमल्पम् । द्विरेफो भ्रमरः । नृपतिपक्षेऽपि सर्वं योज्यम् ॥ ८ ॥ साङ्ग्रामिकं युद्धे साधु ॥ सखि, स्मृतं त्वया ? ॥ सखि, स्मृतम् । अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा

---

पाठा०—१. 'समन्तादवलोक्य' इति क्वचिन्नास्ति. २. 'रमणीयतरमवलोकय'; 'रमणीयतरमवलोक्यते'. ३. 'हस्तैर्भानोः'; 'भानोरुस्रैः'. ४. 'महाराज, एषा देवी सुवदनातरलिकाभ्यां सह सुखोपविष्टा तिष्ठति'. ५. 'पर्युपास्यमाना'. ६. 'एष' इति पुस्तकान्तरे नास्ति. ७. 'यथाज्ञापयति देवः'. ८. 'भानुमती—सहि, सुमरिदं । सखी—कहेदु पिअसही । भानुमती–'अज्ज किल'. ९. 'अग्गदो केण वि अदिसइददिव्वरूवेण'.

उभे—( अपवार्य । आत्मगतम् । ) [1]संतं पावं ! । पडिहदं अमंगलम् । ( प्रकाशम् । ) तदो तदो । [ शान्तं पापम् ! । प्रतिहतममङ्गलम् । ततस्ततः । ]

भानुमती—[2]अदिसंदावोव्विग्गहिअआए विसुमरिदं मए । ता पुणोवि सुमरिअ कहइस्सं । [ अतिसंतापोद्विग्नहृदयया विस्मृतं मया । तत्पुनरपि स्मृत्वा कथयिष्ये । ]

[3]राजा—अहो, देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्रयमाणा तिष्ठति । भवतु । अनेन लताजालेनान्तरितः शृणोमि तावदासां विश्रब्धालापम् । ( [4]तथा स्थितः । )

[5]सखी—सहि, अलं संदावेण । कहेदु पिअसही । [ सखि, अलं संतापेन । कथयतु प्रियसखी । ]

राजा—किं नु खल्वस्याः संतापकारणम् ! । अथवानामन्त्र्य मामियमद्य वासभवनान्निष्क्रान्तेति समर्थित एवास्या [6]मया कोपः । अयि भानुमति, अविषयः खलु दुर्योधनो भवत्याः कोपस्य ।[7]

किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखं नाद्यासि संभाविता ।
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो
दोषं पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ९ ॥

---

नकुलेनाहिशतं व्यापादितम् । अत्र किल निश्चये । दिव्यरूपिणा सुन्दरेण । नकुलो 'नेउर' इति प्रसिद्धजन्तुः पाण्डवश्च । अहिशतं सर्पशतम् । अथ च शत्रुशतम् ॥ अपवार्य । शान्तं पापम् । प्रतिहतममङ्गलम् । अत्रापवार्य निभृतम् । प्रकाशमिति । 'यत्तु सर्वजनश्राव्यं प्रकाशं तन्निगद्यते' इति भरतः । ततस्ततः ॥ अतिसंतापोद्विग्नहृदयया विस्मृतं मया । तत्पुनरपि स्मृत्वा कथयिष्ये ॥ मन्त्रयमाणा मन्त्रं कुर्वती ॥ सखि, अलं संतापेन । कथयतु प्रियसखी ॥ किं कण्ठ इति । निद्रायाश्छेदोऽवसानं तत्र विवर्तनं पार्श्वपरिवर्तनम् । संभाविता संमुखीकृता । संकथा आलापः । उपालम्भो विसंवादः ॥ ९ ॥

---

पाठा०–१. 'संतं पावं संतं पावं'. २. 'संदावावगहीदहिअआए पुणोवि मए विसुमरिदं'. ३. 'राजा–( अवलोक्य । ) अहो'. ४. 'इति तथा स्थितः'; 'इति तथा कृत्वा स्थितः'. ५. 'सखी—अलं संदावेण । कहेदु पिअसही', 'उभे—सहि, अलं संदावेण । कहेदु पिअसही'; 'सखी—अइ, अलं संदावेण । कहेदु पिअसही'. ६. 'मयि, ७. 'पश्य'. ८. 'अभिमुखी'.

( विचिन्त्य । ) अथवा,—

इयमस्मदुपाश्रयैकचित्ता
मनसा प्रेमनिबद्धमत्सरेण ।
नियतं कुपितातिवल्लभत्वा-
त्स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥ १० ॥

तथापि[1] शृणुमस्तावत्किं नु वक्ष्यतीति ।

**भानुमती**[2]—तदो अहं तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा हिदहिअआ अ । तदो उज्झिअ तं आसणट्ठाणं लदामंडवं पविसिदुं आरद्धा । [ ततोऽहं तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । तत उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा । ]

**राजा**[3]–( सवैलक्ष्यम् ) किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । तत्किमनया पापया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः । ( सोत्प्रेक्षम् 'इयमस्मद्–' [ २।१० ] इति पठित्वा । ) मूढ दुर्योधन, कुलटाविप्रलभ्यमानमात्मानं बहु मन्यमानोऽधुना किं[4] वक्ष्यसि । ([5] किं कण्ठे–[ २।९ ] इत्यादि पठित्वा । दिशोऽवलोक्य । ) अहो, एतदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनसंक[6]-

**इयमिति।** अपाश्रयः संश्रयः। तद्गततेति यावत् । मनसा करणभूतेनास्मदुपाश्रयैकचित्तेत्यन्वयः। निबद्धं निरस्तम् । 'मात्सर्यमपि मत्सरः' इत्यमरः ॥१०॥ ततोऽहं तस्यातिशयदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च। तत उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा ॥ माद्रीसुतो नकुलः । 'विप्रलम्भो विसंवादः' इत्यमरः । 'कुलटा बन्धकीत्वरी' इत्यमरः । 'विविक्तौ पूतविजनौ' इत्यमरः ।

पाठा०–१. 'तथापि किं वक्ष्यतीति शृणुमस्तावद्'. २. 'भानुमती—हला, अहं तदो तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा । राजा—किं नाम. ३. 'राजा—किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता । तत्कथमनया माद्रीसुतानुरक्तया'. ४. 'किं न वक्ष्यसि'; 'किं किं न वक्ष्यसि'. ५. '('किं कण्ठे–' इत्यादि पठित्वा । दिशोऽवलोक्य )' इति केषुचित्पुस्तकेषु नास्ति. ६. 'कथासु'.

यासु च पक्षपातः । दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः । आः पापे [1]मत्परिग्रहपांसुले,—

> तद्भीरुत्वं तव मम पुरः साहसानीदृशानि
>
> श्लाघा सास्मद्वपुषि विलयव्युत्क्रमेऽप्येष रागः ।
>
> तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः
>
> ख्याते तस्मिन्वितमसि कुले [2]जन्म कौलीनमेतत् ॥ ११ ॥

**सखी**—तदो तदो । [ ततस्ततः । ]

**भानुमती**—[3]तदो सोवि मं अणुसरंतो एव्व लदामंडवं पविट्ठो । [ ततः सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः । ]

**राजा**—अहो, कुलटोचितम[4]स्याः [5]पापाया [6]अशालीनत्वम् !

> यस्मिंश्चिरप्रणयनिर्भरब[7]द्धभाव-
>
> मावेदितो रहसि मत्सुरतोपभोगः ।
>
> तत्रैव दुश्चरितमद्य निवेदयन्ती
>
> [8]ह्रीणासि पापहृदये न सखीजनेऽस्मिन् ॥ १२ ॥

**उभे**—तदो तदो । [ ततस्ततः । ]

**भानुमती**—तदो तेण [9]सप्पगब्भपसारिअकरेण अवहिदं मे त्थणंसुअं । [ ततस्तेन सप्रगल्भप्रसारितकरेणापहृतं मे स्तनांशुकम् । ]

---

बन्धकी वेश्या । सारः स्थैर्यम् । परिग्रहोऽत्र कलत्रम् । तत्र पांसुला असती । तद्भीरुत्वमिति । ईदृशानि परपुरुषगमनरूपाणि । व्युत्क्रमोऽतिक्रमः । रागोऽनुरागः । चापले चाञ्चल्ये । तव कोऽपि पन्थाः किमपि वर्त्म । सर्वत्र तवेत्यन्वयः । कौलीनमपवादः । 'कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः इति विश्वः ॥ ११ ॥ ततः सोऽपि मामनुरुध्यमानस्तमेव लतामण्डपं प्रविष्टः ॥ अशालीनत्वं निर्लज्जता । यस्मिन्निति । 'प्रणयः प्रेम्णि विश्वासे' इति विश्वः । इदं क्रियाविशेषणम् । भावोऽभिप्रायः । रहसि एकान्ते । ह्रीणा लज्जावती ॥१२॥ ततस्तेन सप्रगल्भप्रसा-

---

पाठा०—१. 'असत्परिग्रहपांसुले'; 'मत्परिग्रहपांसनि'. २. 'जन्म लोकापवादः'. ३. 'तदो अहं तुवरिदं आसणट्ठाणं एदं लदामंडवं पविट्ठा' । तदो सोवि—'. ४. 'एतस्याः'. ५. 'पापशीलायाः'. ६. 'पापशीलत्वम्'; 'दुःशीलत्वम्'. ७. बालभावम्'. ८. 'ह्रीतासि'. ९. 'सगव्वं पसारिअकरेण अवहरिअं'.

**[1]राजा**—( सक्रोधम् । ) [2]अलमिदानीमतःपरमाकर्णनेन ! । भवतु तावत्तस्य परवनितावस्कन्दनप्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि । ( किंचिद्गत्वा । विचिन्त्य । ) अथवा इयमेव तावत्पापशीला प्रथममनुशासनीया । ( इति निवर्तते । )

**उभे**—तदो तदो । [ ततस्ततः । ]

**भानुमती**—[3]तदो अज्जउत्तस्स पभादमंगलतूररवमिस्सेण वार-विलासिणी[4]जणसंगीदरवेण पडिबोधिदम्हि । [ तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसंगीतरवेण प्रतिबोधितास्मि । ]

**राजा**—( [5]सवितर्कम् । ) किं[6] नाम प्रतिबोधितास्मीति स्वप्रदर्शनमनया वर्णितं भवेत् । [7]अथवा सखीवचनादेव व्यक्तिर्भविष्यति ।

( उभे सविषादमन्योन्यं पश्यतः । )

**सुवदना**—जं [8]एत्थ अच्चाहिदं तं भाईरहीप्पमुहाणं णईणं सलिलेण अवहारीअदु । [9]बम्हणाणं हुदाहुदिसुअंधिणा ज्जलणेण अवहारीअदु । [ यदिहात्याहितं तद्भागीरथीप्रमुखानां नदीनां सलिलेनापह्रियताम् । ब्राह्मणानां हुताहुतिसुगन्धिना ज्वलनेनापह्रियताम् । ]

---

रितकरेण सर्पगर्भप्रसारितकरेण वाऽपहृतं मे स्तनांशुकम् ॥ अवस्कन्द आस्कन्दः । जीवितं जीवनम् ॥ तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसंगीतरवेण प्रतिबुद्धास्मि । सखि सुवदने, कथय किमत्र प्रशस्तं, किं वाऽशुभसूचकमिति । अत्र 'आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन तु' इति भरतः । वारविलासिनी वेश्या ॥ यदिहात्याहितं तद्भागीरथीप्रमुखानां नदीनां जलेनापह्रियताम् । ब्राह्मणानां हुताहुतिसुरभिगन्धिना ज्वलनेनापह्रियताम् । अत्र अत्याहितमप्रशस्तम् ॥

---

**पाठा०**–१. 'राजा—( विचिन्त्य । ) सप्रगल्भप्रसारितकरेणापहृतं मे स्तनांशुकम् । (सक्रोधम् ।) अलं—'; 'राजा—(विचिन्त्य । सगर्वम् ।) प्रसारितकरेणापहृतं मे स्तनांशुकम् ।' (सक्रोधम् ।) अलं–'. २. 'अलमतःपरं श्रुत्वा'. ३. 'हला, तदो अहं अज्जउत्तस्स'. ४. 'वारविलासिणीसंगीदसद्देण'. ५. 'सवितर्कम्' इति क्वचिन्नास्ति. ६. 'किं नु खलु'; 'किं नाम खलु'. ७. '(विचिन्त्य ।) भवतु, सखीवचनाद्व्यक्तिर्भविष्यति । अथवा—'. ८. 'किं वि'. ९. 'भअवदाणं बम्हणाणं वि आसीसाए आहुदिहुदेण पज्जलिदेण भअवदा हुदासणेण अ णस्सदु'; 'अ णस्सदु' इत्यत्र 'अंतरीअदु'.

**राजा**—अलं विकल्पेन । स्वप्नदर्शनमेवैतदनया वर्णितम् । मया पुनर्मन्दधियाऽन्यथैव संभावितम् ।[1]

दिष्ट्यार्धश्रुतविप्रलम्भजनित[2]क्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषार्धकथने किंचिन्मया व्याहृतम् ।
मां प्रत्याययितुं[3] विमूढहृदयं दिष्ट्या कथान्तं गता
मिथ्यादूषितयानया विरहितं दिष्ट्या न जातं जगत् ॥१३॥

**भानुमती**—हला,[4] कहेहि किं एत्थ पसत्थं किं वा असुहसूअअं त्ति । [ हला, कथय किमत्र प्रशस्तं किं वाऽशुभसूचकमिति । ]

**सखी चेटी च**—( अन्योन्यमवलोक्य । अपवार्य । ) एत्थ णत्थि त्थोअं वि सुहसूअअं । तदो[5] अलीअं कधअंती पिअसहीए अवराहिणी भविस्सं । सो दाणीं[6] सिणिद्धो जणो जो पुच्छिदो परुसं वि हिदं भणादि । ( प्रकाशम् । ) सहि, सव्वं एव्व एदं असुहणिवेदणं । ता देवदाणं पणामेण दुंजादि[7]जणपडिग्गहेण अ अंतरीअदु । ण हु दाढिणो णउलस्स[8] वा दंसणं अहिसदवहं[9] अ सिविणए पसंसंति विअक्खणाओ । [ अत्र नास्ति स्तोकमपि शुभसूचकम् । ततोऽलीकं कथयन्ती प्रियसख्या अपराधिनी भविष्यामि । स इदानीं स्निग्धो जनो यः पृष्टः परुषमपि हितं भणति । सखि, सर्वमेवैतदशुभनिवेदनम् । तद्देवतानां प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तर्यताम् । न खलु दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतवधं च स्वप्ने प्रशंसन्ति विचक्षणाः । ]

---

**दिष्ट्येति** । दिष्ट्या हर्षेण । नो निषेधे । 'अमानोना निषेधवचनाः' इति कोषात् । प्रत्याययितुं बोधयितुम् । अन्तं गता समाप्ता ॥ १३ ॥ सखि, कथय किमत्र प्रशस्तं किं वाऽशुभसूचकमिति ॥ नास्त्यत्र स्तोकमपि शुभसूचकम् । तथाप्युपदिशन्त्यो वयं प्रतिष्ठामहे । ततोऽलीकं मन्त्रयन्त्यः प्रियसख्या अपराधिन्यो भविष्यामः । स इदानीं स्निग्धो जनो यः पृष्टः सन् परुषमपि हितं भणति । सर्वमेवैतदत्यद्भुतनिवेदनम् । तथाप्यत्र यत्किमप्यत्याहितं तद्देवतानां प्रणामेन द्विजा-

---

पाठा०—१. '( सवैलक्ष्यहर्षम् । )'. २. 'वचनक्रोधात्'. ३. 'प्रत्यापयितुम्'. ४. 'हला' कहेहि किं एत्थ सुहसूअअं'. ५. जइ एत्थ अलीअं कहइस्सं ता अवराहिणी भविस्सं'. ६. 'एव्व'. ७. 'दुव्वादिपडिग्गहेण'. ८. 'णउलस्स अण्णस्स वा'. ९. 'वि'.

**राजा**—अवितथमाह सुवदना । नकुलेन पन्नगशतवधः स्तनांशुकापहरणं च नियतमनिष्टोदर्कं तर्कयामि ।

पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः ।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥ १४ ॥

( वामाक्षिस्पन्दनं सूचयित्वा । ) आः, ममापि नाम दुर्योधनस्यानिमित्तानि हृदयक्षोभमावेदयन्ति ! । ( सावष्टम्भम् । ) अथवा भीरुजनहृदयप्रकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु । गीतश्चायमर्थोऽङ्गिरसा,—

ग्रहाणां चरितं स्वप्नोऽनिमित्तौत्पातिकं तथा ।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ १५ ॥

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि ।

**भानुमती**—हला सुवअणे, पेक्ख दाव उदअगिरिसिहरंतरविमुक्करहवरो विअलंतसंझाराअप्पसण्णदुरालोअमंडलो जादो भअवं दिवहणाहो । [ हला सुवदने, पश्य तावदुदयगिरिशिखरान्तरवि-

---

तिजनप्रतिग्रहेण चान्तरीक्रियताम् । न पुनर्दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतव्यापादनं च स्वप्ने प्रशंसन्ति विचक्षणाः । अत्र परुषं निष्ठुरम् । अन्तरीक्रियतां शाम्यताम् । इहाशीरलंकारः । यदुक्तं तत्रैव—'आशीरिष्टार्थशंसनम्' इति । विचक्षणाः पण्डिताः ॥ अवितथं सत्यम् । पन्नगः सर्पः । उदर्क उत्तरविशुद्धिः । **पर्यायेणेति** । 'अकामानुमतौ कामम्' इत्यमरः । इयं शतसंख्या पुनर्मां स्पृशतीत्यन्वयः ॥ १४ ॥ आवहन्तीत्यत्र रूढिच्युतकदोषो नास्ति, विशेषगुणेभूद्भूतत्वादित्यवधेयम् । **ग्रहाणामिति** । सूर्यादिदशाः स्वप्नोऽनिमित्तमकस्मादौत्पातिकमुत्पातवातादिकमेते काकतालीयमतर्कितोपनतं यथा स्यादेवं फलन्ति । अतस्तेभ्यः प्राज्ञाः पण्डिता न बिभ्यति । न भयं कुर्वन्तीत्यर्थः । तेभ्य इति 'भीत्रार्थानां भयहेतुः' ( १।४।२५ ) इति पञ्चमी ॥ १५ ॥ सुवदने, पश्य तावदुदयशैलशिख-

---

1 अत्र पन्नगशतवधेन भाविकौरवशतवधस्य वितर्कसादृश्यात् तुल्यतर्काख्यं नाटकाङ्गम् । 'तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना ।' इति ।

---

**पाठा०**—१. 'स्तनांशुकाहरणमिति'; 'स्तनांशुकाहरणं च'. २. 'अरिष्टोदर्कमस्माकं तर्कयामि'. ३. 'आः, कथं'. ४. 'आवहन्ति'. ५ कम्पनेषु'. ६. 'एवंविधेषु काश्मलेषु' । ७. 'निमित्तान्यौपपातिकाः; अनिमित्तान्युपयाचितम्'; 'अनिमित्तोत्पादकम्'. ८. 'पेक्ख दाव' इति क्वचिन्नास्ति. ९. सिहरंतरित'. १०. 'विअलंतसंझाराओ आसण्णदुरालोअमण्डलो'; 'विअलिअसंझाराअप्पसण्णदुरालोअमण्डलो'.

मुक्तरथवरो विगलत्संध्यारागप्रसन्नदुरालोकमण्डलो जातो भगवान् दिवसनाथः । ]

सखी—सहि[1], रोसा[2]णिदकणअपत्तसरिसेण [3]लदाजालंतरापडिदकिरणनिवहेण पिंजरि[4]दोज्जाणभूमिभाओ पू[5]रिदपडिण्णो विअ रिउदु[6]प्पेक्खणिज्जो जा[7]दो भअवं सहस्सकिरणो । ता समओ दे कु[8]सुमचंदणगब्भेण अग्घेण पज्जुवट्ठादुं । [ सखि, रोसानितकनकपत्रसदृशेन लताजालान्तरापतितकिरणनिवहेन पिञ्जरितोद्यानभूमिभागः पूरितप्रतिज्ञ इव रिपुदुःप्रेक्षणीयो जातो भगवान् सहस्रकिरणः । तत्समयस्ते कुसुमचन्दनगर्भेणार्घेण पर्युपस्थातुम् । ]

भानुमती—हञ्जे तरलिए, उवणेहि मे अग्घभाअणं जाव भअवदो स[9]हस्सरस्सिणो सवरिअं णिव्वट्टेमि । [ हञ्जे तरलिके, उपनय मेऽर्घ्यभाजनं यावद्भगवतः सहस्ररश्मेः सपर्यां निर्वर्तयामि । ]

चेटी—जं देवी आणवेदि । ( [10]इति निष्क्रान्ता । ) [ यद्देव्याज्ञापयति । ]

रान्तरविमुक्तरथवरो विगलत्संध्यारागप्रसन्नदुरालोकमण्डलो जातो भगवान् दिवसनाथः ॥ सखि, रोसानितकनकपत्रसदृशेन लताजालान्तरपतितकिरणनिवहेन पिञ्जरितोद्यानभूमिभागः पूरितप्रतिज्ञ इव रिपुदुःप्रेक्षणीयो जातो भगवान् सहस्रकिरणः । तत्समयस्ते कुसुमचन्दनगर्भणार्घेण पर्युपस्थातुम् । अत्र रोसानितं निर्मलीकृतम् । पिञ्जरितः कपिशीकृतः । पर्युपस्थातुं पूजयितुम् । हञ्जे तरलिके, उपनय मेऽर्घभाजनं यावद्भगवतः सहस्ररश्मेः सपर्यां निर्वर्तयामि । अत्र सपर्या

पाठा०-१. 'भट्टिणि'. २. 'रोसाणिदकणकंतिसरिस्सरीएण'; रोसाण्णिदकण्णरअणकंतिसरिस्सरीएण'; 'साणिदकणअरओसरिसेण'; 'रोसरुणिदकणअरओसरिसेण'; 'कणअरओसरिसेण'. ३. 'लदाजालंतरोपहिदकिरणजालेण'. ४. 'पिसंगीकिदोज्जाणभूमिभाओ'. ५. 'पूरिदपडिण्णो विअ' इति क्वचिन्नास्ति. ६. 'दुप्पेक्खणिज्जो'. ७. 'भअवं सहस्सरस्सी संवुत्तो'. ८. 'लोहिदचंदणकुसुमगब्भेण'. ९. 'सहस्सकिरणस्स'. १०. '( इति निष्क्रम्य, पुनः प्रविश्य । ) भट्टिणि, एदं अग्घभाअणं । णिव्वट्टेदु भअवदो सहस्सरस्सिणो सवरिअं । राजा—अयमेव साधुतरोऽवसरः प्रियासमीपमुपगन्तुम् । ( इत्युपसर्पति । ) सखी—( विलोक्यात्मगतम् । ) कहं महाराओ आअदो । हंत, जादो से णिअमभंगो । भानुमती–( दिनकराभिमुखी भूत्वा । ) भअवं अम्बरमहासरेक्कसहस्सपत्त पुव्वदिसावहूमुहमंडणकुंकुमविसेसअ सअलभुवणे-

राजा—अयमेव साधुतरोऽवसरः समीपमुपगन्तुं देव्याः ।

( प्रविश्य । )

चेटी—देवि, एदं अग्घभाअणं । ता णिव्वट्टीअदु भअवदो सहस्सरस्सिणो सवरिआ । [ देवि, एतदर्घ्यभाजनम् । तन्निर्वर्त्यतां भगवतः सहस्ररश्मेः सपर्या । ]

( राजोपसृत्य संज्ञया परिजनमुत्सार्य स्वयमेवार्घ्यपात्रं गृहीत्वा ददाति । )

सखी—( स्वगतम् । ) कहं महाराओ समाअदो । हंत, किदो से पिअसहीए णिअमभंगो रण्णा । [ कथं महाराजः समागतः । हन्त, कृतोऽस्याः प्रियसख्या नियमभङ्गो राज्ञा । ]

भानुमती—( दिनकराभिमुखी भूत्वा । ) भअवं, अंबरमहासरेक्कसहस्सपत्त, पुव्वदिसावहूमुहमंडलकुंकुमविसेसअ, सअलभुवणांगणदीवअ, एत्थ सिविणअदंसणे जं किं वि अच्चाहिदं तं भअवदो पणामेण कुसलपरिणामी ससदब्भादुअस्स अज्जउत्तस्स होदु । ( अर्घ्यं दत्त्वा । ) हला, उवणेहि मे कुसुमाइं जाव अवराणं वि देवदाणं सवरिअं णिव्वट्टेमि । ( हस्तौ प्रसारयति । ) [ भगवन्, अम्बरमहासरएकसहस्रपत्र, पूर्वदिशावधूमुखमण्डलकुङ्कुमविशेषक, सकलभुवनाङ्गनदीपक, अत्र स्वप्नदर्शने यत्किमप्यत्याहितं तद्भ-

---

पूजा ॥ यद्देव्याज्ञापयति ॥ देवि, एतदर्घभाजनम् । तन्निर्वर्त्यतां सहस्ररश्मेः सपर्या ॥ भगवन्नम्बरसरोवरैकसहस्रपत्र, पूर्वदिग्वधूमुखमण्डलकुङ्कुमविशेषक, सकलभुवनाङ्गनदीपक, इह स्वप्नदर्शने यत्किमप्यत्याहितं तद्भगवतः प्रणामेन

---

1 इत्यत आरभ्य 'कुसुमानि भूमौ पातयति' इत्यनेन नर्मणा दुःस्वप्नदर्शनोपशमार्थं देवतापूजाविघ्नकारिणा बीजोद्घाटनात् परिहासस्य प्रतिमुखाङ्गत्वम्; 'परिहासवचो नर्म' इति तल्लक्षणं च दशरूपके ।

---

करअणप्पदीव, जं एत्थ सिविणअदंसणे किं वि अच्चाहिदं तं भअवदो पणामेण सब्भादुअस्स अज्जउत्तस्स कुसलपरिणामी होदु । (अर्घ्यं दत्त्वा ।) हञ्जे तरलिए, उवणेहि मे पुणो वि कुसुमाइं अवराणं वि देवदाणं सवरिअं णिव्वट्टइदुं । ( इति हस्तौ प्रसारयति । ) ( राजा संज्ञया परिजनमुत्सार्य पुष्पाणि स्वयमुपनयति । स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति च ।) भानुमती—( सरोषम् । ) अहो पमादो परिअणस्स । ( परिवृत्य दृष्ट्वा । ससंभ्रमम् । ) कधं अज्जउत्तो ।'.

पाठा०–१. '(दिनकराभिमुखीभूय ।)'.

गवतः प्रणामेन कुशलपरिणामि सशतभ्रातृकस्यार्यपुत्रस्य भवतु। हला, उपनय मे कुसुमानि यावदपरासामपि देवतानां सपर्यां निर्वर्तयामि।]

([1]राजा पुष्पाण्युपनयति। स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति।)

**भानुमती**—(सरोषम्।) अहो पमादो परिअणस्स!। ([2]परिवृत्य दृष्ट्वा। ससंभ्रमम्।) कधं अज्जउत्तो?। [अहो प्रमादः परिजनस्य!। कथमार्यपुत्रः?।]

**राजा**—देवि, अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे। तत्प्र[3]भवत्यनुशासने देवी।

([4]भानुमती लज्जां नाटयति।)

**राजा**—अयि प्रिये,—

विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः
परिजनपथवर्तिन्यत्र किं संभ्रमेण।
स्मितमधुरमुदारं देवि[5] मामालपोच्चैः
प्र[6]भवति मम पाण्योरञ्जलिस्त्वं स्पृशास्मान्॥ १६॥

---

कुशलपरिणामं मम सशतभ्रातृकस्यार्यपुत्रस्य भवतु। हला, उपनय मे कुसुमानि। अपरासामपि देवतानां सपर्या निर्वर्तयामि। अत्र सहस्रपत्रं कमलम्। विशेषकस्तिलकः। 'अङ्गनं चत्वराजिरे' इत्यमरः। अत्र णत्वविधायकसूत्राभावान्नकारान्तत्वमेवेत्यवधेयम्॥ कथं महाराजः समागतः। हञ्जे, कुतोऽस्याः प्रियसख्या नियमभङ्गो राज्ञा॥ अहो प्रमादः परिजनस्य। कथमार्यपुत्रः॥ अनिपुणोऽकुशलः॥ **विकिरेति**। विकिर विक्षिप। अपाङ्गं नेत्रप्रान्तः, तत्र संसर्पि गमनशीलम्। परिजनपथवर्तिनि सेवकमार्गस्थिते मयि। किं संभ्रमेणोद्वेगेन?। स्मितमधुरमुदारं मनोहरं च यथा स्यादेवं हे देवि, मामालप ब्रूहि। मम पाण्योरञ्जलिरुच्चैः

---

1 अत्र 'प्रभवतु' इति टीकानुगुणः पाठः। 2 श्लोकेऽस्मिन् मालिनी वृत्तम्; 'न-न-म-य-ययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम्।

---

पाठा०–१. '(राज्ञः पुष्पाण्युपनयतः स्पर्शाद्धस्तादर्घ्यपात्रं भूमौ पतति।)'; '(दुर्योधनः पुष्पाण्युपनयति। भानुमत्यास्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति।)'. २. '(परिवृत्य, राजानमवलोक्य, ससाध्वसं लज्जां नाटयति।)'. ३. 'तथा प्रभवति'. ४. '(भानुमती लज्जां नाटयति।)' इति क्वचिन्नास्ति. ५. 'भीरु'. ६. 'प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम्'.

**भानुमती**—अज्जउत्त, अब्भणुण्णादाए तुए अत्थि मे कस्सिं वि णिअमे अहिलासो । [ आर्यपुत्र, अभ्यनुज्ञातायास्त्वयास्ति मे कस्मिन्नपि नियमेऽभिलाषः । ]

**राजा**—श्रुतविस्तर एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति । तदलमेवं प्रकृतिसुकुमारमात्मानं खेदयितुम् ।

**भानुमती**—अज्जउत्त, मे संका बाहेइ । ता अणुमण्णदु मं अज्जउत्तो । [ आर्यपुत्र, मां शङ्का बाधते । तदनुमन्यतां मामार्यपुत्रः । ]

**राजा**—( सगर्वम् । ) देवि, अलमनया शङ्कया । पश्य,—

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां[1] फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
भीरु भ्रातृशतस्य यो भुजवनच्छायासुखोपास्थिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ॥१७॥

**भानुमती**—अज्जउत्त, ण हु मे किं वि आसंकाकालणं तुम्हेसु सण्णिहिदेसु । किं तु अज्जउत्तस्स एव्व मणोरहसंपत्तिं अहिणं-

---

प्रभवतु । अयमञ्जलिर्बद्ध इत्यर्थः । अतोऽस्मांस्त्वं स्पृश । स्पर्शमपि मम विधेहीत्यर्थः । पाण्योरञ्जलिरित्यत्रार्थपौनरुक्त्यं न देश्यम् । उक्तपोषालंकारेण तदुद्धारात् ॥ १६ ॥ आर्यपुत्र, अभ्यनुज्ञातायास्त्वयास्ति मे कस्मिन्नपि नियमेऽभिलाषः ॥ आर्यपुत्र, मां शङ्का बाधते । तदनुमन्यतां मामार्यपुत्रः ॥ **किं नो व्याप्तेति** । अक्षौहिणी संख्याभेदः । किं द्रोणेनेत्यादौ फलमित्यनुषज्यते । अङ्गराजः कर्णः । क्लाम्यसि परिश्राम्यसि । हे भीरु ॥ १७ ॥

---

1 अक्षौहिणीप्रमाणं तु महाभारते प्रोक्तं—'अक्षौहिण्याः प्रमाणं तु खाँगाँष्टैकद्विकैर्गजैः । रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः ।' इति—गजाः २१८७०, रथाः २१८७०, अश्वाः ६५६१०, नराः १०९३५० एवं सर्वमेकीकृत्य २१८७०० अक्षौहिणी भवति ।

---

पाठा०–१. 'अब्भणुजाणादु मं महाराओ । अत्थि मे'. २. 'तदलं प्रकृतिसुकुमारमात्मानम्'; 'तदलमेनं प्रकृतिसुकुमारमात्मानं'; 'तदलमेव प्रकृतिसुकुमारमात्मानम्', 'तदलं प्रकृतिसुकुमारमेवात्मानम्'. ३. 'अज्जउत्त, अदिमेत्तं मे संका बाहेइ'. ४. 'मे भुजवनच्छायां सुखोपास्थिता'. ५. 'ण हि किं वि मे संकाकालणं'. ६. 'एव्वं'; 'ज्जेव'.

दामि। [ आर्यपुत्र, न खलु मे किमप्याशङ्काकारणं युष्मासु संनिहितेषु । किंत्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि । ]

**राजा**—अयि सुन्दरि, एतावन्त एव मनोरथा यदहं[1] दयितया संगतः स्वेच्छया विहरामीति । पश्य,—

प्रेमाबद्ध[2]स्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथं मन्दमन्दस्मितं वा ।
वक्त्रेन्दुं ते निय[3]ममुषितालक्तकाग्राधरं वा
पातुं वाञ्छा परमसुलभं किं नु[4] दुर्योधनस्य ॥ १८ ॥

( नेपथ्ये महान्कलकलः । सर्वे आकर्णयन्ति । )

**भानुमती**—( सभयं[5] राजानं परिष्वज्य । ) परित्ताअदु परित्ताअदु अज्जउत्तो । [ परित्रायतां परित्रायतामार्यपुत्रः । ]

**राजा**—( समन्तादवलोक्य । ) प्रिये, अलं संभ्रमेण । पश्य,—

दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांशुदण्डोऽन्तरिक्षे
झाङ्कारी शर्करालः पथिषु विटपिनां स्कन्धकाषैः सधूमः ।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु किं संभ्रमेण १९

---

आर्यपुत्र, न खलु मे किमप्याशङ्काकारणं युष्मासु संनिहितेषु । किंत्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि ॥ दयिता कान्ता । **प्रेमेति** । एतादृशं वा तव वक्त्रेन्दुं पातुं दुर्योधनस्य किं वाञ्छा न ? । अपि तु वाञ्छैव । कीदृशम् । प्रेम्णा आबद्धं संबद्धमत एव स्तिमितं निश्चलं यन्नयनं तेनापीयमानं यदब्जं तद्वच्छोभा यस्य तत् । लज्जासंबन्धादस्वच्छकथमत्यल्पहासं च । नियमान्मुषितं परवासीभूतमलक्तकं यत्र तादृशोऽग्राधरो यत्र । परमतिशयेनासुलभं दुर्लभम् । अन्यतरुणानामिति शेषः ॥ १८ ॥ परित्रायतां परित्रायतां मामार्यपुत्रः ॥ न खलु शब्दो निषेधे । **दिक्ष्विति** । हे भीरु, किं संभ्रमेण भयेन ? । एतादृशः समीरो वायुः परिदिशं प्रतिदिशं वहति यतः । कीदृशः । दिक्षु व्यूढं संबद्धमङ्घ्रिपस्य पादपस्याङ्गं येन स तथा । अन्तरिक्षे व्योम्नि तृणेन जटिलो व्याप्तश्चलत्पांशुदण्डो दण्डाकारकधूलिर्यस्मात्स तथा । झाङ्कारोऽव्यक्तशब्दस्तद्युक्तः । शर्क-

---

पाठा०—१. 'यदहं वनितया संगतः'; 'यदहं समागतस्त्वया'. २. 'प्रेमावस्थ–'; 'प्रेमाबन्ध–'. ३. 'नियतमुषितालक्तकाग्राधरं'; 'नियममुषितालक्तकाङ्काधरं'; 'नियममुषितालक्तताम्राधरं'. ४. 'तु'; 'न'. ५. 'सभयं' इति क्वचिन्नास्ति. ६. 'व्याक्षिप्तपर्णः'; 'व्यूढाङ्घ्रिपादः'

**सखी**—[1]महाराअ, आरोहीअदु एदं दारुपव्वअपासादं । [2]उव्वेअकारी खु अअं [3]उत्थिदपरुसरअकलुसीकिदणअणो [4]उम्मूलिद-तरुवरसद्दवित्तत्थमंदुरापरिब्भट्टवल्लहतुलं[5]गमपज्जाउलीकिदजणपद्धइ भीसणो समीरणो । [ महाराज, आरुह्यतामेतद्दारुपर्वतप्रासादम् । उद्वेगकारी खल्वयमुत्थितपरुषरजःकलुषीकृतनयन उन्मूलिततरुव-रशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्याकुलीकृतजनपद्धतिर्भी-षणः [6]समीरणः । ]

**राजा**—( [7]सहर्षम् । ) उपकारि खल्विदं वात्याचक्रं सुयोधनस्य । यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या संपादितोऽस्मन्मनोरथः । कथमिति,—

न्यस्ता न भ्रुकुटिर्न बाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः ।
तन्व्या [8]मग्नपयोधरं भयवशादा[9]बद्धमालिङ्गितं
भङ्क्त्वास्या नियमस्य भीषणमरुन्नायं वयस्यो [10]मम ॥ २० ॥

---

राल: पथिषु शर्करायुक्तः । सि[1]ध्मादित्वात् मत्वर्थीयो लच्प्रत्ययः । विटपिनां वृक्षाणां स्कन्धकषणैर्धूमसहितः । प्रासादानां धवलगृहाणां मध्येषु नवजलधरोद्गमगम्भीरः प्रचण्डोपक्रमः । अङ्घ्रिश्चरणस्तेन पिबति जलादिकमित्यङ्घ्रिपः । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । कषणं काषः । भावे घञ् ॥ १९ ॥ महाराज, आरुह्यतामेतद्दारुपर्वतप्रासादम् । उद्वेगकारी खल्वुद्धूतपरुषरजःकलुषीकृतनयन उन्मूलितस्खलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्याकुलीकृतजनपद्धतिर्भीषणः समीरणः । अत्र दारुपर्वतः काष्ठरचनाभेदः पर्वताकारः । यद्वा । दारुपर्वत इति क्रीडापर्वतनाम । स्खलित इतस्ततो भ्रष्टः । 'वाजिशाला-तु मन्दुरा' इत्यमरः । वल्लभो गूकाखण्डस्थः (?) । पद्धतिः वर्त्म ॥ चक्रं समूहः । **न्यस्तेति** । अयं भीषणमरुन्मम वयस्यो मित्रं न ? । अपि तु मित्रमेव । यतोऽस्या नियमस्य भङ्क्ता भञ्जकः । नियमभङ्गानेवाह—भ्रुकुटिर्न न्यस्ता न कृता । न वा नेत्रजलेन नेत्रं छन्नम् । अन्यत्र मुखं न कृतम् । सशपथं स्पृशन्नहं न वारितः । यदि मां स्पृशति तदैव ते शपथ इति न कृतमित्यर्थः ।

1 अत्र सिध्मादित्वं शर्कराशब्दस्य सुधीभिर्विचारणीयम् ।

---

पाठा०–१. 'महाराओ पविसदु' २. 'उच्छेअकारी'. ३. उत्थिदो परुसरअ–'; 'उद्धूदपांसुपसरो'. ४. 'विदलिदतरुवर–'. ५. 'तुलंगमो'. ६. 'समीरणासारो'. ७. '(सहर्षम् )' इति क्वचिन्नास्ति. ८. 'भुग्नपयोधरं'; 'लग्नपयोधरं.' ९. 'आरब्ध-मालिङ्गितुम्'. १०. 'नु मे'.

तत्संपूर्णमनोरथस्य मे कामचारः संप्रति विहारेषु। तदितो दारु[1]-पर्वतप्रासादमेव गच्छामः।

(सर्वे वा[2]त्याबाधां रूपयन्तः परिक्रामन्ति।)

राजा—

कुरु घनोरु पदानि शनैः शनैर[3]यि विमुञ्च गतिं परिवेपिनीम्।
सु[4]तनु बा[5]हुलतोपरिबन्धनं मम निपीडय गाढमुरःस्थलम्॥ २१॥

(प्रवेशं रूपयित्वा।) प्रिये, अ[6]लब्धावकाशः समीरणासारः स्तिमि-तत्वाद्गर्भगृहस्य। विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम्।

भानुमती—(सहर्षम्।) [7]दिट्ठिआ इह दाव उप्पादसमीरणो ण बाधेइ। [दिष्ट्येह तावदुत्पातसमीरणो न बाधते।]

सखी—[8]आरोहणसंभमणिस्सहं पिअसहीए ऊरुजुअलं। ता कीस दाणीं महाराओ आसणवेदीं ण भू[9]सेदि?। [आरोहणसंभ्र-मनिःसहं प्रियसख्या ऊरुयुगलम्। तत्कस्मादिदानीं महाराज आसनवेदीं न भूषयति?।]

राजा—(देवीमवलोक्य।) भवति, अनल्पमेवापकृतं वात्यासं-भ्रमेण। तथा हि,—

---

तन्व्येति सर्वत्रान्वीयते। मग्नपयोधरं संबद्धस्तनं यथा स्यादेवं भयवशादा-लिङ्गितमालिङ्गनमाबद्धं कृतम्। एतानि भयात्तया कृतानीति मरुत उपकारक-तेति भावः। यद्वा अयं भीषणमरुन्न। किंतु मम वयस्य इति योजना। मैत्र्यं च तत्तत्क्रियाभिरुन्नेयम्॥ २०॥ कामचारः स्वेच्छा॥ **कुर्विति**। हे घनोरु निबिडोरुप्रदेशे। परिवेपिनीं कम्पवतीम्। हे सुतनु शोभनशरीरे। ममोरः-स्थलं गाढं दृढं निपीडय। बाहुलतयोपरि बन्धनं यथा स्यादेवम्॥ २१॥ आसारः समूहः। स्तिमितत्वं निबिडत्वम्। गर्भगृहं 'गभहर' इति प्रसिद्धम्। विस्रब्धं कृतविश्वासमिति क्रियाविशेषणम्। दिष्ट्येह तावदुत्पातमारुतो न बाधते। आरोहणसंभ्रमनिःसहं प्रियसख्या ऊरुयुगलम्। तत्किंनिमित्तं महाराज आसनवेदीं

---

पाठा०—१. 'दारुपर्वतमेव'. २. '(वात्याबाधां रूपयन्तो यत्नतः परिक्रामन्ति।)' ३. 'अपि'. ४. 'पतसि'. ५. 'बाहुलतोपनिबन्धनम्'. ६. 'लब्धान्तरः समीरण संवृतत्वाद्गर्भगृहस्य'; 'अलब्धावकाशः समीरणः संवृतत्वाद्गर्भगृहस्य'. ७. 'दिट्ठिअ उप्पादसमीरणासारो ण बाधेइ' इति पाठः. ८. 'महाराअ, आरोहण—' ९. 'अणुभूसेदि'.

रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा-
दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरः क्षिप्तहारं दुनोति[1] ।
ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वेपथुर्वर्धतेऽस्या
वात्या खेदं मृगाक्ष्याः[2] सुचिरमवयवैर्दत्तहस्ता करोति[3] ॥२२॥

( सर्वे उपविशन्ति । )

राजा—तत्किमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते[4] देवी ।[5]

लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं[1] तव चिरं[6] जघनस्थलस्य
पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥ २३ ॥

( प्रविश्य पटाक्षेपेण संभ्रान्तः । )

कञ्चुकी—देव[2], भग्नं भग्नम् ! ।

---

न भूषयति । संभ्रमेणादरेण । निःसहं निश्चलम् । **रेणुरिति** । नेत्रयोरायतत्वा-द्दैर्घ्यात्तनुरप्यल्पोऽपि रेणुर्बाधां पीडां विधत्ते । अल्पोऽप्येष कम्प उरो वक्षः-स्थलं दुनोति पीडयति । भरितमिति 'तारकादित्वादितच्' इति साधनीयम् । अन्यथा भृतमिति स्यादित्यवधेयम् । ऊर्वोराधारभूतयोर्वेपथुः कम्पो मन्देऽप्य-ल्पेऽपि याते गमने सति वर्धत इत्यन्वयः । अतो हेतोर्वायुर्मृगाक्ष्याः खेदं करोति । कीदृशः । अवयवैः शरीरावयवैर्नयनादिभिर्दत्तहस्तः । कृतसाहित्य इत्यर्थः । उभाभ्यामेव पीडा देव्या इति भावः ॥ २२ ॥ अनास्तीर्णं वस्त्रादिना-नाच्छादितम् । **लोलेति** । हे करभोरु, तव जघनस्थलस्याध्यासितुं जघन-स्थलस्याश्रयणाय ममोरुयुग्मं पर्याप्तमेव शक्तमेव । कीदृशस्य । चपलवस्त्रस्य । मदीयनेत्रमित्रस्य । कीदृशम् । वाताकुलितांशुकान्तम् । त्वदीयदृष्टिहरणशीलं च । जघनस्थलस्येत्यत्र 'शेषे षष्ठी' ( २।३।५० ) इति सूत्रेण षष्ठी । 'करस्य करभो बहिः' इत्यमरः ॥ २३ ॥ इह लोलेत्यादि भग्नमित्यन्तेन छलसंधिरुक्ता । 'इष्टार्थयुक्तं

---

1 अत्र 'अध्यासितुं तव चिरात्' इत्यारभ्य 'देव भग्नं भग्नं' इतिपर्यन्तं रथकेतनभङ्गार्थं कञ्चुकिवचनं ऊरुभङ्गार्थे संबन्धे संबद्धत्वात् गण्डाख्यं वीथ्य-ङ्गम्; तल्लक्षणं यथा दर्पणे 'गण्डं प्रस्तुतसंबन्धि भिन्नार्थं सत्वरं वचः' इति ।
2 इत आरभ्य 'बद्धाक्रन्दमिव क्षितौ' ( २।२४ ) इत्यनेन तृतीयं पताका-स्थानम्, तल्लक्षणं च तत्रैव 'अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् । श्लिष्ट-प्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥' इति ।

---

पाठा०-१. 'तनोति'. २. 'कृशाङ्ग्याः'. ३. 'अवयवैरित्थमाविष्करोति'. ४. 'कठिनं शिलातलम्'. ५. 'यतः'. ६. 'चिरात्'.

( सर्वे साकूतं पश्यन्ति । )

**राजा**—केन ? ।

**कञ्चुकी**—भीमेन ।

**राजा**—कस्य ? ।

**कञ्चुकी**—भवतः ।

**राजा**—आः, किं प्रलपसि ? ।

**भानुमती**—अज्ज, किं अणिट्टं मंतेसि ? । [ आर्य, किमनिष्टं मन्त्रयसे ? । ]

**राजा**—धिक्प्रलापिन्, वृद्धापसद, कोऽयमद्य ते व्यामोहः ? ।

**कञ्चुकी**—देव, न खलु कश्चिद्व्यामोहः । सत्यमेव ब्रवीमि,—

भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीकाणबद्धाक्रन्दमिव क्षितौ ॥ २४ ॥

**राजा**—बलवत्समीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनकेतुः । तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति ? ।

**कञ्चुकी**—देव, न किंचित् । किंतु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति ।

**भानुमती**—अज्जउत्त, अंतरीअदु एदं पसण्णबम्हणवेअघोसेण । [ आर्यपुत्र, अन्तर्यतामेतत्प्रसन्नब्राह्मणवेदघोषेण । ]

---

यद्वाक्यं भाषतेऽर्थमभीप्सितम् । वाक्यान्तरेण संयोगाच्छलोऽयमभिधीयते ॥' इति भरतः ॥ साकूतं साभिप्रायम् ॥ किं नामेति नाम प्राकाश्ये । किं तदिति प्रकाशयेत्यर्थः ॥ आर्य, किमनार्यं कथयसि ॥ **भग्नमिति** । भीमेन मरुता वायुना, अथ च भीमसेनेन । मरुता वायुपुत्रेण । मरुतेत्यत्र 'आत्मा वै जायते पुत्रः' इत्यभेदोपचाराद्वा तद्धितलोपाद्वा साधुतेत्यवधेयम् । केतनं चिह्नम् । किङ्किणीकाणः क्षुद्रघण्टिकाशब्दः ॥ २४ ॥ स्यन्दनो रथस्तस्य केतुश्चिह्नम् ॥

---

पाठा०—१. 'सातङ्कम्'; 'सभयम्'. २. 'किं नाम'. ३. 'कञ्चुकी—देव, भग्नं भीमेन'; कञ्चुकी—देव, भीमेन'. ४. 'राजा—आः, किं प्रलपसि । भानुमती—अज्ज, किं अणत्थं मंतेसि । कञ्चुकी—(सभयम् ।) देव, कथयामि सर्वम् । भग्नं भीमेन भवतो मरुता'. ५. 'यदि बलवत्समीरणयोगात्'. ६. 'अज्जउत्त, पडिहरीअदु एदं अणिमित्तं पसण्णबम्हणवेआणुघोसेण होमेण अ'; 'पसण्णबम्हणवअणमंगलवअणसमुग्घोसेण'.

**राजा**—( सावशम् । ) [1]ननु गच्छ । पुरोहितसुमित्राय निवेदय ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

( प्रविश्य । )

**प्रतीहारी**—( सोद्वेगमुपसृत्य । ) [2]जअदि जअदि महाराओ । महाराअ, महादेवी खु एसा सिंधुराअमादा दुस्सला अ पडिहार-भूमीए चिट्ठदि । [ जयति जयति महाराजः । महाराज, महादेवी खल्वेषा सिन्धुराजमाता दुःशला च प्रतीहारभूमौ तिष्ठति । ]

**राजा**—( किंचिद्विचिन्त्या[3]त्मगतम् । ) किं जयद्रथमाता दुःशला चेति । [4]कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न[5] किंचिदत्याहितमाचेष्टितं भवेत् । ( प्रकाशम् । ) गच्छ । प्रवेशय शीघ्रम् ।

**प्रतीहारी**—[6]जं देवो आणवेदि । ( इति निष्क्रान्ता । ) [ यद्देव आज्ञापयति । ]

( ततः प्रविशति संभ्रान्ता जयद्रथमाता दुःशला च । )

( उभे सास्रं दुर्योधनस्य पादयोः पततः । )

**माता**—परित्ताअदु परित्ताअदु [7]कुमालो । [ परित्रायतां परित्रायतां कुमारः । ]

( दुःशला रोदिति । )

**राजा**—( ससंभ्रम[8]मुत्थाप्य । ) अम्ब, समाश्वसिहि समाश्वसिहि । किमत्याहितम् ? । अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ? ।

**माता**—जाद, [9]कुदो कुसलं ! । [ जात, कुतः कुशलम् ! ]

**[10]राजा**—कथमिव ? ।

---

आर्यपुत्र, अन्तरीयतामेतत्प्रसन्नब्राह्मणवेदघोषेण ॥ जयति जयति महाराजः । महाराज, महादेवी खल्वेषा सिन्धुराजमाता दुःशला च प्रतीहारभूमौ तिष्ठति । अत्र सिन्धुराजो जयद्रथः । प्रतीहारभूमिर्द्वारम् ॥ अत्याहितमनर्थः ॥ यद्देव आज्ञापयति ॥ परित्रायतां परित्रायतां कुमारः ॥

---

पाठा०—१. 'किंतु सूतपुरोहिताय सुमित्राय निवेदय'. २. 'जअदु जअदु महाराओ। महाराअ, एसा क्खु जामादुणो सिंधुराअस्स मादा दुस्सला अ पडिहारभूमीए चिट्ठदि', ३. '( स्वगतम् । )'. ४. 'कच्चित्'. ५. 'कच्चित्'. ६. 'महाराओ'. ७. 'कुरुणाहो'. ८. 'उत्थाय'. ९. 'कुदो एत्थ कुसलम्'. १०. 'राजा—अम्ब, किं जातम्'.

**माता**—( साशङ्कम् । ) अज्ज खु पुंत्तवहामरिसिदेण गंडीविणा-अणत्थमिदे दिवहणाहे तस्स वहो पडिण्णादो । [ अद्य खलु पुत्रवधामर्षितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः । ]

**राजा**—( सस्मितम् । ) इदं तदश्रकारणमम्बाया दुःशलायाश्च । पुत्रशोकादुन्मत्तस्य किरीटिनः प्रलापैरेवमवस्था । अहो मुग्धत्वमबलानां नाम । अम्ब, कृतं विषादेन ! । वत्से दुःशले, अलमश्रुपातेन ! । कुतश्चायं तस्य धनंजयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम् ? ।

**माता**—जाद जाद, दे हि पुत्तबंधुवहामरिसुद्दीविदकोवाणला अणपेक्खिदसरीरा वीरा परिकमंति । [ जात जात, ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिक्रामन्ति । ]

**राजा**—( सोपहासम् । ) एवमेतत् । सर्वजनप्रसिद्धैवामर्पिता पाण्डवानाम् । पश्य,—

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता ।
तस्मिन्नेव ततज्यगाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥२५॥

---

पुत्रवधामर्षितेन गाण्डीविनाऽनस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः ॥ पुत्रवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः संचरन्ति ॥ अमर्षिता क्रोधशालिता । **हस्ताकृष्टेति** । ममाज्ञयेत्यन्वयः । व्याहृतेति णिज्गर्भम् । तेन व्याहारितेत्यर्थः । राजवधूनां गौर्गौरित्यभिधानमतिहानिकरमिति समाचारः ।

---

**पाठा०**—१. 'पुत्तवहामरिसुद्दीविदेण'. २. 'अश्रुकारणम्'. ३. 'उत्तप्तस्य'. ४. 'नाम' इति कचिन्नास्ति. ५. 'अम्ब' इति क्वचिन्नास्ति. ६. 'अस्य'. ७. 'जाद, जदो अ बंधुवहामरिसुद्दीविदकोवाणला'. ८. 'अणवेक्खिदसरीरा'; 'अणवेक्खिदसरीरावरणा'. ९. 'प्रसिद्धमेवामर्षित्वम्'. १०. 'राजचक्रमभितः'; 'राजचक्रसमितौ'. ११. 'ततज्यकार्मुकधरः'; 'स किं नु गाण्डिवधरः'.

**माता**—[1]असमत्तपडिण्णाभारस्स आप्पवहो से पडिण्णादो । [ असमाप्तप्रतिज्ञाभारस्यात्मवधोऽस्य प्रतिज्ञातः । ]

**राजा**—यद्येवमलमानन्दस्थानेऽपि ते विषादेन । [2]ननु वक्तव्य-मुत्सन्नः सानुजो युधिष्ठिर इति । [3]अन्यच्च मातः, [4]का शक्तिरस्ति धनं-जयस्यान्यस्य वा कुरुशतपरिवारवर्धितमहिम्नः कृपकर्णद्रोणाश्वत्था-मादिमहारथ[5]पराक्रमद्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य ? । अयि सुतपराक्रमानभिज्ञे,—

धर्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन ।
एकोऽपि विस्फुरितमण्डलचापचक्रं
कः सिन्धुराजमभिषेणयितुं समर्थः ॥ २६ ॥

**भानुमती**—अज्जउत्त, जइवि एव्वं तहवि [6]गुरुकिदपडिण्णाभारो ट्ठाणं खु संकाए । [ आर्यपुत्र, यद्यप्येवं तथापि [1]गुरुकृतप्रतिज्ञा-भारः स्थानं खलु शङ्कायाः । ]

**माता**—[7]साहु, कालोइदं भणिअं भाणुमदीए । [ साधु, कालोचितं भणितं भानुमत्या । ]

**राजा**—आः, ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः । पश्य,—

तस्मिन्काले तता विस्तृता ज्या प्रत्यञ्चिका यत्र तादृशं गाण्डीवं धनुर्यस्य सः । 'गाण्डीवमपि गाण्डिवम्' इति शब्दभेदः । पृथानन्दनोऽर्जुनः । आसदं स्थानम् ॥२५॥ असमाप्तप्रतिज्ञाभारस्यात्मवधस्तेन व्यवसितः । परिवारोऽनुचरः । निराव-रणमन्तरायशून्यम् । धर्मात्मजमिति । धर्मात्मजो युधिष्ठिरः । यमौ नकुलसह-देवौ प्रतीत्यन्वयः । भीमार्जुनयोर्मध्ये एकोऽपि कः सिन्धुराजमभियोद्धुं समर्थः ? । अपि तु न कोऽपि । विस्फुरितं मण्डलाकारं चापचक्रं यस्य तम् ॥ २६ ॥ यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभारः स्थानं खलु शङ्कायाः ॥

1 गुरुः कृतप्रतिज्ञायाः भारो यस्य स तथोक्तः, अर्जुन इति भावः ।

पाठा०-१. 'असमत्तपडिण्णाभरेण आप्पवहो तेण पडिण्णादो'; 'जाद, असंपत्तीए पडिण्णाभारस्स आप्पवहो से पडिण्णादो'. २ 'ननु व्यक्तं वक्तव्यम्'. ३. 'अन्यच्च' इति क्वचिन्नास्ति. ४. 'न'. ५. 'पराक्रम' इति क्वचिन्नास्ति. ६. 'गुरुकिदपडिण्णा-भरो धणंजओ त्ति णं ट्ठाणं'; 'गुरुकिदपडिण्णाभारो धणंजओ णिदाणं क्खु संकाए'. ७. 'जादे, साहु, कालोइदं तुए मंतिदं'.

कोदण्डज्या[1]किणाङ्कैरगणितरिपुभिः कङ्कटो[2]न्मुक्तदेहैः
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः ।
रेणुर्ग्र[3]स्तार्कभासां प्रचलदसिलतादन्तुराणां [4]बलाना-
माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः संपतन्ति॥२७॥

[5]अपि च भानुमति, वि[6]ज्ञातपाण्डवप्रभावे, किं त्वमप्येवमा[7]शङ्कसे ? । पश्य,—

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥ २८ ॥

कः कोऽत्र भोः ? । जैत्रं मे रथ[8]मुपकल्पय तावत् । यावदहमपि [10]तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्य-संपादितमशस्त्रपूतं मरणमुपदिशामि ।

( प्रविश्य । )

**कञ्चुकी**—देव,—

उद्घातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः ।

---

साधु, कालोचितं भणितं भानुमत्या ॥ **कोदण्डेति** । कोदण्डो धनुः । कङ्कटेन संनाहेनाभिन्नमुन्मुक्तं देहं येषाम् । तथा चात्मगौरवात्संनाहमकुर्वाणैरित्यर्थः । आतपत्रं छत्रं तैः करणभूतैः श्वेतकमलवनभ्रमं कुर्वद्भिः । दन्तुरा निम्नो-न्नताः । बलानां कोटयः संख्याभेदाः प्रदेशा वा । संपतन्ति गच्छन्ति । 'कोटि-रग्रे प्रकर्षे च संख्यापार्श्वप्रदेशयोः' इति विश्वः । 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः ॥ २७ ॥ **दुःशासनस्येति** । 'रक्तक्षतजशोणि-तम्' इत्यमरः ॥ २८ ॥ जैत्रं जयशालिनम् । अशस्त्रपूतमशस्त्रकृतम् ॥ **उद्घातेति** । उद्घात आघातः । तेन क्वणितं शब्दः । यद्वा 'स्यादभ्यादानमु-

---

पाठा०–१. 'व्याततज्यैः' २. 'कङ्कटामुक्तदेहैः'; 'कङ्कटावद्धदेहैः'. ३. 'ध्वस्तार्क-भासाम्'. ४. 'चमूनाम्'. ५. 'अयि भानुमति'. ६. 'अविज्ञातपाण्डवप्रभावे'. ७. 'आशंससे'. ८. 'उपपादय' १०. 'तस्य मिथ्याप्रतिज्ञाप्रगल्भस्य पाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितम्'; 'तस्य प्रगल्भपाण्डवस्य मिथ्या-प्रतिज्ञावैलक्ष्यं संपादयन्'; 'तस्याप्रगल्भस्य मिथ्याप्रतिज्ञावैलक्ष्यसंपादितम्'.

सज्जोऽयं नियमितवेल्गिताकुलाश्वः
शत्रूणां क्षपितमनोरथो रथस्ते ॥ २९ ॥

राजा—देवि, प्रविश त्वमभ्यन्तरमेव । ('यावदहमपि तस्य प्रगल्भपाण्डवस्य'—इत्यादि पठन्परिक्रामति ।)

(इति निष्क्रान्ताः सर्वे ।)

## इति द्वितीयोऽङ्कः ।

---

द्धात आरम्भः' इत्यमरः । तेनोद्धात उपक्रम इत्यर्थः । प्रालम्बो लम्बितो हारः । प्रहासः प्रकाशः । नियमितो वेल्लितेन गतिविशेषेणाकुलितोऽश्वो यत्र स तथा ॥२९॥ अत्राङ्के नायिकाचेट्योर्भाषा शौरसेनी । तदुक्तं तत्रैव—'नायिकायां च चेट्यां च तथा चैव विदूषके । शौरसेनीं समाश्रित्य भाषा योज्या तु नाटके ॥' इति । एवमन्यत्रापि ॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ गतोऽयमङ्को द्वितीयो वरटिप्पनेऽत्र ॥

इति द्वितीयोऽङ्कः ।

---

पाठा०—१. 'वल्गुवल्गिताश्वः'. २. 'पठित्वा'.

## तृतीयोऽङ्कः ।

( ततः प्रविशति विकृतवेषा राक्षसी । )

**राक्षसी**—( विकृतं विहस्य । सपरितोषम् । )

हदमाणुशमंशभालए [1]कुंभशहश्शवशाहिं [2]शंचिए ।
अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुवीअदु ॥ १ ॥

( [3]नृत्यन्ती सपरितोषम् । ) जइ शिंधुलाअवहदिअहे विअ दिअहे [4]दिअहे शमलकम्म पडिवज्जइ अज्जुणे तदो [6]पज्जत्तभलिदकोट्ठागाले मंशशोणिएहिं मे गेहे हुवीअदि । ( परिक्रम्य दिशोऽवलोक्य । ) अह [7]कहिं खु गदे मे लुहिलप्पिए हुवीअदि ? । होदु । शद्दावइश्शं दाव । अले लुहिलप्पिआ लुहिलप्पिआ, इदो एहि ।

[ हतमानुषमांसभारके कुम्भसहस्रवसाभिः संचिते ।
अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु ॥

यदि सिन्धुराजवधदिवस इव दिवसे दिवसे समरकर्म प्रतिपद्यतेऽर्जुनस्ततः पर्याप्तभरितकोष्ठागारं मांसशोणितैर्मे गृहं भविष्यति । अथ क खलु गतो मे रुधिरप्रियो भविष्यति ? । भवतु । शब्दायिष्ये तावत् । अरे रुधिरप्रिय रुधिरप्रिय, इत एहि । ]

---

**राक्षसीवाक्ये** । हतमानुषमांसभारके कुम्भसहस्रवसाभिः संचिते । अनिशं च पिबामि शोणितं वर्षशतं समरो भविष्यति ॥ १ ॥ यदि च सिन्धुराजवध इव दिवसे दिवसे समरकर्मातिप्रवर्तयत्यर्जुनः ततः पर्याप्तं भृतकोष्ठागारं मम मांसशोणितैर्गृहं भविष्यति । तत्कुत्र खलु गतो मे रुधिरप्रियो भविष्यति ? । भवतु । वादयिष्ये । अरे रुधिरप्रिय रुधिरप्रिय, एहि तावत् । अत्र भारके संचिते सतीत्यन्वयः । अन्तं समाप्तिम् । कोष्ठागारं कोठाखण्डम् । **राक्षसवाक्ये** ।

---

पाठा०–१. 'शोणिदेहिं'; 'मोअणे'; 'भक्खणे'. २. 'कुंभशहश्शं वशाहिं शंचिदं'; 'इभशहश्शवशारशशंचिए'. ३. '(इति नृत्यन्ती सपरितोषम् ।)'. ४. 'दिअहे दिअहे' इति क्वचिन्नास्ति. ५. 'शमलं'. ६. 'अपज्जत्त–'; 'अजत्त–'. ७. 'कहिं णु लुहिलप्पिए हुवीअदि । ता जाव इमश्शिं शमले पिअभत्तालं लुहिलप्पिअं अण्णेशामि । (परिक्रम्य ।) होदु शद्दावइश्शं दाव । लुहिलप्पिआ लुहिलप्पिआ, इदो एहि इदो एहि'.

( ततः प्रविशति तथाविधो राक्षसः। )

**राक्षसः**—( [1]श्रमं नाटयन्। )

पच्चग्गहदाणं मंशए जइ उण्हे लुहिले अ लब्भइ।

ता एशे मह पलिश्शमे क्खणमेत्तं एव्व लहु णश्शइ ॥ २ ॥

[ प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरं च लभ्येत।

तदेष मम परिश्रमः क्षणमात्रमेव लघु नश्येत् ॥ ]

( राक्षसी पुनर्व्याहरति। )

**राक्षसः**—( [2]आकर्ण्य। ) अले [3]के मं शद्दावेदि ?। ( विलोक्य। ) [4]कहं पिआ मे वशागंधा ?। ( उपसृत्य। ) वशागंधे, कीश मं शद्दावेशि ?।

[5]लुहिलाशवपाणमत्तिए लणहिंडंतखलंतगत्तिए।

शद्दाअशि कीश मं पिए पुलिशशहश्शं हदं शुणीअदि ॥ ३ ॥

[ अरे, का मां शब्दायते ?। कथं प्रिया मे वसागन्धा ?। वसागन्धे, कस्मान्मां शब्दायसे ?।

रुधिरासवपानमत्ते रणहिण्डनस्खलद्गात्रि।

शब्दायसे कस्मान्मां प्रिये पुरुषसहस्रं हतं श्रूयते ॥ ]

**राक्षसी**—[6]अले लुहिलप्पिआ, एदं खु [7]मँए तुह कालणादो पच्चग्गहदश्श [8]कश्शवि लाएशिणो प्पहूदवशाशिणेहचिक्कणं कोण्हं [9]णवलुहिलं अग्गमंशं अ आणीदं। ता पिवाहि णं। [ अरे रुधिरप्रिय, इदं खलु मया तव कारणात्प्रत्यग्रहतस्य कस्यापि राजर्षेः

---

अरे, को मां वादयते ?। कथं प्रिया मे वसागन्धा ?। यावदेनामुपसर्पामि। वसागन्धे, किंनिमित्तं त्वं मां वादयसे ?। रुधिरासवपानमत्ते रणभ्रमणस्खलद्गात्रि। वादयसे किमिति सुन्दरि मां पुरुषशतं हतमिति श्रूयते ॥ ३ ॥ **राक्षसीवाक्ये**। अरे रुधिरप्रिय, रुधिरप्रिय, एतत्खलु मया तव कारणात्कस्यापि राजर्षेः

---

पाठा०—१. '(भ्रमणं नाटयन्।)'. २. '(श्रुत्वा।) ३. 'के एशे मं'. ४. 'अले, कहं वशागंधा'. ५. 'लुहिलाशवपाणमत्तिए—'. इति क्वचिन्न वर्तते. ६. 'अले' इति क्वचिन्नास्ति. ७. 'मए' इति क्वचिन्नास्ति. ८. 'कश्शवि लाएशिणो शलीलावअवप्पहूदं प्पहूदवशाशिणेहच्चिक्कणं'; 'कश्शवि रिउवग्गाहदश्श विलाशिणो प्पहूदवशाशिणेहमत्थिक्कच्चिक्कणं'. ९. 'लुहिलं'.

प्रभूतवसास्नेहचिक्कणं कोष्णं नवरुधिरमग्रमांसं चानीतम् । तत्पि-बैतत् । ]

राक्षसः—( सपरितोषम् । ) वशागंधे, शुट्ठु । शोहणं तुए किदं । बलिअम्हि पिवाशिए । ता उवणेहि । [ वसागन्धे, सुष्ठु । शोभनं त्वया कृतम् । बलवदस्मि पिपासितः । तदुपनय । ]

राक्षसी—अले लुहिलप्पिआ, एदिशे [3]वि णाम हदणलगअतु-लंगमशोणिअवशाशमुद्ददुश्शंचले शमले पडिब्भमंते तुमं पिवाशि-एशि त्ति अच्चलिअं अच्चलिअं ! । [ अरे रुधिरप्रिय, ईदृशेऽपि नाम हतनरगजतुरङ्गमशोणितवसासमुद्रदुःसंचरे समरे परिभ्रमंस्त्वं पिपासितोऽसीत्याश्चर्यमाश्चर्यम् ! । ]

राक्षसः—अइ शुत्थिदे, णं पुत्तशोअशंतत्तहिअअं शामिणीं हिडिंबादेवीं [6]पेक्खिदुं गदम्हि । [ अयि सुस्थिते, ननु पुत्रशोक-संतप्तहृदयां स्वामिनीं हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि । ]

---

प्रत्यग्रहतस्य प्रभूतवसाशोणितं मस्तिष्कचिक्कणमग्रमांसं चानीतम् । तत्खादय । पिब शोणितासवम् । अत्र प्रत्यग्रं नवम् । प्रभूतमुपचितम् । मस्तिष्कं गोदीति प्रसिद्धम् । अग्रं प्रथमभागमुत्तमं वा ॥ **राक्षसवाक्ये** । वसागन्धे, सुष्ठु । त्वया शोभनं कृतम् । बलितोऽस्मि पिपासितः । तदुपनय । अत्र सुष्ठु मनोहरम् । बलि-तोऽतिशयतः ॥ **राक्षसीवाक्ये** । अरे रुधिरप्रिय, ईदृशेऽपि नाम त्वं हत-नरगजतुरङ्गमवसासमुद्रदुःसंचरे समरे परिभ्रमन्पिपासितोऽसीत्याश्चर्यमाश्चर्यम् ॥ **राक्षसवाक्ये** । अयि सुस्थिते, ननु पुत्रशोकसंतप्तां स्वामिनीं हिडिम्बादेवी-मन्वेष्टुं गतोऽस्मि । हे सुस्थिते, ननु भणामि ॥ **राक्षसीवाक्ये** । अरे रुधिर-

---

1 अग्रमांसं=हृदयमित्यर्थः, तथा चामरः—'बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ।' इति ।

---

पाठा०—१. 'राक्षसः—(सपरितोषम् ।) शाहु वशागंधे, शाहु । शोहणं तुए किदं । बलिअम्हि पिवाशिए जं कोशिणं कोशिणं लुहिलं आणीदं'; 'राक्षसः—वशा-गंधे, शुट्ठु तुए किदं । राक्षसी—अले, गेण्ह एदं हत्थिकवालं । पिवाहि शोणिआशवं । राक्षसः—बलिअम्हि पिवाशिदो । ता उवणेहि'. २. 'अले' इति क्वचिन्नास्ति. ३. 'वि णाम' इति क्वचिन्नास्ति. ४. 'शमलंगणे'. ५. 'राक्षसः—(सक्रोधम् ।) अले वशागंधे, पुत्तघडुक्कअशोअशंतत्तहिअअं'; 'राक्षसः—(सक्रोधम् ।) अइ शुत्थिदे, पुत्तघडुक्कअशोअशंतत्तहिअअं'. ६. 'शमरशशइदुं'.

**राक्षसी**—लुहिलप्पिआ, अज्जवि शामिणीए हिडिंबादेवीए घडुक्कअशोए ण उपशमइ। [रुधिरप्रिय, अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नोपशाम्यति।]

**राक्षसः**—[1]वशागंधे, कुदो शे उवशमे ?। [2]केवलं अहिमण्णुशोअशमाणदुक्खाए [3]शुभद्दादेवीए जण्णशेणीए अ कधं कधं वि शमाश्शाशीअदि। [वसागन्धे, कुतोऽस्या उपशमः ?। केवलमभिमन्युशोकसमानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथं कथमपि समाश्वास्यते।]

**राक्षसी**—लुहिलप्पिआ, [4]गेण्ह एदं हत्थिशिलक्कवालशंचिअं अग्गमंशोवदंशं। पिवाहि [5]शोणिआशवं। [रुधिरप्रिय, गृहाणैतद्धस्तिशिरःकपालसंचितमग्रमांसोपदंशम्। पिब शोणितासवम्।]

**राक्षसः**—(तथा कृत्वा।) वशागंधे, अह [6]किअप्पहूदं तुए शंचिअं लुहिलं अग्गमंशं अ ?। [वसागन्धे, अथ कियत्प्रभूतं त्वया संचितं रुधिरमग्रमांसं च ?।]

**राक्षसी**—अले लुहिलप्पिआ, पूव्वशंचिअं [7]तुमं वि जाणाशि जेव्व। [8]णवशंचिअं शिणु [9]दाव। भअदत्त[10]शोणिएहिं कुंभे शिंधु-

---

प्रिय, तत्किमद्याप्यस्याः स्वामिन्या हिडिम्बादेव्याः पुत्रस्य घटोत्कचस्य शोको हृदयान्नोपशाम्यति ?॥ **राक्षसवाक्ये**। वसागन्धे, कुतोऽस्या उपशाम्यति ?। केवलमभिमन्युशोकसमानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथं कथमपि समाश्वास्यते॥ **राक्षसीवाक्ये**। तद्गृहाणैतद्धस्तिशिरःकपाटमग्रमांसं चानीतम्। तत्खादय। पिब शोणितासवम्॥ **राक्षसवाक्ये**। वसागन्धे, अथ किं प्रभूतं त्वया रुधिरं वसा मांसं च संचितम् ?। अत्र किं कियत्। प्रभूतमुपचितम्॥ **राक्षसीवाक्ये**। अरे रुधिरप्रिय, पूर्वसंचितं जानास्येव त्वम्। नवसंचितं शृणु तावत्। भगदत्तशोणितैः कुम्भः सिन्धुराजवसाभिः कुम्भमन्येषां च द्रुप-

---

पाठा०—१. 'अइ' २. 'किंतु अहिमण्णुवहशोअशमाणदुक्खाए'. ३. 'शुभद्दादेवीए शमं जण्णशेणीए कधं वि शमाश्शाशीअदि'; 'शुभद्दादेवीए जण्णशेणीए अ शमाश्शाशीअदि'. ४. 'गेण्ह तुमं एदं'. ५. 'णवशोणिआशवं'. ६. 'किअ घडप्पहूदे'. ७. 'तुमं जेव्व जाणाशि'. ८. 'पच्चग्गशंचिअं'. ९. 'दाव' इति क्वचिन्नास्ति. १०. 'शोणिअकुंभे'; 'शोणिदेहिं शदकुंभे'.

लाअवशाहिं कुंभे दुवे दुवदमच्छाहिवभूलिश्शवशोमदत्तवल्हीअप्पमुहाणं णलिंदाणं अण्णाणं वि पाकिदपुलिशाणं लुहिलमंशेहिं पुलिदाइं घडशदाइं अशंक्खाइं शंति मे गेहे । [ अरे रुधिरप्रिय, पूर्वसंचितं त्वमपि जानास्येव । नवसंचितं शृणु तावत् । भगदत्तशोणितैः कुम्भः सिन्धुराजवसाभिः कुम्भौ द्वौ द्रुपदमत्स्याधिपभूरिश्रवःसोमदत्तबाह्लीकप्रमुखाणां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणरुधिरमांसैः पूरितानि घटशतान्यसंख्यानि सन्ति मे गेहे । ]

**राक्षसः**—( सपरितोषमालिङ्ग्य । ) शाहु शुग्घलिणीए, शाहु । इमिणा दे शुग्घलिणित्तणेण अज्ज उण शामिणीए हिडिंबादेवीए शंविहाणेण प्पणट्टं मे जम्मदालिद्दं । [ साधु सुगृहिणि, साधु । अनेन ते सुगृहिणीत्वेनाद्य पुनः स्वामिन्या हिडिम्बादेव्याः [1]संविधानेन प्रनष्टं मे जन्मदारिद्र्यम् । ]

**राक्षसी**—लुहिलप्पिआ, केलिशे शामिणीए शंविहाणए किदे ?। [ रुधिरप्रिय, कीदृशं स्वामिन्या संविधानं कृतम् ? । ]

**राक्षसः**—वशागंधे, आणत्ते खु हग्गे शामिणीए हिडिंबा-

दसुतमत्स्याधिपभूरिश्रवःसोमदत्तबाह्लीकप्रमुखानां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणां रुधिरमांसैर्घटशतान्यसंख्यातानि सन्ति मे गृहे । अत्र प्राकृत इतरजनः॥ **राक्षसवाक्ये** । साधु सुगृहिणि, साधु । एतेन तव सुगृहिणीत्वेनाद्य पुनः स्वामिन्या हिडिम्बादेव्याः संविभागेन प्रणष्टं मे जन्मदारिद्र्यम् । अत्र संविभागो नियोगः । 'अज्जुणकेण' इति पाठे अद्यतनकेन । एतत्कालीनेनेत्यर्थः ॥ **राक्षसीवाक्ये** । अरे रुधिरप्रिय, कीदृशः स्वामिन्या हिडिम्बादेव्या संविभागः कृतः ? ॥ **राक्षसवाक्ये** । वसागन्धे, आज्ञप्तोऽस्मि स्वामिन्या हिडिम्बादेव्या । पुत्र

1 संविधानं=योजनेत्यर्थः, 'संविभागेन' इति टीकानुकूलः पाठः ।

पाठा०-१. 'वशाकुंभे दुवे'; 'वशाहिं कुम्भशहरशे'. २. 'दुवद' इति क्वचिन्नास्ति. ३. 'भूलिश्शवअंगाहिवशोमदत्त—'. ४. 'णलिंदाणं पाकिदपुलिशाणं अ लुहिलवशामंशश्श घडा अविणद्धमुद्दा शहश्शशंक्खा शंति मे गेहे'; 'णलिंदाणं घडशदं अण्णाणं वि पश्दपुलिशाणं वशामंशशोणिदेहिं पुलिदा घडआ अण्णाइं वहुआइं अशक्खाइं शंति मे गेहे'. ५. 'शाहु शाहु शुग्घलिणीए, शाहु शाहु'. ६. 'अज्ज उण' इति क्वचिन्नास्ति. ७. 'शंविहाणेण अ प्पणट्टं मे दालिद्दं'. ८. 'अज्ज अहं शामिणीए हिडिंबादेवीए शबहुमाणं शद्दाविअ आणत्ते । जह लुहिलप्पिआ अज्जप्पहुदि अज्जउत्तभीमशेणश्श'.

देवीए जह लुहिलप्पिआ, अज्जप्पहुदि तुए अज्जउत्तभीमशेणश्श पिट्ठदोऽणुपिट्ठं शमले आहिंडिदव्वं त्ति। ता तश्श अणुमग्गगामिणो हअमाणुशशोणिअणइदंशणप्पणट्ठबुभुक्खापिवाशश्श इह एव्व मे शग्गलोओ हुवीअदि। तुमं वि वीशद्धा भविअ लुहिलवशाहिं कुंभशहश्शं शंचेहि। [ वसागन्धे, आज्ञप्तः खल्वहं स्वामिन्या हिडिम्बादेव्या यथा रुधिरप्रिय, अद्यप्रभृति त्वया आर्यपुत्रभीमसेनस्य पृष्ठतोऽनुपृष्ठं समर आहिण्डितव्यमिति। तत्तस्यानुमार्गगामिनो हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव मे स्वर्गलोको भविष्यति। त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं संचिनु। ]

**राक्षसी**—लुहिलप्पिआ, किंणिमित्तं कुमालभीमशेणश्श पिट्ठदो आहिंडीअदि ?। [ रुधिरप्रिय, किंनिमित्तं कुमारभीमसेनस्य पृष्ठत आहिण्ड्यते ?। ]

**राक्षसः**—वशागंधे, तेण हि शामिणा विओदलेण दुश्शाशणश्श लुहिलं पादुं पडिण्णादं। तं च अम्हेहिं लक्खशेहिं अणुप्पविशिअ पादव्वं। [ वसागन्धे, तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम्। तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यम्। ]

**राक्षसी**—( सहर्षम्। ) शाहु शामिणीए, शाहु। शुशंविहाणे मे

---

रुधिरप्रिय, अद्यप्रभृति त्वया नाथभीमसेनस्य पश्चात्समर आहिण्डितव्यमिति॥ **राक्षसीवाक्ये**। अरे रुधिरप्रिय, किंनिमित्तं त्वया नाथभीमसेनस्य पश्चात् समर आहिण्डितव्यम्॥ **राक्षसवाक्ये**। वसागन्धे, तेन खलु स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम्। तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यम्। ततस्तस्य मार्गानुगामिनो हतमानुषशोणितनदीदर्शनेन प्रणष्टा मे बुभुक्षा पिपासा च। त्वमपि विश्वस्ता भूत्वा रुधिरं वसां मांसं च संचेष्यसीति इहैव सुरलोको भविष्यतीति। अत्र बुभुक्षा भोक्तुमिच्छा। विश्वस्ता विश्वासवती॥ **राक्षसीवाक्ये**। साधु स्वामिनि, साधु। सुसंविभागो मम भर्ता कृतः॥ **राक्षसी-**

---

पाठा०–१. 'अज्जउत्तश्श भीमशेणश्श'. २. 'पिट्ठदोऽणुपिट्ठं'. ३. 'विओदलेण वच्छत्थलदो दुश्शाशणश्श'. ४. 'पादव्वं त्ति'.

भंत्ता किदे । [ साधु स्वामिनि, साधु । सुसंविधानो मे भर्ता कृतः । ]

( नेपथ्ये महान्कलकलः[2] । )

**राक्षसी**—( आकर्ण्य । ससंभ्रमम्[3] । ) अले लुहिलप्पिआ, किं णु खु एशे महंते कलअले शुणीअदि ? । [ अरे रुधिरप्रिय, किं नु खल्वेष महान्कलकलः श्रूयते ? । ]

**राक्षसः**—( दृष्ट्वा । ) वशागंधे, एशे खु धिट्ठज्जुण्णेण दोणे केशेशु आकड्ढिअ अशिवत्तेण वावादीअदि । [ वसागन्धे, एष खलु धृष्टद्युम्नेन द्रोणः केशेष्वाकृष्यासिपत्रेण व्यापाद्यते । ]

**राक्षसी**—( सहर्षम् । ) लुहिलप्पिआ, एहि । गच्छिअ दोणश्श लुहिलं पिवम्ह ।[7] [ रुधिरप्रिय, एहि । गत्वा द्रोणस्य रुधिरं पिबावः । ]

**राक्षसः**—( सभयम् । ) वशागंधे, वम्हणशोणिअं खु एदं गलअं दहंते दहंते पविशदि । ता किं एदिणा ? । [ वसागन्धे, ब्राह्मणशोणितं खल्वेतद्गलं दहद्दहत्प्रविशति । तत्किमेतेन ? । ]

( नेपथ्ये पुनः कलकलः । )

**राक्षसी**—लुहिलप्पिआ, पुणोवि एशे महंते कलअले शुणीअदि । [ रुधिरप्रिय, पुनरप्येष महान्कलकलः श्रूयते । ]

---

**वाक्ये** । अरे रुधिरप्रिय रुधिरप्रिय, उत्तिष्ठोत्तिष्ठ । कुतः खल्वेष महान्कलकलः श्रूयते । **राक्षसवाक्ये** । वसागन्धे, एष खलु द्रोणो धृष्टद्युम्नेन केशेष्वाकृष्य व्यापाद्यते ॥ **राक्षसीवाक्ये** । तदेहि । द्रोणस्य रुधिरं पातुं गच्छावः ॥ **राक्षसवाक्ये** । ब्राह्मणरुधिरं खल्वेतद्गलं दहद्दहत् प्रविशति । तदलं ममैतेन ॥ **राक्षसीवाक्ये** । अरे रुधिरप्रिय रुधिरप्रिय, उत्तिष्ठोत्तिष्ठ । पुनरप्येष महान्कल-

---

पाठा०—१. 'भत्ता तुए किदे'. २. '(कलकल उभावाकर्णयतः ।)'. ३. 'सभयम्' ४. 'समुट्ठीअदि'. ५. 'हला वशागंधे'. ६. 'लुहिलप्पिआ लुहिलप्पिआ, अम्हे वि गच्छिअ दोणश्श लुहिलं पिवम्ह'. ७. '(उभौ तथा कुरुतः ।)राक्षसः—(किंचित्पीत्वा ।) वशागंधे, बम्हणशोणिअं क्खु एदं'. ८. 'दहंते पविशदि'.

**राक्षसः**—( नेपथ्याभिमुखमवलोक्य। ) वशागंधे, एशे खु अश्शत्थामे आकड्ढिदाशिवत्ते इदो एव्व आअच्छदि। कदावि दुवदशुदलोशेण अम्हेवि वावादइश्शइ। तां[1] एहि। अतिक्कमम्ह। [ वसागन्धे, एष खल्वश्वत्थामाकृष्टासिपत्र इत एवागच्छति। कदाचिद्द्रुपदसुतरोषेणावामपि व्यापादयिष्यति। तदेहि। अतिक्रमावः। ]

( इति निष्क्रान्तौ। )

प्रवेशकः।

---

( ततः प्रविशत्याकृष्टखड्गः[2] कलकलमाकर्णयन्नश्वत्थामा। )

**अश्वत्थामा[1]**—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-[2]
प्रचण्डघनगर्जितप्रतिरवानुकारी[3] मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः[4] पुरः॥ ४॥

---

कलः श्रूयते॥ **राक्षसवाक्ये**। वसागन्धे, एष खल्वश्वत्थामाकृष्टासिपत्र इतः समरभूमिमवतरति। कदाचिद्द्रुपदसुतरोषेणास्मान्राक्षसान्प्रेक्ष्य व्यापादयिष्यति। तदेहि। पलायावहे। अत्रासिपत्रः खड्गः। द्रुपदसुतो धृष्टद्युम्नः। **राक्षसीवाक्ये[3]**। एवं करवाव॥ **प्रवेशक इति**। 'हीनाभ्यामेव पात्राभ्यामङ्कादौ यत्प्रवर्तते। प्रवेशकः स विज्ञेयः शौरसेन्यादिभाषया॥' इति भरतः॥ **महाप्रलयेति**। पुष्करावर्तको मेघविशेषः। घनं निबिडम्। अनुकारी सदृशः। श्रवणभैरवः कर्णकटुः। स्थगितं पिहितम्। द्यावापृथिव्योरन्तरं रोदः, तदेव कन्दरं तस्य वा कन्दरं मध्यम्। 'रोदश्च रोदसी चैव दिवि भूमौ पृथक्पृथक्'

---

1 अश्वस्येव स्थाम=बलम् अस्येति अश्वत्थामपदस्य निरुक्तिः; तथा च महाभारते—'अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतम्। अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति॥' इति। 2 पुष्करावर्तकाः=संवर्ताग्नेः नियामकाः कल्पान्तवृष्टेश्च स्रष्टारो युगान्तेषु च वर्षमाणा महाघोरस्वना मेघाः। 3 टीकाधृतमूलपाठोऽयं कुत्रापि नोपलभ्यते।

---

पाठा०-१. 'ता एहि शामिणीए हिडिंबादेवीए आणत्तिं कलेम्ह'. २. 'उत्खातखड्गः'. ३. 'रुतानुकारी'. ४. 'अभूतपूर्वप्लवः'; 'अभूतपूर्वः प्लवः'; 'अभूतपूर्वः श्रुतः'.

( विचिन्त्य । ) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पा[1]-दतिक्रान्तमर्यादेन परिकोपित[2]स्तातः । यतः[3] समुल्लङ्घ्य शिष्यप्रिय-तामात्म[4]प्रभावसदृशमाचेष्टते । तथा हि,—

> यद्दुर्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे
> 　रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य[5] यत्सांप्रतम् ।
> लोके सर्वधनुष्मतामधिपते[6]र्यच्चानुरूपं रुषः[7]
> 　प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥ ५ ॥

( पृष्ठतो[8] विलोक्य ) तत्कोऽत्र ? । रथमुपनयतु । अथवालमिदानीं मम रथप्रतीक्षया । सशस्त्र एवास्मि[9] सजलजलधरप्रभाभासुरेण[10] सुप्रग्रह[11]-विमलकलधौतत्सरुणामुना खड्गेन । यावत्[12]समरभुवमवतरामि । ( परि-क्रम्य । वामाक्षिस्पन्दनं सूचयित्वा । ) अये[13], ममापि नामाश्वत्थाम्नः समर-महोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्यानिमित्तानि समर-गमनविघ्नमुत्पादयन्ति । भवतु । गच्छामि[14] । ( सावष्टम्भं परिक्रम्याग्रतो विलोक्य । ) कथमवधीरित[15]क्षात्रधर्माणामुज्झित[16]सत्पुरुषोचितलज्जाव-गुण्ठनानां विस्मृतस्वामिसत्कारलघुचेतसां द्विरद[17]तुरङ्गमचरणचारि-

---

इत्यमरः । अभूतपूर्वः न पूर्वं भूत इत्यर्थः । सुप्सुपेति समासः ॥ ४ ॥ आचे-ष्टते करोति । **यद्दुर्योधनेति** । यदिति सर्वत्र यच्छब्देनाग्रे वक्ष्यमाणं कर्माभि-धीयते । पक्षपातो गौरवम् । रामात् परशुरामात् । हेतिरस्त्रम् । गुरुणोऽधिकस्य । सांप्रतं युक्तम् । धनुष्मतां प्रशस्तधनुर्धराणाम् । अधिपतेस्तस्य रोषस्य यदनुरूप-मित्यन्वयः । घस्मरो भक्षकः । 'भक्षको घस्मरोऽद्मरः' इत्यमरः ॥ ५ ॥ भासु-रेण दीप्तेन । 'भञ्जभासमिदो घुरच्' ( ३।२।१६१ ) इति घुरच्प्रत्ययः । सुप्रग्रहः सुष्ठु ग्रहणं रश्मिर्वा 'हयादिरश्मौ रश्मौ च प्रग्रहः संग्रहेऽपि च' इति विश्वः । कलधौतं सुवर्णम् । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । नाम संभावनायाम् । अनिमित्तानीति कर्तृपदम् । उज्झितं त्यक्तं लज्जेवावगुण्ठनमुपरिवस्त्रं यैस्तेषाम् ।

---

पाठा०—१. 'दर्पातिक्रान्त–'. २. 'कोपितः'. ३. 'यतः' इति क्वचिन्नास्ति. ४. 'आत्मसदृशभावन्'. ५. 'धैर्यस्य'. ६. 'अभिमतम्'. ७. 'क्रुधः'. ८. '(पृष्ठतो विलोक्य ।) तदलमिदानीं मम रथप्रतीक्षयानया'. ९. 'चास्मि'; 'चाहम्'. १०. 'भास्वरेण'. ११. 'सुप्रभविमलकलधौतसंपादितत्सरुणा खड्गेन'. १२. 'तावत्'. १३. 'आः कथम्'; 'कथम्'. १४. 'अवगच्छामि'. १५. 'अवधीरितसकलक्षात्र–'. १६. 'उत्सृष्ट–'. १७. 'त्यक्तद्विरद'.

णामगणितकुलयशःसदृशपराक्रमव्रतानां रणभूमेः समन्तादपक्राम-तामयं महान्नादो बलानाम् । ( निरूप्य ) हा हा धिक्कष्टम् ! । कथमेते महारथाः कर्णादयोऽपि समरात्पराङ्मुखा भवन्ति ? । कथं नु ताता-धिष्ठितानामपि बलानामियमवस्था भवेत् ? । भवतु संस्तम्भयामि । भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः, कृतं कृतममुना समरपरित्यागसाहसेन ! ।

यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वे ॥ ६ ॥

अपि च,—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥ ७ ॥

( नेपथ्ये । )

कुतोऽद्यापि ते तातः ! ।

चारीति ताच्छीलिको णिनिः । अपक्रामतां पलायमानानाम् । 'अपक्रामोऽपयानं स्यात्' इत्यमरः । 'हा हा शोकेऽपि निन्दायाम्' इति, 'वेला तत्तीरनीरयोः' इत्यमरः । महीधरो गिरिः । कृतं निष्फलम् । 'कृतं क्लीबं तु निष्फले' इति विश्वः ॥ **यदीति** । अपास्य त्यक्त्वा । मृत्योर्मरणाद्भयमाद्वा । इतः समरात् । अन्यतोऽन्यत्र । अथ पक्षान्तरे । मुधा विफलम् ॥ ६ ॥ **अस्त्रेति** । अस्त्रमेव ज्वाला तेनावलीढ आक्रान्तः प्रतिबलजलधिस्तस्य मध्य औौर्वायमाणे वडवानल इवाचरति सति । संभ्रमेण भयेन । हार्दिक्यो योधविशेषः । शङ्कां मुञ्च ॥ ७ ॥ इह श्लोके युक्तिरलंकारः । 'अर्थावधारणं यत्तु प्रमाणाद्युक्तिरुच्यते' इति भरतः ।

पाठा०–१. 'वयः'. २. 'रणभूमेः समन्तादपक्रामतामसत्सेनाभटानामयं महा-न्निनादः'; 'रणभूमेः पराक्रामतामयं महान्नादो बलानाम्'. ३. 'पुनरवलोक्य'; 'अन्यतोऽवलोक्य'. ४. 'अहह धिक्कष्टम्'; 'हा धिक्कष्टम्'. ५. 'सङ्ग्रामात्पराङ्मु-खीभवन्ति'. ६. '(साशङ्कम् ।)'. ७. 'एवं तावत्'. ८. 'अमुना' इति क्वचिन्नास्ति. ९. 'कुरुध्वम्'; 'क्रियेत'. १०. 'रणधुराम्'.

**अश्वत्थामा**—(श्रुत्वा।) किं ब्रूथ ?–'कुतोऽद्यापि ते तातः' इति। ([1]सरोषम्।) आः क्षुद्रा [2]भीरवः, कथमेवं प्रलपतां वः सहस्रधा न [3]दीर्णमनया जिह्वया !।

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का[1]
वाता वाता दिशि दिशि न वा सप्तधा सप्त[2] भिन्नाः।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः[3]
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ८ ॥

(प्रविश्य संभ्रान्तः [4]सप्रहारः।)

**सूतः**—[5]परित्रायतां परित्रायतां कुमारः। (इति पादयोः पतति।)

**अश्वत्थामा**—(विलोक्य।) अये, [6]कथं [7]तातस्य सारथिरश्वसेनः। [8]आर्य, ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि। किं [9]मत्तः परित्राणमिच्छसि ?।

**सूतः**—([10]सकरुणम्।) [11]कुतोऽद्यापि ते तातः !।

---

अन्यदीयप्रौढ्यतिशयरूपा गर्भसंधिरियम्। यदाह—'स्वीयान्यदीयभेदेन प्रौढिवाक्यमुदाहृतिः' ॥ वो युष्माकम् ॥ **दग्धुमिति**। दहनकरैः अग्निकिरणैः। न वाता न गतिमन्तः। वाता इति। 'वा गतिगन्धनयोः' क्तः। सप्तधा सप्तप्रकारेण भिन्नाः सप्त। तथा चोनपञ्चाशत्। पापं मरणरूपम्। हे पापाः

---

1 द्वादशार्काः—'धाता मित्रोऽर्यमा रुद्रो वरुणः सूर्य एव च। भगो विवस्वान् पूषा च सविता दशमः स्मृतः ॥ एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते।' इति। 2 ऊनपञ्चाशन्मरुतस्तु वह्निपुराणे 'एकज्योतिश्च द्विज्योतिस्त्रिज्योतिर्ज्योतिरेव च।' इत्यादिना प्रोक्ताः; अन्यत्र च—'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः।' इत्यनेन च पृथङ्नामभिः प्रोक्ता लभ्यन्ते। 3 पुष्करावर्तास्तु ब्रह्माण्डपुराणे (अध्या० ५८)—'शक्रेण पक्षा यच्छिन्नाः पर्वतानां महात्मनाम्। कामगानां प्रवृत्तानां प्रजानां शिवमिच्छता ॥ पुष्करावर्तकास्तेन कारणेनेह कीर्तिताः।' इत्यादिनोपवर्णिताः। 4 अत्र त्रासेन संभ्रमाख्या गर्भसन्धिः; तल्लक्षणं दशरूपके—'शङ्कात्रासौ च संभ्रमः' इति।

---

पाठा०–१. '(सरोषम्।)' इति क्वचिन्नास्ति. २. 'समरभीरवः'. ३. 'विदीर्णम्'. ४. 'सप्रहारः' इति क्वचिन्नास्ति. ५. 'आत्मानं पातयति'. ६. 'कथं' इति क्वचिन्नास्ति. ७. 'तातसारथिः'. ८. 'आर्य आर्य, ननु, त्रैलोक्यत्राणक्षमस्य;' 'आर्य, त्रैलोक्यत्राणक्षमस्य तातस्य'. ९. 'मत्तः शिशुजनात्'. १०. '(उत्थाय। सकरुणम्।)'; '(सास्रम्)'. ११. 'कुमार, कुतोऽद्यापि'.

अश्वत्थामा—(सावेगम्।) किं तातो नामास्तमुपगतः ?।

सूतः—अथ किम् ?।

अश्वत्थामा—हा[2] तात ! (इति मोहमुपगतः।)

सूतः—कुमार, समाश्वसिहि समाश्वसिहि।

अश्वत्थामा—(लब्धसंज्ञः[3] सास्रम्।) हा तात, हा सुतवत्सल, हा लोकत्रयैकधनुर्धर, हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्, क्वासि[4] ?। प्रयच्छ मे प्रतिवचनम्।

सूतः—कुमार[5], अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव।

अश्वत्थामा—(अश्रूणि विमुच्य[6]।) आर्य, कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः।

किं शिष्याद्[7] गुरुदक्षिणां गुरुगदां[8] भीमप्रियः प्राप्तवान्

सूतः—शान्तं[9] पापम् !।

अश्वत्थामा—

अन्तेवासिदयालुरुज्झितनयेना[10]सादितो जिष्णुना।

सूतः—कथमेवं भविष्यति ?।

अश्वत्थामा—

गोविन्देन सुदर्शनस्य [11]निशितं धारापथं प्रापितः

सूतः—एतदपि नास्ति।

अश्वत्थामा—

शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥ ९ ॥

---

पापिष्ठाः ॥ ८ ॥ प्रतिग्रहो ग्रहणम् ॥ **किं शिष्यादिति**। शिष्यात् भीमात्। गुरुगदामेव गुरुदक्षिणाम्। भीमः प्रियो मित्रं यस्य स तातः। अन्तेवासी शिष्यः। तद्विषये दयालुर्दयायुक्तः। जिष्णुना अर्जुनेन। सुदर्शनं हरिचक्रम्। 'चक्रं सुदर्श-

---

पाठा०—१. 'तात एव नास्ति'. २. 'हा तात, हा तात, (इति मोहमुपगम्य पतितः।)'. ३. '(लब्धसंज्ञ उत्थाय, सास्रम्।)'. ४. 'क्वासि। प्रयच्छ मे प्रतिवचनम्' इति क्वचिन्नास्ति. ५. 'आयुष्मन्'; 'कुमार' इति क्वचिन्नास्ति. ६. 'प्रमृज्य'. ७. 'भीमाद्'. ८. 'गुरुगदात्'. ९. 'शान्तं पापं शान्तं पापम्'. १०. 'उज्झितदयेन'. ११. 'नियतं'.

**सूतः**—कुमार,—

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये ।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदास्य विहितं रिपुणातिघोरम् ॥ १० ॥

**अश्वत्थामा**—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा ? ।

**सूतः**—ननु कुमार एव कारणम् ! ।

**अश्वत्थामा**—कथमहमेव नाम ? ।

**सूतः**—श्रूयताम्,—( अश्रूणि विमुच्य । )

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥ ११ ॥

**अश्वत्थामा**—हा तात, हा सुतवत्सल, हा वृथामदर्थपरित्यक्तजीवित, हा शौर्यराशे, हा शिष्यप्रिय, हा युधिष्ठिरपक्षपातिन् ! ( इति रोदिति । )

**सूतः**—कुमार, अलमत्यन्तपरिदेवनकार्पण्येन ।

---

नम्' इत्यमरः । अन्यतोऽन्यस्मात् । खलु निश्चये ॥ ९ ॥ **एतेऽपीति** । एते भीमार्जुनकृष्णाः । संख्ये सङ्ग्रामे । धूर्जटेः हरस्य । हृदयेनेत्याचार्यविशेषणम् । अस्याचार्यस्य । अतिघोरं विनाशः ॥ १० ॥ अस्त्रं काण्डादि, शस्त्रं खड्गादि, इत्यनयोर्विशेषः । 'असु क्षेपणे' । 'शसु हिंसायाम्' । औणादिकः ष्ट्रन् प्रत्ययः । **अश्वत्थामेति** । पृथासूनुना युधिष्ठिरेण । स्वैरमल्पम् । शेषे । वचनस्येति शेषः । किल निश्चये । व्याहृतमुक्तम् । असावाचार्यः । दयितः प्रियस्तनयः पुत्रो यस्य स तथा । प्रत्ययात् प्रतीतेः । आजौ सङ्ग्रामे । शस्त्राणि ममोचापि तुल्यं धनुः समकालं नयनसलिलं च मुमोचेत्यन्वयः ॥ ११ ॥ इहाभूताहरणरूपा गर्भसंधिः ॥ यदाह—'उक्तं युक्तं तु यद्वाक्यमभूताहरणं तु तत्' इति । अश्वत्थामा गजनाम ॥

---

1 'अश्वत्थामा हतः' इत्यादिना अभूताहरणाख्यं गर्भसन्ध्यङ्गम्; तल्लक्षणं च दर्पणे—'तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्' इति ।

---

पाठा०–१. 'तदैव विहितं'. २. 'नाम' इति क्वचिन्नास्ति. ३. 'शेते'. ४. 'चेति'.

**अश्वत्थामा**—

श्रुत्वा वधं मम मृषा सुतवत्सलेन[1]
तात त्वया सह शरैरसवो विमुक्ताः।
जीवाम्यहं पुनरहो[2] भवता विनापि
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः॥ १२॥

(इति[3] मोहमुपगतः।)

**सूतः**—समाश्वसितु समाश्वसितु कुमारः।

(ततः प्रविशति कृपः[4]।)

**कृपः**—([5]सोद्वेगं निःश्वस्य।)

धिक्सानुजं कुरुपतिं धिगजातशत्रुं
धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान्।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः॥ १३॥

तत्कथं नु खलु वत्सम[6]द्य द्रक्ष्याम्यश्वत्थामानम्?। अथवा हिमवत्सारगुरुचेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के। किंतु [7]पितुः परिभवमसदृशमुपश्रुत्य न जाने किं व्यवस्यतीति। अथवा,—

[8]एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते।
केशग्रहे द्वितीये[2]ऽस्मिन्नूनं निःशेषिताः प्रजाः॥ १४॥

---

**श्रुत्वेति**। असवः प्राणाः॥ १२॥ **ततः प्रविशति कृप इति**। अत्र सूचनाव्यतिरेकेणैव प्रवेश इति प्रवेशे सूचना व्यभिचरतीत्यवधेयम्॥ **धिक्सानुजमिति**। सानुजमिति धिग्योगे द्वितीया। अजातशत्रुं युधिष्ठिरम्। खलु प्रसिद्धौ निश्चये वा। द्रौपद्याः केशग्रहस्तदाद्य द्रोणस्य च यैर्वीक्षित इत्यन्वयः॥ १३॥ हिमवत्सारं हिमालयबलम्। स्थितिः स्थैर्यम्। तस्मिन्नश्वत्थामनि। व्यवस्यति करोति। **एकस्येति**। एकस्य केशग्रहस्य। तावच्छब्द उपक्रमे। निःशे-

1 अत्र क्षिप्त्याख्यं गर्भाङ्गम्; 'रहस्यार्थस्य तूद्भेदः क्षितिः स्यात्' इति च तल्लक्षणम्। विसर्पाख्यो नाट्यालङ्कारश्चात्र; तल्लक्षणं दर्पणे—'विसर्पो यत् समारब्धं कर्मानिष्टफलप्रदम्' इति। 2 द्वितीये=द्रोणसंबन्धिनि।

---

पाठा०—१. 'सुतवल्लभेन'. २. 'पुनरयं भवता वियुक्तः'. ३. '(इति मूर्च्छति।)'; '(इति मूर्च्छितः पतति।)'. ४. 'सोद्वेगः कृपः'. ५. '(सोद्वेगं निःश्वस्य।)' इति क्वचिन्नास्ति. ६. 'अद्य' इति पुस्तकान्तरे नास्ति. ७. 'असदृशं पितुः पराभवमुपश्रुत्य'. ८. 'एकस्यैव विपाकोऽयं'.

( विलोक्य। ) तदयं वत्सस्तिष्ठति । यावदुपसर्पामि । ( उपसृत्य ससंभ्रमम्। ) वत्स, समाश्वसिहि समाश्वसिहि ।

**अश्वत्थामा**—( संज्ञां लब्ध्वा । सास्रम्। ) हा तात, हा सकलभुवनैकगुरो, ( आकाशे। ) युधिष्ठिर, युधिष्ठिर,—

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषा-
त्सर्वं तदेकपद एव कथं निरस्तम् ॥ १५ ॥

**सूतः**—कुमार, एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

**अश्वत्थामा**—( पार्श्वे विलोक्य । सबाष्पम् । ) मातुल,—

गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः ।
परीहासाश्चित्राः सततमभवन्येन भवतः
स्वसुः श्लाघ्यो भर्ता क नु खलु स ते मातुल गतः ॥ १६ ॥

**कृपः**—परिगतपरिगन्तव्य एव भवान् । तदलमत्यन्तशोकावेगेन ।

**अश्वत्थामा**—मातुल, परित्यक्तमेव मया परिदेवितम् । एषोऽहं सुतवत्सलं तातमेवानुगच्छामि ।

**कृपः**—वत्स, अनुपपन्नमीदृशं व्यवसितं भवद्विधानाम् ।

---

पिता विनष्टः ॥ १४ ॥ इहाक्षिप्तरूपा गर्भसंधिः । यदाह—'बीजस्योच्छेदनं यत्तु तदाक्षिप्तमुदीरितम्' ॥ **आजन्मन इति** । आजन्मनो जननादारभ्य । वितथमसत्यम् । किल प्रसिद्धौ । यस्त्वं जनं न द्वेक्षि द्वेषवन्तं न करोषि ॥ १५ ॥ शारद्वतः कृपः ॥ **गत इति** । कण्डूनिकषणः कण्डूनिवारणः । हे मातुल, ते स्वसुर्भगिन्या भर्ता । खलु प्रश्ने । क कुत्र ॥ १६ ॥ परिगतं ज्ञानं परिगन्तव्यं ज्ञापनीयं

---

पाठा–१. '(विभाव्य ।)'. २. 'वत्स, समाश्वसिहि'. ३. '(लब्धसंज्ञः सास्रम् ।)'. ४. 'आयुष्मन्ननु'. ५. 'येनासि'. ६. 'परिगतः परिगन्तव्यमेवात्रभवान्'. ७. 'परिदेवनम्'. ८. 'अनुपपन्नमिदं भवद्विधानाम्'; 'अनुपपन्नमीदृशं भवद्विधानाम्'; 'अनुपपन्नं भवद्विधानामिदम्'.

सूतः—[1]कुमार, अलमतिसाहसेन।

अश्वत्थामा—[2]आर्य शारद्वत,—

मद्वियोगभयात्तातः परलोकमितो गतः।
[3]करोम्यविरहं तस्य वत्सलस्य सदा पितुः॥ १७॥

कृपः—वत्स, यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वयेऽप्यनुवर्तनीया इति। पश्य,—

निवापाञ्जलिदानेन [4]केतनैः श्राद्धकर्मभिः।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा॥ १८॥

सूतः—आयुष्मन्, [5]यथैव मातुलस्ते शारद्वतः कथयति तत्तथा।

अश्वत्थामा—आर्य, सत्यमेवेदम्। किंत्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान्धारयितुम्। तद्गच्छामि तमेवोद्देशं यत्र [6]तथाविधमपि पितरं द्रक्ष्यामि। (उत्तिष्ठन् खड्गमालोक्य, विचिन्त्य।) [7]कृतमद्यापि शस्त्रग्रहणविडम्बनया।[8] भगवन् शस्त्र,—

गृहीतं येनासीः परिभवभयान्[9]नोचितमपि
प्रभावाद्यस्या[10]भून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते॥ १९॥

([11]इत्युत्सृजति।)

---

येन स तथा। परिदेवितं विलापः॥ मदिति। अविरहं समाजम् (?)॥ १७॥ लोकद्वये इहलोके परलोके च॥ निवापेति। 'पितृदानं निवापः स्यात्' इत्यमरः। निवापाञ्जलिर्जलाञ्जलिः। केतनैर्गृहैः। उताऽन्यथाऽजीवन्वा किम्?। अपि तु जीवता जलादिदानमेव क्रियत इति भावः॥ १८॥ तथाविधं मृतम्॥ गृहीतमिति। येनाचार्येण। यस्याचार्यस्य। तव विषयः कश्चिन्नाभूदेवं न खलु।

---

1 इह द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वात् निर्हेतुनामा अर्थदोष इत्याह विश्वनाथः।

---

पाठा०–१. 'वत्स'. २. 'आर्य, किमुच्यते'. ३. 'करोमि विरहं तस्य वत्सलस्य कथं पितुः'. ४. 'वितानैः'. ५. 'यदाह शारद्वतः।'; 'यथाह शारद्वतः।'; 'यथा ते मातुलः। कथयति तथैवैतत्।'. ६. 'तादृशमपि'. ७. 'अलमद्यापि शस्त्रग्रहणविचया'. ८. '(सास्रमञ्जलिं बध्वा)'. ९. 'नोच्चितमिति'. १०. 'आसीत्'. ११. '(इति परित्यक्तुमिच्छति।)'.

( नेपथ्ये । )

भो भो राजानः, कथमिह [1]भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते ? ।

अश्वत्थामा—( [2]आकर्ण्य । शनैःशनैः शस्त्रं स्पृशन् । ) [3]किं गुरोर्भारद्वाजस्य परिभवः ? ।

( पुनर्नेपथ्ये । )

आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोका-
द्द्रोणस्याजौ नयनसलिल[4]क्षालितार्द्राननस्य ।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥ २० ॥

( सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा । ) किं नामेदम् ? ।

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं [5]व्रतमास्थितस्य ।
तातस्य मे पलितमौलिनिरस्त[6]काशे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ २१ ॥

कृपः—वत्स, एवं किल जनः कथयति ।

अश्वत्थामा—किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः ? ।

---

सर्व एव विषयोऽभूदित्यर्थः । विमोक्ष्ये त्यक्ष्यामि । अतो भवते स्वस्त्यस्तु । स्वस्तियोगे 'नमःस्वस्ति—' ( २।३।१६ ) इत्यादिना चतुर्थी ॥ १९ ॥ उत्सृजति त्यजति । भारद्वाजस्य द्रोणस्य । नृशंसेन पापवता । 'नृशंसो घातुकः क्रूरः पापः' इत्यमरः ॥ **आचार्यस्येति** । न्यस्तं त्यक्तम् । 'पलितं जरसा शौक्ल्यम्' इत्यमरः । नृशंसं विनाशम् । 'विनाशेऽपि नृशंसः स्यात्' इति हारावली ॥ २० ॥ **प्रत्यक्षमिति** । आत्तं गृहीतम् । नृपाणां प्रत्यक्षं समक्षम् । प्रायोपवेश उपवासार्थमुपवेशनम् । तत्सदृशं च यथा स्यादेवम् । तत्रापि निष्क्रियेणोपविश्यते । इहापि तथेति भावः । पलितो जराशुक्लो यो मौलिर्धम्मिल्लस्तेन निरस्तो जितः काशः काशकुसुमं येन तत्र । 'मौलिः किरीटे धम्मिल्ले' इति विश्वः ॥ २१ ॥

---

पाठा०—१. 'भवन्तः सर्वे गुरोः परिभवममुना नृशंसेन प्रयुक्तमत्रभवतो भारद्वाजस्योपेक्षन्ते'; 'भवन्तस्तत्रभवतः क्षत्रियगुरोर्भारद्वाजस्यासदृशं परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते'. २. '(आकर्ण्य । सक्रोधं शनैः खड्गं स्पृशन् ।)'. ३. 'किं किं'; 'किं नु'. ४. 'क्षालितार्धाननस्य'. ५. 'शममास्थितस्य'. ६. 'निमीलिताक्ष'.

सूतः—( सभयम । ) कुमार, आसीदयं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः ।

अश्वत्थामा—हा तात, हा पुत्रप्रिय, मम [1]मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः । [2]अथवा,—

परित्यक्ते देहे रणशिरसि [3]शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
[4]असंख्यातास्त्रौघद्रविणमदमत्तस्य च रिपो-
[5]र्ममैवायं पादः शिरसि निहितस्[6]तस्य न करः ॥ २२ ॥

आः दुरात्मन्पाञ्चालापसद, —

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां [7]खलु विदधतः पाणिमस्योत्तमाङ्गे ।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥ २३ ॥

युधिष्ठिर, युधिष्ठिर, अजातशत्रो, अमिथ्यावादिन्, धर्मपुत्र, सानुजस्य ते किमनेनापकृतम् ? । अथवा किमनेनालीकप्रकृतिजिह्मचेतसा ? । [8]अर्जुन, सात्यके, बाहुशालिन्वृकोदर, माधव, युक्तं नाम [9]भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम् । अथ वा सर्व एवैते पातकिनः । किमेतैः ?—

---

**परित्यक्त इति** । मनसा त्वयेति शेषः । श्वा कुक्कुरः । अस्त्रौघ एव द्रविणं धनं तेन मदो गर्वस्तदेव मद्यं वा तस्य । पितुः शिरसि करो न निहितः, किंतु ममैव शिरसि पादो निहित इत्यन्वयः ॥ २२ ॥ **तातमिति** । उपलभ्य ज्ञात्वा । शङ्कां शत्रुकृतमारणादिशङ्काम् । खलु प्रसिद्धौ । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । अश्वत्थामा तव स्मृतिं किं न यातः ॥ २३ ॥ अजातशत्रुणा किम् ? । अपि

---

पाठा०—१. 'मन्दभाग्यस्य'. २. '(विचिन्त्य ।) अथ वा'. ३. 'शोकान्धमनसः'; 'शोकार्तमनसा'. ४. 'स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपोः'; 'असंख्यातास्त्रौघद्रविणमदलेशस्य रिपुणा'. ५. 'मयैव'. ६. 'तस्य सहसा'. ७. 'जड, विदधतः'. ८. 'अर्जुन, अर्जुन, सात्यके, सात्यके,'. ९. 'भवतां सुरासुरमनुजगुरोर्लोकत्रयैकधनुर्धरस्य'.

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

कृपः—वत्स, किं[2] न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ! ।

अश्वत्थामा—भो भोः पाण्डवमत्स्यसोमकमागधेयाः[3] क्षत्रियापसदाः,—

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे ॥ २५ ॥

सूत[4], गच्छ त्वं सर्वोपकरणैः साङ्ग्रामिकैः सर्वायुधैरुपेतं महाहव[5]लक्षणं नामास्मत्स्यन्दनमुपनय[6] ।

सूतः—यदाज्ञापयति[7] कुमारः । (इति निष्क्रान्तः ।)

कृपः—वत्स, अवश्यप्रतिकर्तव्येऽस्मिन्दारुणे निकाराग्नौ[8] सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम् ? । किंतु[9],—

अश्वत्थामा—किमतः परम् ? ।

---

तु न किमपि । कीदृशेन । अलीकेन असत्येन । इतरजनवत्कुटिलं चेतो यस्य तेन ॥ **कृतमिति** । नरकरिपुः कृष्णः । असृग्रक्तम् । मेदो मज्जा । बलिमुपहारम् । 'बलिः पूजोपहारयोः' इति शाश्वतः ॥ २४ ॥ ग्रामः संघः । कोविदः पण्डितः ॥ **पितुरिति** । पितुर्मूर्ध्नि द्रुपदेन स्पृष्टे सति यद्रामेण परशुरामेण कृतं क्षत्रियजनघातादिकं तद्भवतां किं श्रुतिपथं न गतम् ? । अश्वत्थामा किमद्यापि तत्कर्म विधातुं न प्रभवति ? । अपि तु प्रभवत्येव । विघसो भोजनविशेषः । 'अमृतं विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः ॥ २५ ॥ निकारस्य परिभवस्य । 'निकारः स्यात्परिभवः'

---

1 अत्र रौद्रो रसः, स च 'रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः । आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्' इत्यादिना दर्पणे प्रोक्तः । 2 इह अनुनयाभिधं नाट्यलक्षणम्; यथोक्तं—'वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम्' इति ।

---

पाठा०—१. 'पतिभिः'. २. 'न किंचिन्न संभाव्यते'. ३. 'मागधाद्याः क्षत्रियाः'. ४. '(सूतमुद्दिश्य ।) सूत'. ५. 'आहितलक्षणं'. ६. 'उपाहर'. ७. 'यथाज्ञापयति'. ८. 'परिभवाग्नौ'. ९. 'किंतु' इति कचिन्नास्ति.

कृपः—सैनापत्येऽभिषिच्य[1] भवन्तमिच्छामि समरभुवमवतारयितुम् ।

अश्वत्थामा—मातुल, परतन्त्रमिदमकिंचित्करं च ।

कृपः—वत्स, न खलु परतन्त्रं नाकिंचित्करं च । पश्य,—

भवेदभीष्ममद्रोणं[2] धार्तराष्ट्रबलं कथम् ।
यदि तत्तुल्यकक्षोऽत्र[3] भवान्धुरि न युज्यते ॥ २६ ॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं किं पुनर्यौधिष्ठिरं[4]बलम् ? । तदेवं[5] मन्ये परिकल्पिताभिषेकोपकरणः कौरवराजो न चिरात्त्वामेवाभ्यपेक्षमाणस्तिष्ठतीति[6] ।

अश्वत्थामा—यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकारजलावगाहनाय । तदहं गत्वा तातवधविषण्णमानसं[7] कुरुपतिं सैनापत्यस्वयंग्रहणप्रणयसमाश्वासनया मन्दसंतापं करोमि ।

कृपः—वत्स, एवमिदम् । अतस्तमेवोद्देशं गच्छावः ।

( इति परिक्रामतः । )

( ततः[8] प्रविशतः कर्णदुर्योधनौ । )

दुर्योधनः—अङ्गराज,—

तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ २७ ॥

---

इति विश्वः । सेनापतेर्भावः सैनापत्यम् ॥ भवेदिति । धृतराष्ट्रबलं कथं भवेत् ? किं भवेदित्यर्थः । अत्र धुरि धुरायाम् ॥ २६ ॥ परिकरः पुरस्कारः । उद्देशं प्रदेशम् ॥ तेजस्वीति । तेजस्वी पुरुषः पारं बाहुभ्यां व्रजतीत्यन्वयः । प्लवः कोलः ।

---

पाठा०-१. 'अभिषिक्तमत्रभवन्तं'; 'अभिषिक्तं भवन्तं'. २. 'भवेदभीष्मद्रोणं हि धृतराष्ट्रबलं'. ३. 'तत्तुल्यकर्मात्र भवान्धुर्यो न युज्यते'; 'त्वत्तुल्यकक्षोत्रभवान्धुर्यो नियुज्यते'. ४. 'युधिष्ठिरबलम्'. ५. 'अहं च मन्ये'; 'एवं च मन्ये'. ६. 'अभ्युदीक्षमाणः', 'प्रतीक्षमाणः'; 'कौरवनाथो भवन्तमुदीक्षते'. ७. 'तातवधविपन्नमनसं'. ८. '(ततः प्रविशति राजा कर्णश्च ।)'.

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति । यतः शोकान्धमनसा[१] तेन विमुच्य क्षत्रधर्मकार्कश्यं[२] द्विजातिधर्मसुलभो दैन्यपरिग्रहः कृतः[३] ।

**कर्णः**—राजन्[४], न खल्विदमेवम् ।

**दुर्योधनः**—कथं तर्हि[५] ? ।

**कर्णः**—एवं किलास्याभिप्रायो[६] यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति । तस्याभावाद्वृद्धस्य[७] मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति[८] तथा कृतवान् ।

**दुर्योधनः**—( सशिरःकम्पम् । ) एवमिदम् ।

**कर्णः**–एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षयमपेक्षमाणेन[९] तेन प्रधानपुरुषवध[१०] उपेक्षा कृता ।

**दुर्योधनः**—उपपन्नमिदम्[११] ।

**कर्णः**—अन्यच्च राजन्, द्रुपदेनाप्यस्य[१२] बाल्यात्प्रभृत्यभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः ।

**दुर्योधनः**—साधु अङ्गराज, साधु[१३] । निपुणमभिहितम् ।

**कर्णः**—न चायं ममैकस्याभिप्रायः । अन्येऽभियुक्ता[१४] अपि[१५] नैवेदमन्यथा मन्यन्ते ।

**दुर्योधनः**—एवमेतत् । कः संदेहः ?

दत्त्वाभयं[1] सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ २८ ॥

---

'उडुपं तु प्लवः कोलः' इत्यमरः । संख्ये सङ्ग्रामे ॥ २७ ॥ सूक्तं शोभनमुक्तम् । अभियुक्तैर्नीतिज्ञैः ॥ **न खल्विति** । इदमेवमेतन्न वाच्यमित्यर्थः । किल प्रसिद्धौ । तथा शस्त्रत्यागम् ॥ बाल्यात्प्रभृति शैशवादारभ्य ॥ **दत्त्वेति** । सोऽतिरथो

---

1 इह अर्थापत्त्याख्यं नाट्यलक्षणम्; 'अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते' इति तल्लक्षणम् ।

---

पाठा०–१. 'शोकान्धचेतसा'. २. 'क्षात्रधर्मकार्कश्यं'. ३. 'द्विजातिसुलभो मार्दवपरिग्रहः'. ४. 'राजन्कौरवेश्वर'. ५. 'किं तत्'. ६. 'एवं किल द्रोणस्याभिप्राय आसीत्'; 'एवं किल तस्याभिप्राय आसीत्'; 'एवं किल तस्य मनसि'; 'एवं किल तस्यासीच्चेतः'. ७. 'तस्य च वधात्'. ८. 'शस्त्रधारणम्'. ९. 'क्षयमुपेक्षमाणेन'. १० 'प्रधाननृपवधे'. ११. 'उपपन्नमेतत्'. १२. 'द्रुपदेन चास्य'. १३. 'साधु' इति क्वचिन्नास्ति. १४. 'अन्येऽप्यत्र योद्धारो नैतदन्यथा मन्यन्ते'. १५. 'अपि' इति क्वचिन्नास्ति.

**कृपः**—( विलोक्य । ) वत्स, एष दुर्योधनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति । तदुपसर्पावः ।

( तथा कृत्वा । )

**उभौ**—[2]विजयतां कौरवेश्वरः[1] ।

**दुर्योधनः**—( दृष्ट्वा ) अये, कथं कृपोऽश्वत्थामा च ? ( आसनादवतीर्य कृपं प्रति ) गुरो, अभिवादये । ( [3]अश्वत्थामानमुद्दिश्य । ) आचार्यपुत्र,—

> एह्यस्मदर्थहततात परिष्वजस्व
> 
> [4]क्लान्तैरिमैर्मम निरन्तरमङ्गमङ्गैः ।
> 
> स्पर्श[5]स्तवैष भुजयोः सदृशः पितुस्ते
> 
> [6]शोकेऽपि नो विक्रतिमेति तनूरुहेषु ॥ २९ ॥

( आलिङ्ग्य पार्श्वे उपवेशयति । )

( अश्वत्थामा बाष्पमुत्सृजति । )

**कर्णः**—[7]द्रौणायने, अ[8]लमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

**दुर्योधनः**—आचार्यपुत्र, को विशेष आवयोरस्मिन्[9]व्यसनमहार्णवे ? । पश्य,—

> तातस्तव प्रणयवान्[10]स पितुः सखा मे
> 
> शस्त्रे यथा तव गुरुः स तथा ममापि ।
> 
> किं तस्य देहनिधने कथयामि दुःखं
> 
> जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ३० ॥

---

महारथो द्रोणोऽभयं दत्त्वा कथमन्यथार्जुनेन वध्यमानं जयद्रथमुपेक्षेत । चेदेवं नेत्यन्वयः ॥ २८ ॥ सूतपुत्रेण सारथिसुतेन कर्णेन । 'सूतः क्षत्ता च सारथिः' इत्यमरः । 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । विजयतामित्यत्र 'विपराभ्यां जेः' इति तङ् ॥ **एहीति** । एह्यागच्छ । तनूरुहेषु लोमसु ॥ २९ ॥ **तात इति** । स तव तातो मे पितुः सखा मित्रमित्यन्वयः । तत्त्वमेव जानीहीत्यन्वयः । शुचा

---

पाठा०–१. 'कौरवराजः'. २. 'विजयतां विजयतां राजन्'. ३. '(अश्वत्थामानं प्रति ।)'. ४. 'क्लान्तैः शुचा'; 'क्लान्तैरिदं'; 'कान्तैरिदं'. ५. 'तथैव'; 'तवैव'. ६. 'शोकेऽपि यो महति निर्वृतिमादधाति'. ७. 'द्रोणपुत्र, अलमत्यन्तावेगेनात्मानं शोकसागरे प्रक्षेप्तुम्'. ८. 'अत्यर्थम्' इति क्वचिन्नास्ति. ९. 'व्यसनार्णवे'. १०. 'स यथा तथा मे'.

**कृपः**—वत्स, यथाह कुरुपतिस्तथैवैतत् ।

**[1]अश्वत्थामा**—राजन्, एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्तुम् । किंतु,—

मयि जीवति [2]यत्तातः [3]केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः [4]पुत्रिणः स्पृहाम् ॥ ३१ ॥

**कर्णः**—द्रौणायने, किम[5]त्र क्रियते [6]यदा तेनैव [7]सर्वपरिभवपरित्राणहेतुना शस्त्रमुत्सृजता [8]तादृशीमवस्थामात्मा नीतः ।

**अश्वत्थामा**—अङ्गराज, किमाह भवान्किम[9]त्र क्रियत इति ? । श्रूयतां [10]यत्क्रियते,—

यो यः शस्त्रं बिभर्ति स्वभुजगुरु[11]मदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च [12]प्रतीपः
क्रोधान्धस्तस्य तस्य [13]स्वयमपि जगतामन्तकस्यान्तकोऽहम् ३२

अपि च, भो जामदग्न्यशिष्य कर्ण,—

देशः सोऽयमरातिशो[14]णितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षात्रादेव तथाविधः परिभवस्तातस्य केश[15]ग्रहः ।

---

शोकेन ॥ ३० ॥ **मयीति** । 'पुत्रेभ्यः' इत्यत्र 'स्पृहेरीप्सितः' ( १।४।३६ ) इति चतुर्थी ॥ ३१ ॥ **यो य इति** । पाण्डवीनां [2]पाण्डवसंबन्धिनीनाम् । चमूनां सेनानाम् । अधिकवयास्तरुणो वृद्धश्च । तत्कर्मसाक्षी तातवधसाक्षाद्द्रष्टा । 'साक्षाद्द्रष्टरि संज्ञायाम्' ( ५।२।९१ ) इति साक्षीति सिध्यति । प्रतीपो विपरीत-

---

1 कथा चेयं महाभारते ( आदि० अध्या० २ )—'त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः । असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः । स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः । समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् ॥' इत्यादिना प्रोक्ता । 2 अत्र 'पाण्डवीयानाम्' इत्युचितम् ।

---

पाठा०—१. 'कर्ण.—किमत्र विचारण । अश्वत्थामा—राजन्येवंवादिनि युक्तमेव शोकसागरमुल्लङ्घयितुम्'. २. 'मत्तातः'. ३. 'केशग्रहणमाप्तवान्'. ४. 'अपुत्रिणः'. ५. 'अत्र' इति क्वचिन्नास्ति. ६. 'यदनेन'. ७. 'सर्वपरिभवत्राणहेतुना'. ८. 'एतादृशीम्'; 'ईदृशीम्'. ९. 'अत्र' इति क्वचिन्नास्ति. १०. 'यत्क्रियते तत्'. ११. 'मदात्'; 'बलः'. १२. 'प्रतीपम्'. १३. 'स्वयमिह'. १४. 'शोणितभरैः'. १५. 'केशग्रहात्'.

तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे[2]
यद्रामेण कृतं तदेव कुरुते [3]द्रोणात्मजः क्रोधनः ॥३३॥

**दुर्योधनः**—आचार्यपुत्र, तस्य [4]तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम् ! ।

**कृपः**—राजन्, सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभरः । तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः । किं पुन[5]र्यौधिष्ठिरबलम् ? । अतोऽभिषिच्यतां सैनापत्ये ।

**दुर्योधनः**—सुष्ठु युज्यमानमभिहितं युष्माभिः, किंतु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य ।[6]

**कृपः**—राजन्, असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम् । [7]अस्यापि तदेवारिकुलमनुशासनीयम् । अतः किमस्य पीडा न भविष्यति ? ।

**अश्वत्थामा**—[8]राजन्, किमद्यापि युक्तायुक्तविचारणया ?

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।

---

कारी । तस्य जगतामन्तकस्य विनाशकस्य । अन्तको यमो विनाशको वा ॥ ३२ ॥ जामदग्न्यः परशुरामः । **देश इति** । शोणितं रक्तम् । क्षात्रात्क्षत्रियकृतात् परिभवः । तत्रैव जात इति शेषः । आहिता उपस्थिता ये शत्रवस्तेषां घस्मराणि भक्षकाणि । अत एव गुरूणि । भास्वन्ति दीप्यमानानि । रामेण परशुरामेण कृतं क्षत्रियनाशनम् ॥ ३३ ॥ सुमहानतिशयितः । वोढुं धर्तुम् ॥ अयमर्थोऽभिषेकरूपः ॥ **प्रयत्नेत्यादि** । हे राजन्, त्वं तावन्निशां व्याप्य शेषे स्वपिहि । कीदृशः सन् । स्तुतिभिर्मागधादिकृतस्तवैरद्य प्रयत्नेन परिबोधितः प्रबोधितः । तथा च त्वं स्तवादिनापि परिहृतभगिनीपतिशोकः समस्तां निशां व्याप्य शयनं

---

पाठा०—१. 'हेतिघस्मर—' २. 'नो'. ३. 'द्रौणायनिः'. ४. 'तथाविधपरिभवस्यानन्यपुरुषसाधारणस्य ते वीरभावस्य च किमस्त्यसदृशम्'. ५. 'युधिष्ठिरबलम्'. ६. ( इत्यङ्गुलीयकं ददाति । ) कर्णः—(सहर्षम् । ) महान्परः प्रसादः । कृपः—असदृशपरिभवसागरे मज्जन्तमेनमङ्गराजस्यापि नोपेक्षितुं युक्तम् । अश्वत्थामा—( साटोपम् । ) राजन्, राजन्, युक्तायुक्तविचारणया किमद्यापि ।'. ७. 'अस्यापि च'; 'अस्यापि' इत्यारभ्य 'भविष्यति' इत्यन्तं क्वचिन्नास्ति. ८. 'राजन्, कौरवेश्वर'.

इयं परिसमाप्यते रणकथाद्य [1]दोःशालिना-

[2]मपैतु [3]नृपकाननातिगुरुरद्य भारो भुवः ॥ ३४ ॥

[4]कर्णः—( विहस्य । ) वक्तुं सुकरमिदं दुष्करमध्यवसितुम् । बहवः कौरवबलेऽस्य कर्मणः शक्ताः ।

अश्वत्थामा—[5]अङ्गराज, एवमिदम् । बहवः कौरवबलेऽत्र शक्ताः, किंतु दुःखोपहतः शोकावेगवशाद्ब्रवीमि न पुनर्वीरजनाधिक्षेपेण ।

कर्णः—[6]मूढ, दुःखितस्याश्रुपातः कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितं नैवंविधाः प्रलापाः ।

अश्वत्थामा—( [7]सक्रोधम् । ) अरे रे [8]राधागर्भभारभूत, सूतापसद, [9]ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण ? । पश्य,—

---

विधेहीति भावः । शेषे इति 'शीङ् स्वप्ने' लटि मध्यमपुरुषैकवचने साधु । 'निशाम' इत्यत्र 'कालाध्वनोरत्यन्तसंयोगे' ( २।३।५ ) इति द्वितीया । अद्य पुनर्भुवनमेतादृशमस्तु । कीदृशम् । केशवशून्यं पाण्डवशून्यं सोमवंशशून्यं च । दोःशालिनां बाहुबलशालिनां वीराणामपि रणकथा युद्धवार्ताद्य मया परिसमाप्यते । अद्य भुवो भारोऽपैतु दूरं यातु । कीदृशः । नृपा एव काननानि वनानि तैरतिगुरुः । उपचित इत्यर्थः । 'दोषा भुजा भुजः' इत्यमरः (?) ॥ ३४ ॥ 'ननु हे

---

पाठा०—१. 'दोःशालिना'. २. 'व्यपैतु'; 'अपैति'. ३. 'रिपुकाननातिगुरुः'. ४. 'कर्णः—द्रोणात्मज, वक्तुं सुकरमिदमध्यवसितुं दुष्करम्'; 'कर्णः—वक्तुं सुकरमिदमध्यवसितुं दुष्करम्'; 'कर्णः—( विहस्य । ) द्रोणात्मज, वक्तुमिदं सुकरं दुष्करमध्यवसितुम्'. ५. 'अङ्गराज, एवं बहवः शक्ताः । किंतु दुःखोपहतः शोकावेगवशात्'; 'अङ्गराज, दुःखोपहतः शोकावेगवशात्'; 'अङ्गराज, एवम् । बहवः कौरवबलेऽत्र शक्ताः । किंतु दुःखोपहतशोकावेगवशात्'. ६. 'द्रौणायने'. ७. '( सरोषम् । )'. ८. 'राधायाः सुत'. ९. 'किमेवमाक्षिपसि । कर्णः—सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् । दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ अश्वत्थामा—किमाह भवान् । ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः'.

निर्वीर्यं[1] गुरुशापभाषितवशात्किं मे तवेवायुधं
संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ।
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं[1] प्रतिकरोम्यस्रेण नास्त्रेण यत्[2] ॥ ३५ ॥

**कर्णः**—( सक्रोधम् । ) अरे रे वाचाट, वृथाशस्त्रग्रहणदुर्विदग्ध, बटो,—

निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम् ।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना ॥ ३६ ॥

अपि च,—

सूतो वा सूतपुत्रो वा यो[3] वा को[3] वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ ३७ ॥

---

स्पर्धायामवरे पदम्' इति भरतः । **निर्वीर्यं गुर्विति** । गुरुशापेति परशुरामदत्तशापात् । कर्णः किल बालकः स्वीयक्षत्रियजातिं संगोप्यास्त्रविद्याशिक्षार्थं परशुरामस्थानं गतः । तेनास्त्रविद्या तस्मै दत्ता । ततः कर्णोऽयं क्षत्रिय इति तेन ज्ञातम् । अथ तवास्त्रविद्या वीर्यवती न भवतु मम छलनादिति परशुरामस्तं शशाप–इति पुराणम् । तवेव यथा तवेत्यर्थः । स्तुतिश्च वंशकीर्तनं च । यद्वा । स्तुतिरूपं यद्वंशकीर्तनम् । प्रतिकरोमि प्रतीकारविषयं करोमि । अस्रेण नेत्रजलेन ॥ ३५ ॥ **निर्वीर्य वेति** । उत्सृष्टं त्यक्तम् ॥ ३६ ॥ **सूत इति** । सूतः सारथिः । स्यो वेति । त्यच्छब्दस्य प्रयोगः । स छान्दसोऽपि क्वचिद्भाषायां

---

1 इह गर्हणाभिधं नाट्याङ्गम्; तल्लक्षणं तु साहित्यदर्पणे—'दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत्' इति । 2 परशुरामदत्तशापकथा तु महाभारते ( कर्ण० अध्या० ४२ )—'अवसं ब्राह्मणच्छद्मनाहं रामे पुरा दिव्यमस्त्रं चिकीर्षुः । तत्रापि मे देवराजेन विघ्नो हितार्थिना फाल्गुनस्यैव शल्य ॥ कृतो विभेदेन ममोरुमेत्य प्रविश्य कीटस्य तनुं विरूपाम् । ममोरुमेत्य प्रविभेद कीटः सुप्ते गुरौ तत्र शिरो निधाय । गुरोर्भयाच्चापि न चेलिवानहं ततो विबुद्धो ददृशे स विप्रः ॥ स धैर्ययुक्तं प्रसमीक्ष्य मां वै न त्वं विप्रः कोऽसि सत्यं वदेति ।······स मां निशम्याथ महातपस्वी संशप्तवान् रोषपरीतचेताः ॥ सूतोपधावाप्तमिदं तवास्त्रं न कर्मकाले प्रतिभास्यति त्वाम् । अन्यत्र तस्मात्तव मृत्युकालादब्राह्मणे ब्रह्म नहि ध्रुवं स्यात् ॥' इति । 3 'स्यो वा' इति मूलानुकूलः पाठोऽत्र ।

---

पाठा०–१. 'कृताप्रियः'. २. 'किम्'. ३. 'यो वा सो वा'; 'यो वा स्यो वा'.

**अश्वत्थामा**—( सक्रोधम् । ) अरे रे रथकारकुलकलङ्क, अरे राधागर्भभारभूत, आयुधानभिज्ञ, तातमप्यधिक्षिपसि ? अथवा,—

स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ [1]प्रतिदिनमियं वेत्ति वसुधा ।
परित्यक्तं शस्त्रं कथमिति स [2]सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क नु तदा ॥ ३८ ॥

**कर्णः**—( विहस्य । ) एवं भीरुरहम् । [3]त्वं पुनर्विक्रमैकरसं स्वपितरमनुस्मृत्य न जाने किं करिष्यसीति । महान्मे संशयो जातः । अपि च रे मूढ,—

यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान् ।
यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥ ३९ ॥

**अश्वत्थामा**—( सक्रोधं सकम्पं च । ) दुरात्मन्, राजवल्लभ, प्रगल्भ, सूतापसद, असंबद्धप्रलापिन्,—

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।

---

प्रयुज्यते । 'सो वा' इत्यपि पाठः ॥ ३७ ॥ **सभीरुरिति** । प्रथितं ख्यातम् ॥ आजौ युद्धे । प्रतिदिनं तेन यत्कृतं तद्वसुधा वेत्तीत्यन्वयः । यत्तेनास्त्रं कथमपि शोकविकलेन परित्यक्तं तत्र स युधिष्ठिरः साक्षी ॥ ३८ ॥ **यदीति** । अशस्त्रपाणयः त्यक्तास्त्राः । उदायुधानुद्यतास्त्रान् । किं न निवारयन्ति ? किंतु निवारयन्त्येव । अनेन द्रोणेन । दलने खण्डने । उदासितमुदासीनीभूतम् । **स्त्रियेवेति** । यथा स्त्रियोदास्यते इत्यर्थः । 'चक्रं सैन्यरथाङ्गयोः' इति विश्वः ॥ ३९ ॥ **कथमपीति** । तव शिरस्येष वामश्चरणो वामपादो मया न्यस्यते इत्यन्वयः । आध्मा-

---

पाठा०—१. 'प्रतिदिशम्'. २. 'सत्यव्रतधनः'. ३. 'त्वं पुनर्विक्रमैकरसः । तव पितरमनुस्मृत्य महान्मे संशयो जातः ।'; 'पुनर्विक्रमैकरसं तव पितरमनुस्मृत्य महान्मे संशयो जातः ।'; 'त्वं पुनस्त्वं विक्रमैकधनं स्वपितरमनुस्मृत्य न जाने किं करिष्यसि । महान्संशयो मे जातः ।'.

तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण [1]एष न्यस्यते वारयैनम् ॥ ४० ॥

( [2]इति तथा कर्तुमुत्तिष्ठति । )

**कृपदुर्योधनौ**—[3]वत्स, मर्षय मर्षय । ( इति निवारयतः । )

( अश्वत्थामा चरणप्रहारं नाटयति । )

**कर्णः**—( सक्रोधमुत्थाय, खड्गमाकृष्य । ) अरे दुरात्मन्, ब्रह्मबन्धो, [4]आत्मश्लाघ,—

जात्या [5]काममवध्योऽसि चरणं [6]त्विदमु[7]द्धृतम् ।
अनेन लूनं खड्गेन [8]पतितं [9]द्रक्ष्यसि क्षितौ ॥ ४१ ॥

[10]**अश्वत्थामा**—अरे मूढ, जात्या [11]काममवध्योऽहम् । इयं सा जातिः परित्यक्ता । ( इति यज्ञोपवीतं छिनत्ति । पुनश्च सक्रोधम् । )

[12]अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते [13]मया ।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥ ४२ ॥

( उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ । कृपदुर्योधनौ नि[14]वारयतः । )

**दुर्योधनः**—[15]आचार्यपुत्र, शस्त्रग्रहणेनालम् ।

---

यमानस्याध्मातस्य ॥ ४० ॥ वाचाल बहुभाषक । ब्रह्मबन्धो अग्राह्यनामन् । 'ब्रह्मबन्धुरधिक्षेपेऽनिर्देश्येऽपि निगद्यते' इत्यमरः । **जात्येति** । चरणं लूनं सत् क्षितौ पतितं द्रक्ष्यसीत्यन्वयः । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः ॥ ४१ ॥ **अद्येति** । त्यक्त्वाऽस्त्रमिति शेषः । मिथ्याप्रतिज्ञो मया तव वधात्तेन च तदकरणा-

---

पाठा०—१. 'एव'; 'एवम्'. २. '( इत्युत्तिष्ठति । )'. ३. 'गुरुपुत्र'. ४. 'आत्मश्लाघिन्'. ५. 'तावत्' ६. 'इमम्'. ७. 'उद्यतम्'; 'उद्धतम्'. ८. 'पातितं'. ९. 'वेत्स्यसि'. १०. 'अश्वत्थामा—अरे मूढ, किं नाम जात्या काममवध्योऽहम् । इयं सा जातिस्त्यक्ता । ( इत्युपवीतं छिनत्ति । )'; 'अश्वत्थामा—अरे रे, किं जात्या तावदवध्योऽहं यत एवं ब्रवीषि । गृहाण शस्त्रम् । इयं सा जातिः परित्यक्ता । ( इति यज्ञोपवीतं भूमौ निक्षिपति । ) गृहाणास्त्रं व्रज त्यक्त्वा मौलौ वा धारयाञ्जलिम् । अद्य मिथ्याप्रतिज्ञोऽसौ गाण्डीवी क्रियते मया ॥ कर्णः—गृहाणास्त्रम् । ( इत्यन्योन्यव्यसनं कुरुतः । ) राजा—अङ्गराज, अङ्गराज, अलमाचार्यपुत्रेण सह शस्त्रग्रहणेन । गुरुपुत्र, अलमङ्गराजेन सह शस्त्रग्रहणेन । ( कृपोऽपि वारयति । ) अश्वत्थामा—मातुल, किं मां निवारयसि । समासादयतु तावत्तातनिन्दाप्रगल्भः सूतकुलकलङ्को यद्धुजान्तरनिष्पेषसुलभं प्राणानामवसानम्'. ११. 'चेत्'. १२. 'अयं'. १३. 'अधुना'. १४. 'वारयतः'. १५. 'सखे, आचार्यपुत्र'.

कृपः—वत्स, सूतपुत्र, शस्त्रग्रहणेनालम् ।

अश्वत्थामा—मातुल, मातुल, किं निवारयसि[1] ? । अयमपि तातनिन्दाप्रगल्भः सूतापसदो[2] धृष्टद्युम्नपक्षपात्येव ।

कर्णः—राजन् , न खल्वहं निवारयितव्यः ।

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया ।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥ ४३ ॥

अश्वत्थामा—राजन् , मुञ्च मुञ्चैनम् । आसादयतु मद्भुजान्तरनिष्पेषसुलभमसूनामवसादनम् । अन्यच्च राजन्, [3]स्नेहेन वा कार्येण वा यत्त्वमेनं [4]ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि वृथैव ते । पश्य,—

पापः प्रियस्तव कथं गुणिनः [5]सखायं
[6]सूतान्वयः शशधरान्वयसंभवस्य ।
हन्ता किरीटिनम[7]हं नृप मुञ्च कुर्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥ ४४ ॥

( इति प्रहर्तुमिच्छति । )

कर्णः—( खड्गमुद्यम्य । ) अरे वाचाट, ब्राह्मणाधम, [8]अयं न भवसि । राजन्, मुञ्च मुञ्च । न खल्वहं वारयितव्यः । ( हन्तुमिच्छति । )

---

दिति भावः ॥ ४२ ॥ **उपेक्षितानामिति** । अवज्ञया धीरसत्त्वैः सुभटैरुपेक्षितानामित्यन्वयः । मन्दानामेषा विकत्थना भवति । अतोऽत्र मया नोपेक्षा कर्तव्येति भावः । अत्रासितानां गेहवासिनाम् ॥ ४३ ॥ निष्पेषो यन्त्रणम् । अस्मत्तो मत्सकाशात् । **पापप्रिय इति** । अयं पापस्तव कथं सखेत्यन्वयः । कीदृशः । प्रियः प्रियसुहृदित्यर्थः । अन्वयो वंशः । अहं किरीटिनं हन्ता हनिष्यामि । ततो हे नृप, मां मुञ्च । अहं लोकं कर्णरहितमर्जुनरहितं च कुर्यां करिष्ये ॥४४॥

---

पाठा०–१. 'वारयसि'. २. 'सूतकुलाधमः'. ३. 'स्नेहेन कार्येण वा त्वमेनं'. ४. 'ताताधिक्षेपप्रगल्भमस्मत्तो रक्षसि'. ५. 'सहायः'. ६. सूतात्मजः'. ७. 'असौ'; 'अयम्', ८. 'एवम्'.

( दुर्योधनकृपौ निवारयतः । )

**दुर्योधनः**—कर्ण, गुरुपुत्र, कोऽयमद्य युवयोर्व्यामोहः ? ।

**कृपः**[1]—वत्से[2], अन्यदेव प्रस्तुतमन्यत्रावेग[3] इति कोऽयं व्यामोहः ? । स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः ।

**अश्वत्थामा**—मातुल, न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम्[4] ।

**कृपः**—वत्स, अकालः खलु स्वबलप्रधानविरोधस्य ।

**अश्वत्थामा**—मातुल, यद्येवम्,—

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।
बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखबलं[5] वेत्तु समरे ॥ ४५ ॥

( इति[6] खड्गमुत्सृजति । )

**कर्णः**—( विहस्य । ) कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम ।

**अश्वत्थामा**—ननु रे, अपरित्यक्तमपि भवादृशैरायुधं चिरपरित्यक्तमेव निष्फलत्वात् ।

**कर्णः**—अरे मूढ,—

---

रथकारः सारथिः । शातयितुं तनूकर्तुम् ॥ **अयमिति** । उपेयात् गच्छेत् ॥४५॥

---

पाठा०–१. 'कृपः–भो अश्वत्थामन्, ननु भोः कर्ण, अन्यदेव प्रकृतमन्यत्रावेगः । कोऽयमद्य युवयोर्व्यामोहः । स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यासत्त एव उपपद्यते इति नायं पन्थाः ।'. २. 'आयुष्मन्'. ३. 'आवेशः'. ४. 'शादयितुम्'. ५. 'प्रियसखममुं'. ६. '( इति खड्गमुत्सृजति । ) कर्णः—( विहस्य ) अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात् । धृतायुधो यावदहं—'.

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ ४६ ॥

( नेपथ्ये । )

आः दुरात्मन्, द्रौपदीकेशाम्बराकर्षणमहापातकिन्, धार्तराष्ट्रापसद, चिरस्य खलु कालस्य मत्संमुखीनमागतोऽसि । क्षुद्रपशो, केदानीं गम्यते ? । अपि च, भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः, शृण्वन्तु भवन्तः,—

कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवा-
न्सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥४७॥

( सर्वे आकर्णयन्ति । )

अश्वत्थामा—( सोत्प्रासम् । ) अङ्गराज, सेनापते, जामदग्न्य-

---

धृतायुध इति । ममास्त्रेण यन्न सिद्धमित्यन्वयः ॥ ४६ ॥ इह श्लोके दम्भ आरभटी वृत्तिः । 'कपटानृतदम्भेषु वृत्तिरारभटी मता' इति भरतः ॥ सौबलो योधभेदः ॥ कृष्टेति । आसवो मद्यम् । भुजपञ्जरे बाहुमध्ये । कथं कौरवा इति । कच्छादिपाठात् 'मनुष्यतत्स्थयोः' ( ४।२।१३४ ) इति वुञ्प्रसक्तः । अत्रामनुष्यत्वेन विवक्षणान्न वुञ् । ततः 'तस्येदम्' ( ४।३।१२० ) इत्यण् । जनपदविवक्षायां

---

1 अत्र शौर्यगर्भितो गर्वाख्यो व्यभिचारिभावः; तल्लक्षणं चोक्तं दर्पणे—'गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः । अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥' इति ।

---

पाठा०-१. 'बाहुशालिन्'. २. 'मत्संमुखीगतोऽसि'. ३. 'स्पृष्टा'. ४. 'शिरोरुहेषु पशुना'. ५. 'कुरूणां'. ६. 'मद्भुजगोचरे'. ७. 'कौरवः'. ८. 'अश्वत्थामा—( सोपहासम् । ) अङ्गराज । कर्णः—किमाह भवान् । अश्व०—सेनाधिपते । कर्णः—तत्र कः संदेहः । अश्व०—जामदग्न्यशिष्य । कर्णः—बाढम् । अश्व०—द्रोणोपहासिन् । कर्णः—एवमेतत् । अश्व०—त्वयोक्तम् । कर्णः—किं मयोक्तम् । अश्व०—( 'धृतायुधो यावदहं' इति पठति । ) कर्णः—बाढमुक्तम् । अश्व०—इदं महत्कदनं संवृत्तम् । कर्णः—किं जातम् । अश्व०—भीमः कथयति । कर्णः—किम् । अश्व०—श्रूयताम् । कर्णः—किं कथ्यताम् । अश्व०—( 'कृष्टा येन' इत्यादि पठति ) 'तद्भीमाद्दुःशासनः संरक्ष्यतां युवराजः ।'. ९. '( सोत्प्रासम् )' इति क्वचिन्नास्ति. १०. 'जामदग्न्यास्त्रशिष्य'.

शिष्य, द्रोणोपहासिन्, भुजबलपरिरक्षितसकललोक, ('धृतायुधः [३।४६] इति पठित्वा।) इदं तदासन्नतरमेव संवृत्तम्। रक्षैनं सांप्रतं भीमाद्दुःशासनम्।

कर्णः—आः[1], का शक्तिर्वृकोदरस्य मयि जीवति दुः[2]शासनस्य छायामप्याक्रमितुम्[3]?। युवराज, न भेतव्यं न भेतव्यम्। अयमहमागतोऽस्मि। (इति निष्क्रान्तः।)

अश्वत्थामा—राजन् कौरवनाथ, अभीष्मद्रोणं संप्रति कौरवबलमालोडयन्तौ[4] भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम्। अतः स्वयमेव भ्रातुः प्रतीकारपरो भव।

दुर्योधनः—आः[5], शक्तिरस्ति दुरात्मनः पवनतनयस्यान्यस्य[6] वा मयि जीवति शस्त्रपाणौ[7] वत्सस्य[8] छायामप्याक्रमितुम्[9]?। वत्स[10], न भेतव्यं न भेतव्यम्। कः कोऽत्र भोः?। रथमुपनय। (इति निष्क्रान्तः।)

(नेपथ्ये कलकलः।)

अश्वत्थामा—(ससंभ्रमम्[11]।) मातुल[12][1], कष्टं कष्टम्!। एष[13] भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैरभिद्रवति[14]। सर्वथा पीतं दुःशासनशोणितं भीमेन!। न[15] खलु विषहे दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम्! अनृतमनुमतं नाम! मातुल, शस्त्रं शस्त्रम्,—

---

वाण्॥ ४७॥ 'सोत्प्रासः समनाक्स्मितम्' इत्यमरः॥ बाढं निश्चितम्॥ सममेक-

---

1 अत्र 'मातुल' इत्यारभ्य 'पीतं दुःशासनशोणितं भीमेन' इत्यनेन दुःशासनवधरूपा शङ्का, तया च पाण्डवविजयप्राह्याशान्वितसंभ्रमवत्त्वात् संभ्रमो नाम नाट्याङ्गम्; तल्लक्षणं तु दशरूपके—'शङ्कात्रासौ च संभ्रमः' इति।

---

पाठा०—१. 'आः, शक्तिरस्ति वृकोदरस्य'. २. 'युवराजस्य'. ३. 'अतिक्रमितुम्'; 'लङ्घयितुम्'. ४. 'वनम्'. ५. 'आः, का शक्तिर्दुरात्मनः'; 'आः, का शक्तिरस्ति दुरात्मनः'. ६. 'अन्यस्य वा' इति क्वचिन्नास्ति. ७. 'शस्त्रपाणौ' इति क्वचिन्नास्ति. ८. 'दुःशासनस्य'. ९. 'लङ्घयितुम्'. १०. 'वत्स, न भेतव्यम्'. ११. '(अग्रतो विलोक्य।)'. १२. 'मातुल, हा धिक्कष्टम्'; 'मातुल, मातुल, कष्टम्'. १३. 'एष खलु'. १४. 'शरवर्षैर्दुर्वारैरभिद्रवति। हा कष्टं कष्टम्। सर्वथा पीतं'. १५. 'तन्न युक्तं दुर्योधनस्यानुजस्यैतां विपत्तिमुपेक्षितुम्। अनृतमनुमतं नाम। भगवन्, शस्त्रं'.

सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे ।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥ ४८ ॥

( इति खड्गं ग्रहीतुमिच्छति । )

( नेपथ्ये । )

महात्मन्, भारद्वाजसूनो, न खलु [1]सत्यवचनमुल्लङ्घयितुमर्हसि ।

कृपः—वत्स, अशरीरिणी [2]भारती भवन्तमनृतादभिरक्षति ।

अश्वत्थामा—कथमियममानुषी वाग्[3]नानुमनुते सङ्ग्रामावतरणं मम ! । सर्वथा पाण्डवपक्षपातिनो देवाः । भोः, कष्टं कष्टम् !

दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम् ।
दुर्योधनस्य कर्ताऽस्मि किमन्यत्प्रियमाहवे ॥ ४९ ॥

मातुल, राधेयक्रोधवशादनार्यमस्माभिराचरितम् । अतस्त्वमपि तावदस्य राज्ञः पार्श्ववर्ती भव ।

कृपः—गच्छाम्यहमत्र प्रतिविधातुम् । भवानपि शिबिरसंनिवेशमेव प्रतिष्ठताम् ।

( [4]परिक्रम्य निष्क्रान्तौ । )

## इति तृतीयोऽङ्कः ।

---

देव । अहं विषहे सोढुं पारयामि ॥ **सत्यादिति** । अनृतमसत्यम् । **स्वर्गमिति** । धिग्योगे द्वितीया । भीमादिति । 'भीत्रार्थानां भयहेतुः' ( १।४।२५ ) इति पञ्चमी । अत्यक्तं मयेति शेषः ॥ ४८ ॥ भारती सरस्वती ॥ **दुःशासनस्येति** । उदासितम् । मयेति शेषः । किमन्यत्प्रियं दुर्योधनस्याहं कर्ता करिष्ये ? ॥ ४९ ॥ अनार्यमनर्हम् ॥

अमूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतावयासीदङ्कस्तृतीयो वरटिप्पनेऽत्र ॥

इति तृतीयोऽङ्कः ।

---

1 'त्वमपि' इत्यारभ्य 'गच्छाम्यहमत्र प्रतिविधातुम्' इत्यन्तेन साहाय्याभिधा नाट्यालङ्कृतिः; तल्लक्षणं च दर्पणे—'साहाय्यं सङ्कटे यत्स्यात्सानुकूल्यं परस्य च' इति ।

---

पाठा०–१. 'सत्यवचनमनुलङ्घितपूर्वमुल्लङ्घयितुम्'. २. 'वाणी'. ३. 'नानुमनुते सङ्ग्रामावतरणं मे । भोः, कष्टम् । आः, पक्षपातिनो देवा अपि पाण्डवानाम् । सर्वथा पीतं दुःशासनशोणितं भीमेन । भोः कष्टं कष्टम् ।' ४. '( उभौ परिक्रम्य निष्क्रान्तौ । )'.

## चतुर्थोऽङ्कः ।

( ततः प्रविशति प्रहारमूर्च्छितं रथस्थं दुर्योधनमपहरन्सूतः । )

( सूतः ससंभ्रमं परिक्रामति । )

( नेपथ्ये )

भो भोः, [1]बाहुबलावलेपप्रवर्तितमहासमरदोहदाः कौ[2]रवपक्षपातपणीकृतप्राणद्रविणसंचया नरपतयः, सं[3]स्तभ्यन्तां नि[4]हतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनभ[5]यप[6]रिस्खलत्प्रहरणानि रणात्प्र[7]द्रवन्ति बलानि ।

सूतः—( विलोक्य । ) कथमेष [8]धवलचपलचामरचुम्बितकनककमण्डलुना शि[9]खरावबद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसंमर्दवि[10]षमोद्धातकृतकलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भित[11]परचक्रपराक्रमप्रसरः प्रद्रुतमात्मबलमाश्वासयन्कृपः किरीटिनाभियुक्तमङ्गराजमनुसरति ? । हन्त, [12]जातमस्मद्बलानामवलम्बनम् !

( नेपथ्ये कलकलानन्तरम् । )

भो भोः, अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधाः, न भेतव्यं न भेतव्यम् । अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो र[13]भस-

---

'अवलेपः स्मृतो गर्वः' इति विश्वः । दोहदो 'दोहर' इति प्रसिद्धः । प्राणा एव द्रविणमिति रूपकम् । संस्तभ्यन्तां स्थिरीक्रियन्ताम् । बीभत्सो भयानकः । प्रहरणमस्त्रम् । चुम्बितः संबद्धः । शिखरमग्रम् । वैजयन्ती पताका । कलेवरं शरीरम् ॥ तोमरोऽस्त्रभेदः । पीवरं मांसलम् । क्षतजं रक्तम् । रभस आवेगस्तं

---

पाठा०—१. 'बाहुबलाहंकारप्रवर्तित–'. २. कौरवकुलपक्षपात–'. ३. 'संस्तभ्यन्तां संस्तभ्यन्तां'. ४. 'हत–'. ५. 'विषाद–'. ६. 'परिस्खलित–'. ७. 'द्रवन्ति'; 'विद्रवन्ति'. ८. 'धवलचपलचारुचामर'; 'धवलचारुचामर'. ९. 'शिखराबद्ध–'; 'शिखरावनद्ध–'. १०. 'विषमोत्खात–'. ११. 'परबलपराक्रमप्रद्रुतमात्मबलं'; 'परचक्रपराक्रमप्रसरः प्रतिपक्षमीक्षमाणमात्मीयबलं'. 'परबलपराक्रमप्रसरः प्रद्रुतमात्मबलं'. १२. 'जातमेव बलानामवलम्बनम्'. १३. 'रणरभसगामी.'.

गामी स्तोकावशिष्टप्रतिज्ञामहोत्सवः कौरवराजस्य द्यूतनिर्जितो दासः[1] पार्थमध्यमो[2] भीमसेनः सर्वान्भवतः साक्षीकरोमि[3] । श्रूयताम्,—

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मृषतः[4] कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥ १ ॥

सूतः—(श्रुत्वा । सभयम् ।) कथमासन्न[5] एव[6] दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतो[7] मारुतिः[8] ? । अनुपलब्धसंज्ञश्च महाराजः[9] । भवतु । दूरमपहरामि[10] स्यन्दनम् । कदाचिद्दुःशासन इवास्मिन्नप्ययम[11]नार्योऽनार्यमाचरिष्यति । (त्वरितं[12] परिक्रम्यावलोक्य च ।) अये, अयमसौ सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादपः । उचिता[13] विश्रामभूरियं समरव्यापारखिन्नस्य वीरजनस्य । अत्र[14] स्थितश्चायाचिततालवृन्तेन हरिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणामयोग्येन सरसीसमीरणेनामुना[15] गतक्लमो भविष्यति महाराजः । लूनकेतुश्चायं[16] रथोऽनिवारित एव प्रवे-

---

गन्तुं शीलं यस्य स रभसगामी । **राज्ञ इति** । मृषतः सहिष्णोः । कोष्णमीषदुष्णम् । 'कोष्णं कवोष्णं मन्दोष्णम्' इत्यमरः । तस्य दुःशासनस्य । वक्षसो हृदयात् । असृङ्मया पीतमित्यन्वयः । करजो नखः ॥ १ ॥ मारुतिर्भीमः । संवाहितो मिलितः । 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । अयाचिततालवृन्तं स्वयमुपस्थितव्यजनम् । हरिचन्दनं चन्दनभेदः । परिणामो विपाकः । प्रवेक्ष्यति प्रवेशं कार-

---

पाठा०—१. 'जितदासः'. २. 'पाण्डवमध्यमः'. ३. 'साक्षिणः करोमि'. ४. 'च तथा'; 'मिषतः'. ५. 'अये, कथ—'. ६. 'एषः'; 'एवासौ'. ७. 'कौरववनोत्पातमारुतः'. ८. 'मारुतिः' इति क्वचिन्नास्ति. ९. 'अनुपलब्धसंज्ञश्च तावदत्र महाराजः'; 'अनुपलब्धसंज्ञश्च तावन्महाराजः' १०. 'सुदूरमपनयामि'; 'दूरमपसारयिष्यामि'. ११. 'अयम्' इति क्वचिन्नास्ति. १२. 'त्वरिततरं'. १३. 'उचितेयं विश्रामभूमिः' १४. 'यत्रस्थोऽयं मयोपवीजिततालवृन्तेन'; 'अत्रस्थोऽयमयाचिततालवृन्तेन'; 'अत्रस्थश्चायमयत्नोपवीजिततालवृन्तेन'. १५. 'सरसीसमीरणेन च विगतक्लमः'. १६. '(ऊर्ध्वमवलोक्य ।) लूनकेतु—'.

क्ष्यति छायामिति । (प्रवेशं रूपयित्वा ।) [2]कः कोऽत्र भोः ? । (समन्तादवलोक्य ।) कथं न कश्चिद[3]त्र परिजनः ? । नूनं [4]तथाविधस्य वृकोदरस्य दर्शनादेवंविधस्य च स्वामिनस्त्रासेन शिबिरसंनिवेशमेव प्रविष्टः । कष्टं भोः, कष्टम् !

[5]दत्त्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन्हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाध्यामप्यरीणां [6]लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं [7]कुरुकुलविमुखं दैवमेतावतापि ॥ २ ॥

(राजानमवलोक्य ।) [8]कथमद्यापि चेतनां न लभते म[9]हाराजः ? । भोः, कष्टम् ! (निश्वस्य ।),—

मदकलि[10]तकरेणुभज्यमाने
विपिन इव प्रकटैकशालशेषे ।
हतसकलकुमारके कुलेऽस्मिं-
स्त्वम[11]पि विधेरवलोकितः कटाक्षैः ॥ ३ ॥

ननु भो हतविधे, भरतकुलविमुख,—

---

यिष्यति । छत्रमित्यादावानीयतामिति शेषः । **दत्त्वेति** । पार्थादभयं दत्त्वापि द्रोणेन सिन्धुराजो न रक्षित इत्यन्वयः । भीमसेनेन प्रतिज्ञां पूरयित्वा कर्म कृतमित्यन्वयः । अरीणां दुःसाध्यां दुःखसाध्याम् । तृणमिव कर्मातिशीघ्रं कृतमित्यर्थः । 'लघुम्' इति पाठे प्रतिज्ञाविशेषणम् । वस्तुतो गुर्वीमपि लघ्वीमिवेत्यर्थः । एतावतापि दैवं कुरुकुलविमुखं नाहं मन्ये । अपि त्वपरमपि करिष्यतीति भावः । 'कुरुकुलनिधने' इति पाठे कुरुकुलनाशे सकामं पूर्णमनोरथं दैवं नाहं मन्य इत्यर्थः ॥२॥ **मदेति** । मदेन मत्ततया । कलितः संबद्धः । करेणुर्हस्ती । प्रकटः स्फुटः । एकः शालः शङ्कुतरुर्वृक्षमात्रं वा शेषोऽवशेषो यत्र । 'शालः शङ्कुतरुर्मतः' इति विश्वः ।

---

पाठा०—१. 'छायाम् । (इति प्रवेशं रूपयित्वा ।)'. २. 'कः कोऽत्र'; 'कः कोऽत्र भोः । व्यजनं चामरं शीघ्रमुपनयतु । (दिशोऽवलोक्य ।) कथं न कश्चिदत्र परिजनः । नूनं तथाविधस्य वृकोदरस्य दर्शनादेवंविधे सति स्वामिनि त्रासात्'. ३. 'अत्र' इति क्वचिन्नास्ति. ४. 'तथाभूतस्य'. ५. 'द्रोणेनाकृष्य पार्थादयमपि च न संरक्षितः'. ६. 'तृणमिव'. ७. 'कुरुकुलनिधने'. ८. 'कथमद्यापि न चेतनामुपलभते महाराजः'. ९. 'स्वामी'. १०. 'करीन्द्रभज्यमाने'. ११. 'असि'.

अक्षतस्य गदापाणेरनारूढस्य संशयम् ।
एषापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया ॥ ४ ॥

दुर्योधनः—(शनैरुपलब्धसंज्ञः ।) आः, शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञां पूरयितुम् ? । वत्स दुःशासन, न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ननु सूत, प्रापय रथं तमेवोद्देशं यत्र वत्सो मे दुःशासनः ।

सूतः—आयुष्मन्, अक्षमाः संप्रति वाहास्ते रथमुद्वोढुम् । (अपवार्य ।) मनोरथं च ।

दुर्योधनः—(रथादवतीर्य, सगर्वं साकूतं च ।) कृतं स्यन्दनगमनकालातिपातेन ।

सूतः—(सवैलक्ष्यं सकरुणं च ।) मर्षयतु मर्षयतु देवः ।

दुर्योधनः—धिक्सूत, किं रथेन ? । केवलमरातिविमर्दसंघट्टसंचारी दुर्योधनः खल्वहम् । तद्गदामात्रसहायः समरभुवमवतरामि ।

सूतः—देव, एवमेतत् ।

दुर्योधनः—यद्येवं किमेवं भाषसे ? । पश्य,—

---

'अनोकहः कुटः शालः' इत्यमरः । हे राजंस्त्वमपि ॥३॥ आकाश इति । 'पात्रस्याल्पतया यत्र पात्रं नैव प्रवेश्यते । आकाशे कर्णं दत्त्वाकाशे लक्ष्यं बध्वेति वोच्यते ॥' इति भरतः । अक्षतस्येति । अनारूढस्यागतस्य ॥ ४ ॥ स्वैरं मन्दं यथा स्यादेवम् ॥ वाहोऽश्वः । 'वाजिवाहार्वगन्धर्व-' इत्याद्यमरः । मनोरथं च ।

---

पाठा०—१. '(स्वैरमुपलब्धसंज्ञः ।)'; '(सधीरमुपलब्धसंज्ञः ।)'; '(उपलब्धसंज्ञकः ।)'. २. 'आः, का शक्तिरस्ति दुरात्मनः पवनतनयस्य वृकोदरहतकस्य'; 'आः, का शक्तिरस्ति पवनतनयस्य वृकोदरस्य'. ३. 'मयि जीवति गदापाणौ वत्सदुःशासनस्य छायामप्यतिक्रमितुम्'. ४. 'सूत, प्रापय रथं तमुद्देशं यत्र वत्सो दुःशासनस्तिष्ठति'; 'सूत, प्रापय रथं तमुद्देशं यत्र वत्सं द्रक्ष्यामि'. ५. 'देव, अक्षमास्ते वाहाः संप्रति'; 'महाराज, अक्षमाः संप्रति वाहास्ते'. ६. रथमेनमुद्वोढुम्'. ७. 'वयं च'. ८. 'किं'. ९. 'मर्षयत्वायुष्मान्'; मर्षयतु मर्षयत्वायुष्मान्'. १०. 'किं रथेनैव । अरातिविमर्दसंघट्टसंचारी दुर्योधनः । तद्गदामात्रसहाय एव समरभुवमवतरामि'. ११. 'सूतः—एवमिदम् ।'; 'सूतः—आयुष्मन्, एवमेतत् । कः संदेहः ।'. १२. 'किमिति त्वमेवं भाषसे'.

बालस्य मे प्रकृतिदुर्ललितस्य पापः
पा[1]पं व्यवस्यति समक्षमुदायुधोऽसौ ।
अस्मिन्निवारयसि किं व्यवसायिनं मां
क्रोधो न ना[2]म करुणा न च तेऽस्ति लज्जा ॥ ५ ॥

**सूतः**—( सकरुणं पादयोर्निपत्य । ) एतद्विज्ञापयामि । आ[3]युष्मन्, [4]संपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि ।

**दुर्योधनः**—( सहसा भूमौ पतन् । ) हा वत्स दुःशासन, हा मदाज्ञाविरोधितपाण्डव, हा विक्रमैकरस, हा मदङ्कदुर्ललित, हा अरातिकुलगजघटामृगेन्द्र, हा युवराज, क्वासि ? । प्रयच्छ मे प्रतिवचनम् । ( इति निश्वस्य मोहमुपगतः । )

**सूतः**—राजन्, समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—( संज्ञां लब्ध्वा । निश्वस्य । )

यु[5]क्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाग्रजेन ।
अस्यास्तु वत्स तव हेतुरहं विपत्ते-
र्यत्कारितोऽस्यविनयं न च रक्षितोऽसि ॥ ६ ॥

( [6]इति पतति । )

---

मनोरथमप्युद्वोढुमक्षमा इति शेषः ॥ **बालस्येति** । पापं नाशरूपम् । नाम संभावनायाम् । क्रोधस्ते नास्ति । करुणापि न, लज्जापि न इत्यन्वयः । करुणापि नेत्यत्र नकारस्यावृत्तिः । यद्वा 'क्रोधो न नापि करुणा न च तेऽस्ति लज्जा' इति पाठः ॥ ५ ॥ **युक्त इति** । युक्तो योजितः । हिरवधारणे । मयैव त्वं न लालितो विलासं न नीतः । मया कीदृशेन । वृथाग्रजेन निष्फलज्येष्ठेन ॥ ६ ॥

---

पाठा०—१. 'पास्यत्यसृग्जनसमक्षमुदायुधोऽसा'. २. 'नापि'; 'क्रोधो न नाम करुणापि च ते न लज्जा'. ३. 'देव'. ४. 'संपूर्णप्रतिज्ञेन भूतमिदानीं वृकोदरेण । यत एवं ब्रवीमि'; संपूर्णप्रतिज्ञेन भूतं वृकोदरेण । अत एवं ब्रवीमीति'; संपूर्णमनोरथेन सत्यप्रतिज्ञेन भवितव्यमिदानीं वृकोदरेण'; 'संपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यं वृकोदरहतकेन । यत एवं ब्रवीमि'; 'संपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि'. ५. 'मुक्तः'. ६. '( इति पुनः पतति । )'; '( इति मूर्च्छति । )'.

सूतः—आयुष्मन्, समाश्वसिहि समाश्वसिहि।

दुर्योधनः—धिक्सूत, किमनुष्ठितं भवता?।

रक्षणीयेन सततं बालेनाज्ञानुवर्तिना।
दुःशासनेन भ्रात्राहमुपहारेण रक्षितः॥ ७॥

सूतः—महाराज, मर्मभेदिभिरिषुतोमरशक्तिप्रासवर्षैर्महारथानामपहतचेतनत्वान्निश्चेतनः कृतो महाराज इत्यपहृतो मया रथः।

दुर्योधनः—सूत, विरूपं कृतवानसि।

तस्यैव पाण्डवपशोरनुजद्विषो मे
क्षोभैर्गदाशनिकृतैर्न विबोधितोऽस्मि।
तामेव नाधिशयितो रुधिरार्द्रशय्यां
दौःशासनीं यदहमाशु वृकोदरो वा॥ ८॥

(निश्वस्य। नभो विलोक्य।) ननु भो हतविधे, कृपाविरहित, भरतकुलविमुख,—

अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः।

सूतः—शान्तं पापं शान्तं पापम्। महाराज, किमिदम्?।

दुर्योधनः—

घातिताशेषबन्धोर्मे किं राज्येन जयेन वा॥ ९॥

(ततः प्रविशति शरप्रहारव्रणबद्धपट्टिकालंकृतकायः सुन्दरकः।)

---

रक्षणीयेनेति। रक्षणीयेन रक्षणार्हेण। दुःशासनेनोपहारेणाहं रक्षितः, त्वयेति शेषः॥ ७॥ तस्यैवेति। तस्यैव क्षोभैर्न विबोधितोऽस्मि मोहं गतोऽस्मि। कीदृशैः। गदावज्रकृतैः। दौःशासनीं दुःशासनसंबन्धिनीम्। तामेव शय्यां नाधिशयितोऽहं तत्रैव न शयितः। 'अधिशीङ्स्थासां कर्म' (१।४।४६) इत्याधारे कर्म। वृकोदरो वा नाधिशयितस्तामेव शय्यामित्यन्वयः॥८॥ अपि नामेति। नाम संभावनायाम्। मृत्युरपि मे भवेन्न च वृकोदरो हन्ता भवेदिति प्रार्थनायां लिङ्॥ ९॥ व्रणेषु क्षतेषु बद्धा या पट्टिका 'पाटी' इति

---

पाठा०—१. 'आयुष्मन्, समाश्वसिहि'. २. 'लालनीयेन'. ३. 'बालकेनानुवर्तिना'. ४. 'उपकारेण'. ५. 'देव'. ६. 'असितोमर–'. ७. 'अपहृत–'. ८. 'निश्चेष्टः'. ९. 'क्षोदैः'. १०. 'यद्येव'; 'अद्यैव'; 'यद्येव'. 'यच्चैव'. ११. 'अद्य'. १२. 'पातिताशेषबन्धोः'. १३. '(ततः प्रविशति सप्रहारः पुरुषः।)'. १४. 'व्रणबन्धपट्टिकालंकृतशरीरः'; 'व्रणबद्धपट्टिकालंकृतशरीरः'.

सुन्दरकः—अज्जा, अवि णाम इमस्सिं उद्देसे सारहिदुइओ दिट्ठो तुम्हेहिं [1]महाराअदुज्जोहणो ण वेत्ति। ([3]निरूप्य।) कहं ण को वि मंतेदि ?। होदु। एदाणं बद्धपरिअराणं [4]पुरिसाणं समूहो दीसइ[5]। एत्थ गदुअ पुच्छिस्सं। ([6]परिक्रम्य विलोक्य च।) कहं एदे खु [7]सामिणो गाढप्पहारहदस्स घणसण्णाहजालदुब्भेज्जमुहेहिं कंक[2]-वत्तेहिं हिअआदो सल्लाइं उद्धरंति। [8]ता ण हु हु एदे जाणंति। होदु। अण्णदो विचिणइस्सं। ([9]अग्रतोऽवलोक्य, किंचित्परिक्रम्य।) इमे खु अवरे प्पहूददरा [10]संगदा वीरमणुस्सा दीसंति। ता एत्थ गदुअ पुच्छिस्सं। (उपगम्य।) हंहो, जाणह [11]तुम्हे कस्सिं उद्देसे कुरुणाहो वट्टइ त्ति ?। कहं एदे वि मं पेक्खि[12]अ अहिअदरं रोअंदि ?। (दृष्ट्वा।) ता ण हु एदे वि जाणंति। [13]हा, अदिकरुणं खु एत्थ

प्रसिद्धा तयालंकृतकायः॥ **सुन्दरकवाक्ये**। आर्याः, अद्यापि नाम अस्मिन्नुद्देशे सारथिद्वितीयो युष्माभिर्महाराजदुर्योधनो दृष्टो न हि वा ?। कथं वा प्रेक्ष्याधिकतरं रुदन्ति ?। तन्न खल्वेतेऽपि जानन्ति। भवतु। अन्यतो गत्वा पृच्छामि। एतेषां बद्धपरिमण्डलानां पुरुषाणां समूहो दृश्यते। भवतु। अत्र गत्वा पृच्छामि। कथमेते खलु स्वामिनो गाढप्रहाराहतस्य घनसन्नाहजालदुर्ग्राह्यमुखैः कङ्कवदनैर्हृदयाच्छल्यान्युद्धरन्ति। तन्न खल्वप्येते जानन्ति। भवतु। अन्यतो गत्वा पृच्छामि। अयमपरो बहुप्रहारव्रणितकायोऽकृतव्रणबन्ध एव योधसमूह इमं शून्यासनं तुरङ्गममुपालभ्य रोदिति। नूनमेतेषां स्वामीह समरे हतः। तन्न खल्वप्येते जानन्ति। अन्यतो गत्वा पृच्छामि। एते बहुतराः संमिलिता वीरमनुष्या दृश्यन्ते। तदत्र गत्वा पृच्छामि। हंहो, जानीथ यूयं कस्मिन्नुद्देशे कुरुनाथो वर्तत इति ?। कथमेतेऽपि मां प्रेक्ष्याधिकतरं रुदन्ति ?। तन्न खल्वप्येते जानन्ति। हा हा, कथमेषा

1 अत्र 'अज्जा' इत्यादिना सुन्दरकवाक्येन दुर्योधनान्वेषणविषयकैरभ्यर्थनावगुण्ठितप्रश्नवाक्यैः पृच्छाख्यं नाट्यलक्षणं; तल्लक्षणं च दर्पणे—'अभ्यर्थनपरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मता' इति। 2 'कंकवअणेहिं' इति टीकानुकूलः पाठः।

पाठा०—१. 'पुरुषः'. २. 'महाराओ दुज्जोहणो'. ३. '(निरूप्य।)' इति क्वचिन्नास्ति. ४. 'योहपुरिसाणं'. ५. 'दीसइत्ति'. ६. '(विलोक्य।)'. ७. 'स्वसामिणो'. ८. 'ता क्खु एदे ण जाणंदि'. ९. '(अग्रतोऽवलोक्य, किंचित्परिक्रम्य।)' इति क्वचिन्नास्ति. १०. 'संगदा मणुस्सा दीसंति। ता एत्थ गदुअ'; 'संकलिदा वीरमाणुसा। ता एत्थ गदुअ'. ११. 'तुम्हे' इति क्वचिन्नास्ति. १२. 'देक्खिअ'. १३. 'हा, दुक्करं क्खु एत्थ वट्टइ'.

वट्टइ ! । एसा वीलमादा समलविणिहदं पुत्तअं [1]सुणिअ रत्तंसुअ-णिवसणाए समग्गभूसणाए वहूए सह [2]अणुमरदि । (सश्लाघम् ।) साहु वीरमादे, साहु । अण्णस्सिं वि जम्मंतरे अणिहदपुत्तआ [3]हुविस्सिस । होदु । अण्णदो [4]पुच्छिस्सं । (अन्यतो [5]विलोक्य ।) अअं अवरो बहुप्पहारणिहदकाओ [6]अकिदव्वणबंधो एव्व जोह-समूहो इमं सुण्णासणं तुलंगमं उवालहिअ रोइदि । णूणं एदाणं एत्थ एव्व सामी वावादिदो । ता ण हु एदे वि जाणंदि । होदु । अण्णदो गदुअ पुच्छिस्सं । (सर्वतो विलोक्य ।) कहं सव्वो एव्व अवत्थाणुरूवं व्वसणं अणुभवंतो [7]भाअधेअविसमसीलदाए पज्जाउलो जणो ? । ता कं [8]दाणीं एत्थ पुच्छिस्सं ? । कं वा उवालहिस्सं ? होदु । सअं एव्व एत्थ विचिणइस्सं । (परिक्रम्य ।) होदु । देव्वं दाणीं उवालहिस्सं । हंहो देव्व, एआदसाणं [1]अक्खोहिणीणं णाहो जेट्ठो भादुसदस्स भत्ता गंगेअदोणंगराअसल्लकिवकिदवम्मअस्सत्थामप्प-मुहस्स राअचक्कस्स सअलप्पुहवीमंडलेक्कणाहो महाराअदुज्जोहणो

वीरमाता समरविनिहतं पुत्रं प्रेक्ष्य रक्तांशुकयुगनेपथ्यया सर्वाङ्गभूषणया वध्वा सममनुम्रियते । साधु वीरमातः, साधु । आर्ये वीरमातः, मा त्वमन्यस्मिन्नपि जन्मान्तरेऽविनिहतपुत्रका भविष्यसि । हा हा, अतिकरुणं खल्वत्र वर्तते । सर्व एव कालावस्थानुरूपमनुभवन्भागधेयविषमशीलतया बाष्पपर्याकुलो जनो दृश्यते । तत्कमिदानीमत्र पृच्छामि ? । कं वोपालभे ? । भवतु । दैवमुपालभे । हंहो दैव, एका-दशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणशल्याङ्गराजकृप-कृतवर्माश्वत्थामप्रमुखस्य सकलराजचक्रस्य पृथ्वीमण्डलैकनाथो महाराजदुर्योधनो-

1 अक्षौहिणीप्रमाणं यथा—'अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः ॥ एवमेव रथानां तु सङ्ख्यानं कीर्तितं बुधैः । सङ्ख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः । नृणां शतसहस्राणि सहस्राणि तथा नव ॥ शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः ॥' इति; एवं २१८७० गजाः, २१८७० रथाः, ६५६१० तुरङ्गाः, १०९३५० एकीकृत्य २१८७०० अक्षौहिणी भवति ।

पाठा०-१. 'पेक्खिदुं'. २. 'अनुसरदि'. ३. '°सरिसि पुत्तो वि दे अखंडिदयसो वीरो हुविस्सदि'. ४. 'विच्चिणइस्सं'. ५. अवलोक्य'. ६. 'अकिदव्वणप्प-डिआरो' ७. 'भोगधेअविमुहदाए'. ८. 'दाणीं' इति क्वचिन्नास्ति.

वि अण्णेसीअदि । [1]अण्णेसीअंतो वि ण जाणीअदि कस्सिं उद्देसे वट्टइ त्ति । ( विचि[2]न्त्य निश्वस्य च । ) [1]अह वा किं एत्थ देवं उवालहामि ? । तस्स खु एदं णिब्भच्छिअविउरवअणवीअस्स [3]अवधीरिदपिदामहहिदोवदेसंकुरस्स स[4]उणिप्पोच्छाहणादिविरूढमूलस्स जे[5]दुगेहजूदविससाहिणो संभूदचिरआलसंबद्धवेरालवालस्स पंचा[6]लीकेसग्गहणकुसुमस्स फलं परिणमदि । ( अन्यतो विलोक्य । ) जहा एत्थ एसो विविहरअणप्पहासंवलिदसूरकिरणप्पसूदसक्कचावसहस्ससंपूरिददसदिसामुहो लूणकेदुवंसो रहो दीसइ, ता अहं तक्केमि अवस्सं एदिणा महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वं । [7]याव निरूपेमि । ( उपगम्य दृष्ट्वा निश्वस्य च । ) कधं एआदहाणं अक्खोहिणीणं णाअको भविअ महाराओ दुज्जोहणो पइदपुरिसो विअ असलाहणीए भूमिए उवविट्ठो चिट्ठदि ? । अध वा तस्स खु एदं [8]पंचालीकेसग्गहकुसुमस्स फलं परिणमदि । [ आर्याः, अपि नामास्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिर्महाराजदुर्योधनो न वेति ? । कथं न कोऽपि मन्त्रयते ? । भवतु । एतेषां बद्धपरिकराणां पुरुषाणां समूहो दृश्यते । अत्र गत्वा प्रक्ष्यामि । कथमेते खलु स्वामिनो गाढप्रहारहतस्य घनसन्नाहजालदुर्भेद्यमुखैः कङ्कपत्रैर्हृदयाच्छल्यान्युद्धरन्ति । तन्न खल्वेते जानन्ति । भवतु । अन्यतो विचेष्यामि । इमे खल्वपरे प्रभूततराः संगता वीरमनुष्या

ऽन्विष्यतेऽन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुद्देशे वर्तत इति । अथवा किमिति दैवमुपालभे ? । यतस्तस्य खल्वेतन्निर्भर्त्सितविदुरवचनबीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनादिरूढमूलस्य जतुगृहद्यूतविषशाखिनः संभू-

1 इह—'अह वा' इत्यारभ्य 'फलं परिणमदि' इत्यन्तेन बीजमेव फलोन्मुखतयाक्षिप्तत्वात् आक्षेपाख्यं गर्भसन्ध्यङ्गम्; तल्लक्षणं दशरूपके—'गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः' इति ।

पाठा०—१. 'अण्णेसीअंतो वि ण जाणीअदि । ण जाणे कस्सिं उद्देसे सो वट्टइ त्ति'; 'ण जाणे कस्सिं उद्देसे सो वट्टइ त्ति'. २. '( विमृश्य । )'. ३. 'परिभूदपिदामहहिदोवदेसंकुरस्स'. ४. 'सउणिहदअप्पोच्छाहणादिविरूढमूलस्स'; 'सउणिप्पोच्छाहणारूढमूलस्स'. ५. 'कूडविससाहिणो' ६. 'पंचालिआकेसग्गहणकुसुमस्स'. ७. 'याव निरूपेमि' इत्यारभ्य 'अये, कथं सङ्ग्रामात्सुन्दरकः प्राप्तः' इत्यन्तं केषुचित्पुस्तकेषु नास्ति. ८. 'पंचालिआकेसग्गहकुसुमस्स'.

दृश्यन्ते । तदत्र गत्वा प्रक्ष्यामि । हंहो, जानीथ यूयं कस्मिन्नुद्देशे कुरुनाथो वर्तत इति ? । कथमेतेऽपि मां प्रेक्ष्याधिकतरं रुदन्ति ? । तन्न खल्वेतेऽपि जानन्ति । हा, अतिकरुणं खल्वत्र वर्तते ! । एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्र-भूषणया वध्वा सहानुम्रियते । साधु वीरमातः, साधु । अन्यस्मिन्नपि जन्मान्तरेऽनिहतपुत्रका भविष्यसि । भवतु । अन्यतः प्रक्ष्यामि । अयमपरो बहुप्रहारनिहतकायोऽकृतव्रणबन्ध एव योधसमूह इमं शून्यासनं तुरङ्गममुपालभ्य रोदिति । नूनमेतेषामत्रैव स्वामी व्यापादितः । तन्न खल्वेतेऽपि जानन्ति । भवतु । अन्यतो गत्वा प्रक्ष्यामि । कथं सर्व एवावस्थानुरूपं व्यसनमनुभवन्भागधेयवि-षमशीलतया पर्याकुलो जनः ? । तत्कमिदानीमत्र प्रक्ष्यामि ? । कं वोपालप्स्ये ? । भवतु । स्वयमेवात्र विचेष्यामि । भवतु । दैवमि-दानीमुपालप्स्ये । हंहो दैव, एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमु-खस्य राजचक्रस्य सकलपृथ्वीमण्डलैकनाथो महाराजदुर्योधनोऽप्य-न्विष्यते । अन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुद्देशे वर्तत इति । अथवा किमत्र दैवमुपालभे ? । तस्य खल्विदं निर्भर्त्सितविदुरव-चनबीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनादि-विरूढमूलस्य जतुगृहद्यूतविषशाखिनः संभूतचिरकालसंबद्धवैराल-वालस्य पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति । यथात्रैष विवि-

---

तस्य चिरकालसंबद्धवैरालवालस्य पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति । अम्मो, यथा चैष विविधरत्नप्रभाभास्वरसंगलितसूरकिरणप्रसूतशक्रचापसहस्रपूरि-तदशदिङ्मुखो लूनकेतुवंशो रथो दृश्यते तथा तर्कयाम्यवश्यमेतेन महाराजदुर्यो-धनस्य रथोद्देशेन भवितव्यम् । भवतु । उपसर्पामि । कथमेष देव एकादशानामक्षौ-हिणीनां नाथो महाराजदुर्योधनोऽश्लाघनीयः प्राकृतपुरुष इव भूमावुपविष्टस्तिष्ठति ? । नूनं तस्य खल्वेतत्पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति । अत्र परिमण्डलं मण्डली । कङ्कवदनं संदंशिका । 'रणबन्धः' इति पाठे रणबन्धः सङ्ग्रामानुबन्धः । नेपथ्यं प्रसाधनम् । 'नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः । वध्वा पुत्रवध्वा । भागधेयं भाग्यम् । 'भागरूपनामभ्यो धेयः' (वा०) इति धेयप्रत्ययः । शीलतया कालावस्थानुरूपमित्यन्वयः । विदुरो मन्त्री । पितामहो भीष्मः ।

धररत्नप्रभासंवलितसूर्यकिरणप्रसूतशक्रचापसहस्रसंपूरितदशदिशामुखो लूनकेतुवंशो रथो दृश्यते, तदहं तर्कयाम्यवश्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम् । यावन्निरूपयामि । कथमेकादशानामक्षौहिणीनां नायको भूत्वा महाराजो दुर्योधनः प्राकृतपुरुष इवाश्लाघनीयायां भूमावुपविष्टस्तिष्ठति ? । अथ वा तस्य खल्विदं पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति । ]

( उपसृत्य सूतं संज्ञया पृच्छति । )

सूतः—( दृष्ट्वा । ) अये, कथं सङ्ग्रामात्सुन्दरकः प्राप्तः ? ।

सुन्दरकः—( उपगम्य । ) जअदु जअदु महाराओ ।[2] [ जयतु जयतु महाराजः । ]

दुर्योधनः—( विलोक्य । ) अये[1] सुन्दरक, कच्चित्कुशलमङ्गराजस्य ? ।

सुन्दरकः—देव, कुसलं सरीरमेत्तकेण[3] । [ देव, कुशलं शरीरमात्रकेण । ]

दुर्योधनः—किं किरीटिनास्य निहता धौरेयाः, हतः सारथिर्भग्नो वा रथः ? ।

आलवालं 'थलम्' इति प्रसिद्धम् । 'अम्मो'शब्दो देशी ज्ञातार्थो हर्षार्थो वा । भास्वरः परप्रकाशकः । संगलितः संबद्धो यः सूरकिरण आदित्यतेजः । उत्तमरत्नतेजोभिरिन्द्रधनुरारभ्यत इति रत्नपरीक्षा । उद्देशः प्रदेशः । प्राकृतः पामरः । स्वागतं कुशलम् ॥ **सुन्दरकवाक्ये** । सारथे, कुतः स्वागतं ? निवेदय ममागमनं देवस्य ॥ जयति देवः ॥ 'कच्चित्कामप्रवेदने' इत्यमरः । तेन कथयेत्यर्थः ॥ **सुन्दरकवाक्ये** ॥ देव, कुशलं स्वामिनः शरीरमात्रकेणैव ॥ धौरेया अश्वाः । धुरं वहन्तीत्यर्थे 'धुरो यड्ढकौ' ( ४।४।७७ ) इति ढकि धौरेया

1 अत्र 'अये सुन्दरक' इत्यारभ्य 'अशेषतो विस्पष्टं कथ्यताम्' इत्यादिसंरब्धवचनेन तोटकाख्यं गर्भसन्ध्यङ्गम्; तल्लक्षणं यथा—'संरब्धवचनं यत्तु तोटकं तदुदाहृतम्' इति ।

पाठा०–१. '( उपसृत्य दृष्ट्वा च । )'. २. 'सूतः—( विलोक्य । ) आयुष्मन्, समरात्सुन्दरकः प्राप्तः' ३. 'सरीरमेत्तेण'. ४. 'राजा—( ससंभ्रमम् ) सुन्दरक, किं किरीटिनाऽस्य निहता धौरेयकाः'; 'राजा—किं तस्य किरीटिना हता धौरेयाः'.

सुन्दरकः—देव[1], ण भग्गो रहो। से मणोरहो। [देव, न भग्नो रथः। अस्य मनोरथः।]

दुर्योधनः—किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम्[2]?। तदलं संभ्रमेण[3]। अशेषतो विस्पष्टं कथ्यताम्।

सुन्दरकः—जं देवो आणवेदि। देवस्स मउडमणिप्पहावेण[4] अवणीदा मे रणप्पहारवेअणा (इति साटोपं परिक्रम्य।) सुणादु देवो। अत्थि दाणीं कुमालदुस्सासणवह–(इत्यर्धोक्ते मुखमाच्छाय[5] शङ्कां नाटयति।) [यद्देव आज्ञापयति। देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना। शृणोतु देवः। अस्तीदानीं कुमारदुःशासनवध–]

सूतः—सुन्दरक, कथय। कथितमेव दैवेन।

दुर्योधनः—कथ्यताम्। श्रुतमस्माभिः।

सुन्दरकः—(स्वगतम्[6]।) कधं दुस्सासणवहो सुदो देवेण?। (प्रकाशम्।) सुणादु देवो। अज्ज दाव कुमाल[7]दुस्सासणवहामरिसिदेण सामिणा अंगराएण किद[8]कुडिलभिउडीभंगभीसणललाडवट्टेण[9] अविण्णादसंधाणतीक्खमोक्खणिक्खित्तसरधारावरिसिणा[10] अभि-

---

इति साधु॥ सुन्दरकवाक्ये। देव, न हि रथो भग्नोऽस्यास्माकं स्वामिनो मनोरथः॥ यद्देव आज्ञापयति। अपनीय दूरीकृत्य। सुन्दरकवाक्ये। दिष्ट्या महाराजस्य मुकुटमहामणिप्रभावेणापगता मे बाणव्रणवेदना। शृणोतु देवः। शृणोतु सारथिश्च। अस्तीदानीं कुमारदुःशासनवध इति। श्रुतः स्वामिना दुःशासनवधः। 'अथ किं स्वीक्रियार्थकम्' इति भरतः॥ सुन्दरकवाक्ये। शृणोतु देवः। शृणोतु सार-

---

पाठा०—१. 'देव, ण भग्गो रहो। से मणोरहो वि'; 'देव, ण रहो भग्गो। से मणोरहो वि'; 'देव, ण भग्गो रहो। भग्गो से मणोरहो'; 'देव, ण भग्गो रहो, किं तु अम्हाणं सअलराअचक्कस्स मणोरहो'. २. 'दुर्योधनः—(सरोषम्) अरे, किमेवमस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि'; दुर्योधनः—'किमविस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि'; 'राजा—किमेवमस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि'. ३. 'तदलं संभ्रमेण। स्पष्टं कथय'; 'तदशेषतो विस्पष्टं कथ्यताम्'. ४. 'अप, देवस्स मउडमणिप्पहावेण'; 'देवस्स मउडमणिदंसणप्पहावेण'. ५. 'मुखमावृणोति'. ६. '(स्वगतम्।) कधं दुस्सासणवहो सुदो देवेण (प्रकाशम्।)' इति केषुचित्पुस्तकेषु नास्ति. ७. 'कुमाल' इति कचिन्नास्ति. ८. 'किद' इति कचिन्नास्ति. ९. 'णिडलवट्टेण'. 'णिडालवट्टेण'. १०. 'अविण्णादसंधाणमोक्खेण सिलीमुहसंघादवरिसिणा अभिजुत्तो सो दुराआरो मज्झमपंडवो भीमसेणहदओ'.

जुत्तो सो दुराआरो दुस्सासणवेरिओ मज्झमपंडवो । [ कथं दुःशासनवधः श्रुतो देवेन ? । शृणोतु देवः । अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कृतकुटिलभ्रुकुटीभङ्गभीषणललाटपट्टेनाविज्ञातसंधानतीक्ष्णमोक्षनिक्षिप्तशरधारावर्षिणाभियुक्तः स दुराचारो दुःशासनवैरी मध्यमपाण्डवः । ]

उभौ—ततस्ततः ? ।

सुन्दरकः—तदो देव, उहअबलमिलंतदीप्पंत[1]करितुरअपदादिसमुब्भूदलिणिअरेण[2] पल्लत्थगअघडासंघादेण[3] अ[4] वित्थरंतेण अंधआरेण अंधीकिदं उहअबलं । ण हु गगणतलं लक्खीअदि[5] । [ ततो देव, उभयबलमिलद्दीप्यमानकरितुरगपदातिसमुद्धूतधूलिनिकरेण पर्यस्तगजघटासंघातेन च विस्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलम् । न खलु गगनतलं लक्ष्यते । ]

उभौ—ततस्ततः ? ।

सुन्दरकः—तदो देव, दूराकट्टिअधणुग्गुणाच्छोडणटंकारेण[6] गंभीरभीसणेण जाणीअदि गज्जिदं पलअजलहरेण त्ति । [ ततो देव, दूराकृष्टधनुर्गुणाच्छोटनटङ्कारेण गम्भीरभीषणेन ज्ञायते गर्जितं प्रलयजलधरेणेति । ]

दुर्योधनः—ततस्ततः ? ।

---

यिश्च । अस्तीदानीं कुमारदुःशानवधामर्षितेन स्वामिनाङ्गराजेन कृतकुटिलभ्रुकुटीभङ्गभीषणेन ललाटपट्टेनाविज्ञातसंधानतीक्ष्णमोक्षनिक्षिप्तशरसंपातवर्षिणाभियुक्तोऽसौ दुराचारदुःशासनवैरी । अत्र संपात आसारः । दुराचारेत्यत्र द्वन्द्वसमासः ॥ **सुन्दरकवाक्ये** । ततो देव, उभयबलमिलद्दीप्यमानकरितुरगपदातिपदसमुद्धूतबहलधूलीनिकरेण पर्यस्तगजघटासंघातेनोत्थितेन घनान्धकारेणान्धीकृतमुभयबलम् । प्रनष्टं गगनाङ्गणम् । कुत्रापि किमपि न दृश्यते । ततो देव, दूराकृष्टधनुर्गुणास्फालनटंकारेण गम्भीरभीषणेन नभस्तलापूरिणा ज्ञायते गर्जितं प्रलयजलधरेणेति ॥

---

पाठा०—१. 'दीप्पंत' इति क्वचिन्नास्ति. २. 'णिवहेण'. ३. 'पल्लत्थतत्तद्दअघडा–'; 'पसत्थगअघडा–'. ४. 'विअ'. ५. 'ण भुवणतलं लक्खीअदि'. ६. 'धणुग्गुणच्छोटणटंकारगंभीरभीसणेन अंधआरेण जाणीअदि'; 'धणुग्गुणच्छोडणटंकारगंभीरभीसणेन भअआरिणा अंधआरेण जाणीअदि'.

**सुन्दरकः**—[1]तदो देव, दोह्णिं [2]वि ताणं अण्णोण्णसिंहणादगज्जिदपिसुणं विविहपरिमुक्कप्पहरणाहदकवअसंग[3]लिदजलणविज्जुच्छडाभासुरं गंभीरत्थणिअचापजलहरं प्पसरंतसरधारासहस्सवरिसं जादं समरदुद्दिणं । [ ततो देव, द्वयोरपि तयोरन्योन्यसिंहनादगर्जितपिशुनं विविधपरिमुक्तप्रहरणाहतकवचसंगलितज्वलनविद्युच्छटाभासुरं गम्भीरस्तनितचापजलधरं प्रसरच्छरधारासहस्रवर्षि जातं समरदुर्दिनम् । ]

**दुर्योधनः**—ततस्ततः ? ।

**सुन्दरकः**—[4]तदो देव, एदस्सिं अंतरे जेट्ठस्स भादुणो [5]परिभवसंकिणा धणंजएण [6]वज्जणिग्घादणिग्घोसविसमरसिदधअग्गट्ठिदमहावाणरो [7]तुरंगमसंवाहणवापिदवासुदेव[8]संखचक्कासिगदालंछिदचउव्वाहुदंडो आपूरिअपंचजण्णदेअदत्ततारसिदप्पडिरवभरिददसदिसामुहकुहरो धाविदो तं उद्देसं [9]रहवरो । [ ततो देव, एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः परिभवशङ्किना धनंजयेन वज्रनिर्घातनिर्घोषविषमरसितध्वजाग्रस्थितमहावानरस्तुरङ्गमसंवाहनव्यापृतवासुदेव-

---

ततो देव, द्वयेषामपि तेषां ( द्वयोरपि तयोः ? )अन्योन्यसिंहनादगर्जितपिशुनानां विविधप्ररूढप्रहरणाहतकवचसंगलितज्वलनविद्युच्छटाभास्वरं गम्भीरस्तनितचापजलधरं प्रसरच्छरधारासहस्रवर्षि जातं तत्समरदुर्दिनम् । अत्र पर्यस्त इतस्ततो गतः। आस्फालनेन यः टङ्कारस्तेन । सिंहनाद एव गर्जितं तस्य पिशुनानां सूचकानाम् । 'पिशुनौ खलसूचकौ' इत्यमरः । प्ररूढमुपचितम् । कवचं सन्नाहः । स्तनितं गर्जितम्। 'धारासंपात आसारः' इत्यमरः । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः ॥ **सुन्दरकवाक्ये** । ततो देव एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः परिभवशङ्किना धनंजयेन वज्रनिर्घातोद्घोषविषमरसितध्वजयष्टि(स्थि ?)तमहावानरस्तुरङ्गमसंवाहनाव्याकुलवासुदे-

---

पाठा०-१. 'तदो अ देव'. २. 'वि' इति क्वचिन्नास्ति. ३. 'संजलिदजलणविज्जुअंबहललुहिलबिंदुखज्जोअभासुरं गंभीरत्थणिअचापजलहरप्पसरिदसरधारासहस्सवरिसदुद्दंसणं संभूदं समरदुद्दिणं'; 'संजलिदजलणविज्जुल्लअं—'. ४. 'तदो अ देव'. ५. 'पराभवसंकिणा'. ६. 'वज्जणिग्घादणिग्घोसो विसमरसिदहरसिदहओ सिहरट्ठिदवाणरो'; 'वज्जणिग्घादणिग्घोसविसमरसिदरहसिदहओ सिहरट्ठिदवाणरो'. 'वज्जणिग्घादणिग्घोसविसमरहरसिदहओ सिहरट्ठिदवाणरो'. ७. 'तुरंगमधारणवावारिद–'. ८. 'संखचक्कगदासिलंछिदचडुलचउब्बाहुदंडदुद्दंसणो'. ९. 'रहो'.

शङ्खचक्रासिगदालाञ्छितचतुर्बाहुदण्ड आपूरितपाञ्चजन्यदेवदत्तता-
ररसितप्रतिरवभरितदशदिशामुखकुहरो धावितस्तमुद्देशं रथवरः । ]

**दुर्योधनः**—ततस्ततः ? ।

**सुन्दरकः**—तदो भीमसेणधणंजएहिं अभिजुत्तं पिदरं पेक्खिअ ससंभमं विअलिअं अवधूणिअ रअणसीसअं आकण्णाकड्ढिदकठिण-[1]कोदंडजीओ [2]दाहिणहत्तुक्खित्तसरपुंखविघट्टणतुवराइदसारहीओ तं देसं उवगदो कुमालविससेणो । [ ततो भीमसेनधनंजयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससंभ्रमं विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डजीवो दक्षिणहस्तोत्क्षिप्तशरपुङ्खविघट्टनत्वरायितसारथिकस्तं देशमुपगतः कुमारवृषसेनः । ]

**दुर्योधनः**—( सावष्टम्भम् । ) ततस्ततः ? ।

**सुन्दरकः**—तदो अ देव, तेण आअच्छंतेण एव्व कुमालविससेणेण वि[3]दलिदासिलदासामलसिणिद्धपुंखेहिं कठिणकंकवत्तेहिं किसणवण्णेहिं [4]सीणसिलाणिसिदसामलसल्लबंधेहिं कुसुमिदो विअ तरू मुहूत्तएण सिलीमुहेहिं पच्छादिदो धणंजअस्स रहवरो । [ ततश्च देव, तेनागच्छतैव कुमारवृषसेनेन विदलितासिलताश्यामलस्निग्ध-

---

वशङ्खचक्रासिगदालाञ्छितचतुर्बाहुदण्ड आपूरितपाञ्चजन्यदेवदत्ततारसितप्रतिरवोद्धरितदशदिङ्मुखकुहरः प्रापितस्तमेवोद्देशं धनंजयस्यैव रथवरः । अत्र वज्रस्य निर्घातवत् य उद्घोष उच्चैःशब्दस्तद्वद्विषमं रसितं यस्य स तथा । 'शङ्खो लक्ष्मीपतेः पाञ्चजन्यः' इत्यमरः । देवदत्तोऽर्जुनशङ्खः । तार उच्चः । भरितेति तारकादित्वादितच् ॥ **सुन्दरकवाक्ये** । ततो देव, भीमसेनधनंजयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससंभ्रमामुक्तविगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डजीवो दक्षिणहस्तनिक्षिप्तशरपुङ्खविघट्टनात्वरितसारथिस्तमेवोद्देशमुपगतः कुमारवृषसेनः । अत्रामुक्तः परिहितः । शीर्षकं 'टोप्पर' इति ख्यातम् । 'शीर्षकम् । शीर्षण्यं च शिरस्त्रे' इत्यमरः । जीवा पतञ्चिका ॥ **सुन्दरकवाक्ये** । ततो देव, स्वागतेनैव कुमारवृषसेनेन महदाश्चर्यं कृतम् । वैडूर्यशिलाश्यामलसुस्निग्धशल्यबन्धैः कठिनकङ्कपक्षकृष्णाननैः शिलानिशितमांसलोज्ज्वलैर्यथा कुसुमितस्तरुवरः शिलीमुखैस्तथा प्रच्छादितो धनंजयस्य रथवरः । अत्र वैडूर्यशिला मणिविशेषः ।

---

**पाठा०**–१. 'कोदंडमंडलो'. २. 'दाहिणहत्थविक्खित्तसरपुंखबंधणो विघट्टणतुवराइदसारहीओ'. ३. 'विदलिदसिहासामल–'. ४. 'सिलाणिसिद–'.

पुङ्खैः कठिनकङ्कपत्रैः कृष्णवर्णैः शाणशिलानिशितश्यामलशल्य-बन्धैः कुसुमित इव तरुर्मुहूर्तेन शिलीमुखैः प्रच्छादितो धनंजयस्य रथवरः ।]

उभौ—(सहर्षम्।) ततस्ततः ?।

सुन्दरकः—तदो देव, तिक्खविक्खित्तणिसिदभल्लबाणवरिसिणा धणंजएण ईसि विहसिअ भणिदं—'अरे रे विससेण, पिदुणो वि दाव दे ण जुत्तं मह कुविदस्स अभिमुहं ठादुं । किं उण भवदो बालस्स ?। ता गच्छ। अवरेहिं कुमारेहिं सह गदुअ आओधेहि।' एव्वं वाअं णिसमिअ गुरुअणाहिक्खेवेण उद्दीविअकोवोपरत्तमुह-मंडलविअंभिअभिउडीभंगभीसणेण चावधारिणा कुमालविससेणेण मम्मभेदएहिं परुसविसमेहिं सुदिवहकिदप्पणएहिं णिब्भच्छिदो गंडीवी बाणेहिं ण उण दुट्ठवअणेहिं । [ततो देव, तीक्ष्णविक्षिप्त-निशितभल्लबाणवर्षिणा धनंजयेनेषद्विहस्य भणितम्—'अरे रे वृष-सेन, पितुरपि तावत्ते न युक्तं मम कुपितस्याभिमुखं स्थातुम् । किं पुनर्भवतो बालस्य ?। तद्गच्छ। अपरैः कुमारैः सह गत्वायुध्यस्व।' एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलवि-जृम्भितभ्रुकुटीभङ्गभीषणेन चापधारिणा कुमारवृषसेनेन मर्मभेदकैः परुषविषमैः सुदिवसकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्ट-वचनैः ।]

---

शल्यबन्धो बाणभेदः । कङ्कः 'कङ्कारी' इति प्रसिद्धः पक्षी । शिलायां यन्निशितं निघर्षणं तेन मांसलैः स्निग्धैरत एवोज्ज्वलितैः । 'शिलीमुखौ बाणभृङ्गौ' इत्यमरः ॥ सुन्दरकवाक्ये । ततो देव, तीक्ष्णमोक्षनिक्षिप्तनिशितशरसंपाताभिघातजात-मन्युना धनंजयेनेषद्विहस्य भणितम्—'अरे रे वृषसेन, पितुरपि तावन्न ते युक्तं मम परिकुपितस्य पुरतः स्थातुम् । किं पुनर्भवतो बालकस्य ?। तद्गच्छ रे गच्छ । अपरैः कुमारकैः सह गत्वायोधय' इति । एवं वाचं निशम्य गुरुजनाधिक्षेपजनितकोपोपर-क्तमुखमण्डलभ्रुकुटीविजृम्भितनेपथ्यधारिणा कुमारवृषसेनेन मर्मभेदकैः सुतव-धकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्टवचनैः । अत्र विजृम्भितं कृतम् ।

---

पाठा०—१. 'कुविदस्स' इति क्वचिन्नास्ति. २. 'सह गदुअ' इति क्वचिन्नास्ति. ३. 'कुमालविससेणेण वि'. ४. 'सुदवहकिदप्पणएहिं'; 'सुदिपधकिदप्पणएहिं'. ५. 'दुव्वअणेहिं'.

**दुर्योधनः**—साधु वृषसेन, साधु । सुन्दरक, ततस्ततः ? ।

**सुन्दरकः**—[2]तदो देव, [3]णिसिदसराभिघादवेअणोपजादमण्णुणा किरीटिणा[4] चंडगंडीवजीआसद्दणिज्जिदवज्जणिग्घादघोसेण बाणणिपडणपडिसिद्धदंसणप्पसरेण पत्थुदं सिक्खाबलाणुरूवं किं वि अच्चरीअं । [ ततो देव, निशितशराभिघातवेदनोपजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् । ]

**दुर्योधनः**—( साकूतम् । ) ततस्ततः ? ।

**सुन्दरकः**—[5]तदो देव, [6]तं तारिसं पेक्खिअ सत्तुणो समरव्वावारचउरत्तणं अविभाविअतूणीरमुहधणुग्गुणगमणागमणसरसंधाणमोक्खचडुलकरअलेण[7] कुमालविससेणेण वि सविसेसं पत्थुदं समलकम्म । [ ततो देव, तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणीरमुखधनुर्गुणगमनागमनशरसंधानमोक्षचटुलकरतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म । ]

**दुर्योधनः**—ततस्ततः ? ।

---

सुतवधेऽर्जुनसुतस्याभिमन्योर्वधे । निर्भर्त्सितो धर्षितः ॥ **सुन्दरकवाक्ये** । ततो देव, निशितशराभिघातजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दविनिर्जितवज्रनिर्घातघोषेणाविज्ञातबाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् । अत्र प्रस्तुतं कृतम् । शिक्षा अस्त्राभ्यासः ॥ **सुन्दरकवाक्ये** । ततो देव, तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणीरमुखधनुर्गुणगमनागमनशरसंधानतीक्ष्णमोक्षचटुलकरतलेन कुमारवृषसेनेन सविशेषं प्रस्तुतः समरकर्मान्तः । अत्राविभावितोऽप्रकाशितः । तूणीरं 'तोन' इति ख्यातम् । चटुलं मनोज्ञं कुशलं वा । प्रस्तुत आरब्धः । आरम्भः उपक्रमः । 'समरकर्मान्तः'

---

पाठा०—१. 'सुन्दरक' इति क्वचिन्नास्ति. २. 'तदो अ देव'. ३. 'सिदसराभिघाद–'. ४. 'गंडीविणा'. ५. 'तदो अ देव'. ६. 'तं पेक्खिअ तस्स सत्तुणो समरव्वावारचउरत्तणं'; 'तं अ तारिसं समरव्वावारचउरत्तणं पेक्खिअ'. ७. 'तूणीमुहधणुग्गुणगमणासणसंधाणमोक्खचडुलकरअलेण'; 'तूणीरमुहधणुग्गुणगमणासणसरसंधाणचडुलकरअलेण'; तूणीरमुहधणुग्गुणगमणागमणसंधाणमोक्खचडुलकरअलेण'; 'तूणीरमुहधणुग्गुणगमणागमणबाणसंधाणमोक्खचडुलकरअलेण'.

**सुन्दरकः**—तदो[1] देव, एत्थंतरे विमुक्कसमरव्वावारो मुहुत्तवि[2]स्सामिदवेराणुवंधो दोणं वि कुरुराअपंडवबलाणं[3] 'साहु कुमालविससेण, साहु' त्ति किदकलअलो वीरलोओ अवलोइदुं पउत्तो। [ ततो देव, अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्रामितवैरानुबन्धो द्वयोरपि कुरुराजपाण्डवबलयोः 'साधु कुमारवृषसेन, साधु' इति कृतकलकलो वीरलोकोऽवलोकयितुं प्रवृत्तः । ]

**दुर्योधनः**—( सविस्मयम् । ) ततस्ततः ? ।

**सुन्दरकः**—तदो अ देव, अवहीरिदसअलराअधाणुक्कचक्क[4]पराक्कमसालिणो सुदस्स तहाविहेण समलकम्मालंभेण हरिसरोस[5]करुणासंकडे वट्टमाणस्स[6] सामिणो अंगराअस्स णिवडिआ सरपद्धइ भीमसेणे वाप्पपज्जाउला[7] दिट्ठी कुमालविससेणे । [ ततश्च देव, अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारम्भेण हर्षरोषकरुणासंकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने । ]

**दुर्योधनः**—( सभयम् । ) ततस्ततः ? ।

---

इति पाठे समर एव कर्मान्तः 'कीमत' इति प्रसिद्धः ॥ **सुन्दरकवाक्ये** । ततो देव, अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्रामितवैरानुबन्धो द्वयोरपि तयोः कुरुपाण्डवराजबलयोः 'साधु कुमारवृषसेन, साधु' इति कृतकलकलो वीरलोकोऽवलोकितुं प्रवृत्तः। अत्र विश्रामित उपशान्तः ॥ **सुन्दरकवाक्ये** । ततो देव, अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधसमरकर्मारम्भेण हर्षरोषकरुणसंकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने। अत्र धानुष्को धनुर्धरः । धनुः प्रहरणमस्येत्यर्थे 'प्राग्वहतेष्ठक्' ( ४।४।१ ) इति ठक्प्रत्ययः । सुतविक्रमदर्शनेन हर्षः, शत्रुदर्शनेन

---

पाठा०—१. 'तदो अ देव, परिसेसिदरणव्वावारेसु विमुक्कचिरणिघडिअवेराणुबंधेसु कुरुराअपंडवबलेसु साहु विससेण, साहु त्ति कलअलमुहरो वीरलोओ आलोइदुं पउत्तो'; 'तदो अ देव, परिसेसिदरणव्वावारो विमुक्कचिरणिव्वट्टिअवेराणुबंधो दोणं वि कुरुराअपंडवबलेसु साहु विससेण, साहु त्ति कलअलमुहरो वीरलोओ आलोइदुं पउत्तो'. २. 'सुपरिचत्तचिरआलसंवड्ढिदवेराणुबंधो'. ३. 'कुरुपंडवाणं हि'. ४. 'अवहीरिदसअलधाणुक्कचक्क–'. ५. 'करुणहरिसरोससंकडे'; 'हरिसरोसकरुणासंकासंकडे'. ६. 'अणुवट्टमाणस्स'. ७. 'बाप्पआउला'.

सुन्दरकः—तदो अ देव, उभअबलप्पउत्तसाहुकारामरिसिदेण गंडीविणा तुरगेसु सारहिं पि रहवरे धणुं पि जीआइं पि णलिंद-लंछणे सिदादवत्ते अ व्वावारिदो समं सिलीमुहासारो । [ ततश्च देव, उभयबलप्रवृत्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि जीवायामपि नरेन्द्रलाञ्छने सितातपत्रे च व्यापारितः समं शिलीमुखासारः । ]

दुर्योधनः—( सभयम् । ) ततस्ततः ? ।

सुन्दरकः—तदो देव, विरहो लूणगुणकोदंडो परिब्भमणमेत्त-व्वावारो मंडलग्गेण विअरिदुं पउत्तो कुमालविससेणो । [ ततो देव, विरथो लूनगुणकोदण्डः परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचरितुं प्रवृत्तः कुमारवृषसेनः । ]

दुर्योधनः—( साशङ्कम् । ) ततस्ततः ? ।

सुन्दरकः—तदो देव, सुदरहविंद्धंसणामरिसिदेण सामिणा अंगराएण अगणिअभीमसेणाभिजोएण पडिमुक्को धणंजअस्स उवरि सिलीमुहासारो । कुमालो वि परिजणोवणीदं अण्णं रहं आरुहिअ

---

रोषः, बालस्य महाबलेन युद्धात् करुणमिति रसत्रयमत्र । पद्धतिः पङ्क्तिः ॥ **सुन्दरकवाक्ये** । ततो देव, उभयबलविमुक्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथौ रथवरे धनुषि जीवायां नरेन्द्रकुललाञ्छने सितातपत्रे समं व्यापारितः शिलीमुखासारः । अत्र लाञ्छने चिह्ने । सितातपत्रे श्वेतच्छत्रे । सममेकदैव ॥ **सुन्दरकवाक्ये** । ततो देव, अत्रान्तरे विरथः कुमारवृषसेनो लूनगुणकोदण्डः परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचरितुं प्रवृत्तः । अत्र मण्डलाग्रेण खड्गेन । सहार्थे तृतीया । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः ॥ **सुन्दरकवाक्ये** । ततो देव, स्वामिना सुतरथविध्वंसनामर्षितेनागणितभीमसेनाभि-

---

पाठा०–१. 'साहुकारामरिसिदेण सरवरिसपज्जलिदेण गंडीविणा'. २. 'सिदादवत्ते व्वावारिदा समं सिलीमुहा'. ३. 'लूणगुणकोदंडमेत्तपरिब्भमणव्वावारप्पडिसिद्धसरसंपादो मंडलेहिं विअरिदुं पउत्तो कुमालो'; 'लूणगुणकोदंडो परिब्भमणमेत्तव्वावारप्पडिसिद्धसरसंपादो मंडलाईं विरइदुं पउत्तो कुमालो'; 'लूणगुणकोदंडो परिब्भमणव्वावारमेत्तप्पडिसिद्धसरसंपादो मंडलाइं विरचइदुं पउत्तो कुमालो'. ४. 'दुर्योधनः—अहो, बालस्य पराक्रमो मूढता च । उभौ—ततस्ततः'. ५. 'विद्धंसणामरिसुदीविदेण'. ६. 'पल्लत्थो'. ७. 'कुमालविससेणो'.

पुणो वि पउत्तो धणंजएण सह आओधेदुं । [ ततो देव, सुतरथविध्वंसनामर्षितेन स्वामिनाङ्गराजेनागणितभीमसेनाभियोगेन परिमुक्तो धनंजयस्योपरि शिलीमुखासारः । कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनंजयेन सहायोधितुम् । ]

उभौ[2]—साधु वृषसेन, साधु । ततस्ततः ? ।

सुन्दरकः—तदो देव, भणिदं च कुमालेण—'रे रे तादाहिक्खेवमुहल मज्झमपंडव, मह सरा तुह सरीरं उंज्झिअ[3] अण्णस्सिं ण णिवडंति' त्ति भणिअ[4] सरसहस्सेहिं पंडवसरीरं पच्छादिअ सिंहणादेण गज्जिदुं पउत्तो । [ ततो देव, भणितं च कुमारेण—'रे रे ताताधिक्षेपमुखर मध्यमपाण्डव, मम शरास्तव शरीरमुज्झित्वान्यस्मिन्न निपतन्ति' इति भणित्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः । ]

दुर्योधनः—( सविस्मयम् । ) अहो बालस्य पराक्रमो मुग्धस्वभावेऽपि[5] ! । ततस्ततः ? ।

सुन्दरकः—तदो अ देव, [6]तं सरसंपादं समवधूणिअ [7]णिसिदसराभिघादजादमण्णुणा किरीटिणा गहिदा रहुच्छंगादो कणंतकणअकिंकिणीजालझंकारविराइणी मेहोवरोहविमुक्कणहत्थलणिम्मला

---

योगेन परिमुक्तो धनंजयस्योपरि शिलीमुखासारः । कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनंजयेन सहायोधितुम् । अत्रायोधितुं युद्धं कर्तुम् ॥ **सुन्दरकवाक्ये** । ततो देव, भणितं च कुमारवृषसेनेन—'अरे रे ताताधिक्षेपकारकमुखर मध्यमपाण्डव, न मम शरासारास्तव शरीरमुज्झित्वान्यस्मिन्निपतन्ति' इति भणित्वा शरशतसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादं विचरितुं प्रवृत्तम् । अत्र प्रच्छाद्य व्याप्य । विचरितुं कर्तुम् । प्रवृत्तं वृषसेनेनेति शेषः ॥ **सुन्दरकवाक्ये** । ततो देव, तं शरसंपातं समवधूय निशितशराभिघातजातमन्युना किरी-

---

पाठा०-१. 'धणंजआभिजोए'. २. 'उभौ—साधु वृषसेन' इत्यस्मादारभ्य 'सुन्दरकः—तदो देव' इत्यन्तं बहुषु पुस्तकेषु नास्ति. ३. 'वज्जिअ'. ४. 'भणंतेण सरसहस्सेहिं पंडवसरीरं पच्छादिदं कुमालेण ।'. ५. 'मुग्धस्वभावस्यापि'; 'मुग्धस्वभावोऽपि'. ६. 'तस्स सरसहस्ससंपादं समवधूणिअ'; 'तस्स सरसहस्ससंपादं अवधुणिअ'. ७. 'णिसिदसराभिघादजादमण्णुणा' इति क्वचिन्नास्ति.

णिसिदसामलसिणिद्धमुही विविहरअणप्पहाभासुरभीसणरमणिज्जदंसणा सत्ती विमुक्का कुमालाहिमुही[1] । [ततश्च देव, तं शरसंपातं समवधूय निशितशराभिघातजातमन्युना किरीटिना गृहीता रथोत्सङ्गात्क्वणत्कनककिङ्किणीजालझङ्कारविराविणी मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिर्विमुक्ता कुमाराभिमुखी ।]

दुर्योधनः[2]—(सविषादम् ।) अहह! । ततस्ततः ? ।

सुन्दरकः—तदो देव, पज्जलंतीं सत्तिं पेक्खिअ विअलिअं अंगराअस्स हत्थादो ससरं[3] धणु हिअआदो वीरसुलहो उच्छाहो णअणादो[4] बाप्पसलिलं पि । रसिदं अ सिंहणादं विओदलेण । 'दुक्कलं दुक्कलं' त्ति आक्कंदिदं कुरुबलेण । [ततो देव, प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशरं धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद्बाष्पसलिलमपि । रसितं च सिंहनादं वृकोदरेण । 'दुष्करं दुष्करम्' इत्याक्रन्दितं कुरुबलेन ।]

दुर्योधनः—(सविषादम् ।) ततस्ततः ? ।

सुन्दरकः—तदो देव, कुमालविससेणेण आकण्णपूरिदेहिं णिसिदखुरप्पबाणेहिं चिरं णिज्झइअ अद्धपहे[5] एव्व भाईरही विअ आअ-

टिना गृहीता रथोत्सङ्गात्क्वणत्कनककिङ्किणीजालहुंकारराविणी महामेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाघटितशीर्षभीषणरमणीयदर्शना महाशक्तिर्विमुक्ता कुमाराभिमुखी । अत्र क्वणच्छब्दायमानम् । भीषणता विचित्ररूपतया । रमणीयता स्वभावादेव ॥ **सुन्दरकवाक्ये** । ततो देव, तां तादृशीं प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशरं धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद्बाष्पसलिलं च । रसितं च सिंहनादं वृकोदरेण । दुष्करं दुष्करमिति कृत्वाक्रन्दितं कुरुबलेन । अत्र रसितं शब्दितम् । सिंहस्येव नादं यथा स्यात्तथा ॥ **सुन्दरकवाक्ये** । ततो देव, कुमारेणाकर्णापूरितैर्निशितक्षुरप्रबाणैर्दूरं

पाठा०-१. 'सत्ती सोवहासं विमुक्का अ धणंजएण कुमालाहिमुहं'. २. 'दुर्योधनः—(सविषादम्) अहह'; 'दुर्योधनः—(सविषादम् ।) ततस्ततः' ३. 'सबाणं'. ४. 'णअणादो बाप्पसलिलं वअणादो रसिदं । हसिदं अ धणंजएण सिंहणादं विणादिदं विओदलेण अ'. ५. 'आकण्णाकिट्ठणिसिदखुरप्पेण सुचिरं णिज्झइअ अद्धपहे एव्व भाइरही विअ भअवदा विसमलोअणेण तिधा किदा सत्ती'.

च्छंती जधा भअवदा विसमलोअणेण तधा तिधा किदा सत्ती। [ तदो देव, कुमारवृषसेनेनाकर्णपूरितैर्निशितक्षुरप्रबाणैश्चिरं निर्धार्यार्धपथ एव भागीरथीवागच्छन्ती यथा भगवता विषमलोचनेन तथा त्रिधा कृता शक्तिः । ]

दुर्योधनः—साधु वृषसेन, साधु । ततस्ततः ? ।

सुन्दरकः—तदो अ देव, एदस्सिं अंतरे कलमुहरेण[1] वीरलोअसाहुवादेण अंतरिदो समरतूरणिग्घोसो[2] । सिद्धचालणगणविमुक्कुसुमप्पअरेण[3] पच्छादिदं समलांगणं[4] । भणिअं अ सामिणा अंगराएण—'भो वीर विकोदल, असमत्तो तुह मह वि समलव्वावारो । ता अणुमण्ण[5] मं मुहुत्तअं । पेक्खामहे दाव[6] वस्सस्स तुह भादुणो अ धणुव्वेदसिक्खाचउरत्तणं । तुह[7] वि एदं पेक्खणिज्जं' त्ति । [ ततश्च देव, एतस्मिन्नन्तरे कलमुखरेण वीरलोकसाधुवादेनान्तरितः समरतूर्यनिर्घोषः । सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादितं समराङ्गणम् । भणितं च स्वामिनाङ्गराजेन—'भो वीर वृकोदर, असमाप्तस्तव ममापि समरव्यापारः । तदनुमन्यस्व मां मुहूर्तम् । प्रेक्षावहे तावद्वत्सस्य तव भ्रातुश्च धनुर्वेदशिक्षाचतुरत्वम् । तवाप्येतत्प्रेक्षणीयम्' इति । ]

---

निर्ध्यालाऽर्धपथ एवागच्छन्ती भागीरथी भगवता विषमलोचनेनेव त्रिधा कृता शक्तिः । अत्र निर्ध्याला विचिन्त्य । भागीरथी गङ्गा । विषमलोचनेन हरेण । गङ्गापि हरेण त्रिपथगा कृतेति भावः ॥ **सुन्दरकवाक्ये** । ततो देव, एतस्मिन्नन्तरे कलमुखरेण वीरसाधुवादेनान्तरितः समरतूर्यनिर्घोषः । सिद्धचारणगणप्रमुक्तकुसुमप्रकरेण संच्छादितं समराङ्गणम् । भणितं च स्वामिनाङ्गराजेन—'भो

---

पाठा०—१. 'किदकलकलमुहरेण'. २. 'समरतूररवो'. ३. 'विमुक्केण कुसुमप्पअरेण'. ४. 'समलांगणं' । 'दुर्योधनः—अहो, बालस्य पराक्रमः । ततस्ततः । सुन्दरकः—तदो अ देव, भणिअं सामिणा अंगराएण, भो विकोदल'. ५. 'अणुमण्णदु'. ६. 'दाव क्खणमेत्तं वस्सस्स तुह भादुणो धनुव्वेदसिक्खाणिउणत्तणं'. ७. 'तुह वि एदं पेक्खणिज्जं त्ति । तदो विरदाओ रणव्वावारणिव्वंधादो मुहूत्तअं प्पसमिदवेरा जादा दुवे वि अ पेक्खआ भीमसेणांगराआ'; 'तुह वि एदं पेक्खणिज्जं त्ति। तदो विरमिदरणव्वावारा मुहुत्तविस्सामिदनिअवेरा जादा मुहुत्तं दुवे पेक्खआ भीमसेणांगराआ'.

**दुर्योधनः**—ततस्ततः ? ।

**सुन्दरकः**—तदो देव, विस्समिदाओधणव्वावारा मुहुत्तविस्समिदणिअवेराणुबंधा दुवे वि पेक्खआ जादा भीमसेणांगराआ । [ ततो देव, विश्रामितायोधनव्यापारौ मुहूर्तविश्रमितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ । ]

**दुर्योधनः**—( [1]साभिप्रायम् । ) ततस्ततः ? ।

**सुन्दरकः**—[2]तदो अ देव, सत्तिखंडणामरिसिदेण गंडीविणा भणिअं—'अरे रे दुज्जोहणप्पमुहा–( इत्यर्धोक्ते [3]लज्जां नाटयति । ) [ ततश्च देव, शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—'अरे रे दुर्योधनप्रमुखाः,— ]

**दुर्योधनः**—सुन्दरक, कथ्यताम् । [4]परवचनमेतत् ।

**सुन्दरकः**—सुणादु देवो । 'अरे दुज्जोहणप्पमुहा कुरुबलसेणापहुणो, [5]अविणअणोकण्णधार कण्ण, तुम्हेहिं [6]मह परोक्खं बहुहिं महारहेहिं पडिवारिअ एआइ मम पुत्तओ अहिमण्णु व्वावादिदो। अहं उण तुम्हाणं पेक्खंताणं [7]एव्व एदं कुमालविससेणं [8]सुमरिदव्वसेसं करोमि' त्ति भणिअ सगव्वं आप्फालिदं णेण [9]वज्जणिग्घादघोसभीसणजीआरवं गंडीवं । सामिणा वि सज्जीकिदं कालपुट्ठं । [ शृणोतु देवः । 'अरे दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः, अवि-

---

वीर वृकोदर, असमाप्त एव तव मम समरव्यापारः । तदनुमन्यस्व क्षणमात्रमेव । प्रेक्षावस्तावत्तव भ्रात्रा समं मम पुत्रस्य धनुर्वेदशिक्षाचतुरत्वम् । तवाप्येतत्प्रेक्षणीयम्' इति ॥ **सुन्दरकवाक्ये** । ततो देव, विश्रमितायोधनव्यापारौ मुहूर्तविश्रमितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ । अत्र विश्रमित उपशान्तः । प्रेक्षको द्रष्टा ॥ **सुन्दरकवाक्ये** । ततो देव, शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—'अरे रे दुर्योधनप्रमुखाः कुरुयोधाः, अविनयनौकर्णधार

---

पाठा०–१. '( साभिप्रायम् । )' इति क्वचिन्नास्ति. २. 'तदो अ देव, पदरिंस अंतरे सत्तिखंडणामरिसिदेण गंडीविणा एव्वं भणिअं'. ३. 'भयं'. ४. 'परवचनमत्र को दोषः'. ५. 'अरे अविणअणईकण्णधार कण्ण'. ६. 'मह परोक्खं एआइ पुत्तओ अहिमण्णु व्वावादिदो'. ७. 'एव्व' इति क्वचिन्नास्ति. ८. 'सुमरिदव्वमेत्तसेसं'. ९. 'णिग्घादघोसभीसणजीआरवं'.

नयनौकर्णधार कर्ण, युष्माभिर्मम परोक्षं बहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादितः। अहं पुनर्युष्माकं प्रेक्षमाणानामेवैतं कुमारवृषसेनं स्मर्तव्यशेषं करोमि' इति भणित्वा सगर्वमास्फालितमनेन वज्रनिर्घातघोषभीषणजीवारवं गाण्डीवम्। स्वामिनापि सज्जीकृतं कालपृष्ठम्।]

दुर्योधनः—(सावहित्थम्।) ततस्ततः ?।

सुन्दरकः—तदो अ देव, पडिसिद्धभीमसेणसमलकम्मालंभेण गंडीविणा विरइदा अंगराअविससेणरहकूलंकसाओ दुवे बाणणदीओ। तेहिं वि दुवेहिं अण्णोण्णदंसिदसिक्खाविसेसेहिं अभिजुत्तो सो दुराआरो मज्झमपंडवो। [ततश्च देव, प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचिते अङ्गराजवृषसेनरथकूलंकषे द्वे बाणनद्यौ। ताभ्यामपि द्वाभ्यामन्योन्यदर्शितशिक्षाविशेषाभ्यामभियुक्तः स दुराचारो मध्यमपाण्डवः।]

दुर्योधनः—ततस्ततः ?।

सुन्दरकः—तदो अ देव, गंडीविणा ताररसिदजीआणिग्घोसमेत्तविण्णादबाणवरिसेण तह आअरिदं पत्तिहिं जह ण णहत्तलं ण सामी ण रहो ण धरणी ण कुमालो ण केदुवंसो ण बलाइं ण

कर्ण, युष्माभिर्बहुभिर्महारथैर्मिलित्वा मया शून्ये मम पुत्रोऽभिमन्युर्बाल एकाकी व्यापादितः। अहं पुनर्युष्माकं प्रेक्षकाणामेवैतं कुमारं वृषसेनं स्मर्तव्यशेषं करोमि। तद्ध्रियतां ध्रियताम्' इत्यास्फालितं तेन वज्रनिर्घातोद्घोषगम्भीरभीषणजीवारवं गाण्डीवम्। स्वामिनापि सज्जीकृतं कालपृष्ठम्। अत्राविनय एव नौरिति रूपकम्। प्रेक्षकाणामित्यनादरे षष्ठी। तेन भवतः प्रेक्षकाननादृत्येत्यर्थः। स्मर्तव्यः स्मरणार्हः शेषोऽवसानं यस्य तम्। तथा च स्मरणमात्रावशिष्टमित्यर्थः॥ **सुन्दरकवाक्ये।** ततो देव, प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचितेऽङ्गराजवृषसेनरथकूलंकषे द्वे बाणनद्यौ। ताभ्यां द्वाभ्यामप्यन्योन्यदर्शितशिक्षाविशेषाभ्यामभियुक्तः स दुराचारमध्यमपाण्डवः। अत्र कूलं कषतीत्यर्थे 'सर्वकूलाभ्रकरीषेषु कषः' (३।२।४२) इति खच्प्रत्ययः। 'खित्यनव्ययस्य' (६।३।६६) इति

पाठा०-१. '(सावहित्थम्।)' इति क्वचिन्नास्ति. २. 'तदो अ देव, एदस्सिं अंतरे पडिसिद्धभीमसेणसमलकम्मालंभेण'. ३. 'अण्णोण्णसिणेहदंसिद-'. ४. 'सो दुराआरो' इति क्वचिन्नास्ति. ५. 'गंडीवताररसिदमंगलगोधाणिग्घोसदुव्विण्णादबाणवरिसेण'.

सारही ण तुलंगमा ण दिसाओ ण वीरलोओ अ लेक्खीअदि। [ ततश्च देव, गाण्डीविना ताररसितज्यानिर्घोषमात्रविज्ञातबाणवर्षेण तथाऽऽचरितं पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न बलानि न सारथिर्न तुरङ्गमा न दिशो न वीरलोकश्च लक्ष्यते । ]

**दुर्योधनः**—( सविस्मयम् । ) ततस्ततः ? ।

**सुन्दरकः**—तदो[3] अ देव, अदिक्कंते सरवरिसे क्खणमेत्तं ससिंहणादे पंडवबले विमुक्काक्कंदे कोरवबले उत्थिदो महंतो कलअलो 'हा हदो कुमालविससेणो हा हदो' त्ति । [ ततश्च देव, अतिक्रान्ते शरवर्षे क्षणमात्रं ससिंहनादे पाण्डवबले विमुक्ताक्रन्दे कौरवबल उत्थितो महान्कलकलो हा हतः कुमारवृषसेनो हा हत इति । ]

**दुर्योधनः**—( सबाष्परोधम् । ) ततस्ततः ? ।

**सुन्दरकः**—तदो[6] देव, महंतीए वेलाए पेक्खिअ हदसारहितुलंगं लूणादवत्तकेदुवंसं सग्गप्पब्भट्टं विअ सुलकुमालं एक्केण ज्जेव

---

मुम् ॥ **सुन्दरकवाक्ये**। ततो देव, गाण्डीवताररसितमांसलनिर्घोषेणाविज्ञातबाणवर्षेण तथाचरितं पार्थेन यथा न नभस्तलं न दिशो न धरणी न स्वामी न तेषां रथो न सारथिर्न कुमारो न खलु किमपि लक्ष्यते ॥ **सुन्दरकवाक्ये**। ततो देव, अतिक्रान्ते शरवर्षे पाण्डवबले विमुक्तसिंहनादे साक्रन्दे कौरवबले हा हतः कुमारो वृषसेनो हा हत इति महान्कलकल उत्थितः ॥ **सुन्दरकवाक्ये**। ततो देव, महत्या वेलयाहं प्रेक्ष्य हतसारथितुरङ्गमं लूनातपत्रकेतुवंशं स्वर्गपरि-

---

पाठा०—१. 'तुलंगमो'. २. 'संलक्खीअदि'. ३. 'तदो अ देव, क्खणमेत्त एव्व अदिक्कंते सरसंपादे सहरिससिंहणादे पंडवसेण्णे सविसादविमुक्काक्कंदे कोरवबले समुत्थिदो'. ४. 'हा हदो कुमालविससेणो त्ति'. ५. '( सबाष्परोषम् । )'. ६. 'तदो अ देव, पेक्खामि कुमालं हदसारहितुलंगं लूणादवत्तचावचामरकेदुवंसं सग्गब्भट्टं विअ सुलकुमालं हिअअमम्मभेदिणा एक्केण सिलीमुहेण भिण्णदेहं रहमज्झे पल्लत्थं ।'; 'तदो अ देव, कुमालं हदसारहितुलंगं लूणादवत्तचामरकेदुवंसं सग्गप्पब्भट्टं विअ सुलकुमालं हिअअमम्मभेदिणा एक्केण सिलीमुहेण भिण्णदेहं रहमज्झे पल्लत्थं पेक्खिअ अहं आअदो ।'; 'तदो देव, महंतीए वेलाए पेक्खामि कुमारं हदसारधिं हदतुरंगं लूणादवत्तरं संसग्गपरिब्भट्टं विअ सुकुमारअं एक्केण ज्जेव मम्ममेदिणा सिलीमुहेण हिअए विभिण्णं रहोत्संगादो धराअले लुडितं ।'.

मम्मभेदिणा सिलीमुहेण भिण्णदेहं रहमज्झे परिट्ठिदं कुमालं आअदो । [ ततो देव, महत्या वेलया प्रेक्ष्य हतसारथितुरङ्गं लूनातपत्रकेतुवंशं स्वर्गप्रभ्रष्टमिव सुरकुमारमेकेनैव मर्मभेदिना शिलीमुखेन भिन्नदेहं रथमध्ये परिस्थितं कुमारमागतः । ]

दुर्योधनः—( सास्रम् । ) अहह कुमारवृषसेन ! । अलमतः परं श्रुत्वा । हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलप्ररोह, हा प्रियदर्शन, हा दुःशासननिर्विशेष, हा सर्वगुरुवत्सल, प्रयच्छ मे प्रतिवचनम् ।

पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-
मुद्भिद्यमाननवयौवनरम्यशोभम् ।
प्राणापहारपरिवर्तितदृष्टि दृष्टं
कर्णेन तत्कथमिवाननपङ्कजं ते ॥ १० ॥

सूतः—आयुष्मन, अलमत्यन्तदुःखावेगेन ।

दुर्योधनः—सूत, पुण्यवन्तो हि दुःखभाजो भवन्ति । अस्माकं पुनः,—

---

भ्रष्टमिव सुरकुमारकमेकेनैव मर्ममेदिना बाणेन भिन्नदेहं रथमध्ये परिस्थितं कुमारमागतः । अत्र केतुश्चिह्नम् । कुमारं प्रेक्ष्याहमागत इत्यन्वयः । प्ररोहोऽङ्कुरः । पर्याप्तेति । पर्याप्तं तृप्तं यथेष्टं वा नेत्रं यत्र तत्तथा । 'पर्याप्तं तु यथेष्टं स्यात्तृप्तौ शक्तिनिवारणे' इति विश्वः । अचिरोदितचन्द्रवत्कान्तं रम्यम् । उद्भिद्यमानमुद्गच्छत् । एतादृशमप्याननं तव प्राणापहारे विनाशे परिवर्तितदृष्टि

---

पाठा०–१. 'दुर्योधनः–( सास्रम् ) अहह कुमारवृषसेन । अलमतः परं श्रुत्वा । हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा मदाज्ञाकर, हा गदायुद्धप्रिय शिष्य, हा शौर्यसागर, हा राधेयकुलप्ररोह'; 'राजा—सुन्दरक, अलमिदानीं कथितेन। (सास्रम्।) हा वत्स वृषसेन, कासि । देहि मे प्रतिवचनम् । ( इति मोहमुपागतः । ) सूतः—समाश्वसिहि समाश्वसिहि । राजा—( उत्थाय । सकरुणम् । ) हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलद्रुमप्ररोह'. २. 'हा प्रियदर्शन' इत्यस्मादारभ्य 'प्रयच्छ मे प्रतिवचनम्' इत्यन्तं क्वचिन्नास्ति. ३. 'प्राणापचारपरिवर्तितदृष्टि'. ४. 'अत्यन्तशोकावेगेन'; 'अत्यन्तं दुःखावेगेन'. ५. 'सूत, पुण्यवन्तो दुःखभाजो भवन्ति । अस्माकं च'.

प्रत्यक्षं हतबन्धूनामेतत्परिभवाग्निना ।
हृदयं दह्यतेऽत्यर्थं कुतो दुःखं कुतो व्यथा ॥ ११ ॥

( इति मोहमुपगतः । )

सूतः—समाश्वसितु समाश्वसितु महाराजः । ( इति पटान्तेन वीजयति । )

दुर्योधनः—( लब्धसंज्ञः । ) भद्र सुन्दरक, ततो वयस्येन किं प्रतिपन्नमङ्गराजेन ? ।

सुन्दरकः—तदो अ देव, तधाविधस्स पुत्तस्स दंसणेण संगलिदं अँस्सुजादं उज्झिअ अणवेक्खिदपरप्पहरणाभिओएण सामिणा अभिजुत्तो धणंजओ । तं अ सुदवहामरिसुद्दीविदपरक्कमं तह परिक्कमंतं पेक्खिअ णउलसहदेवपंचालप्पमुहेहिं अंतरिदो धणंजअस्स रहंवरो । [ ततश्च देव, तथाविधस्य पुत्रस्य दर्शनेन संगलितमश्रुजातमुज्झित्वानवेक्षितपरप्रहरणाभियोगेन स्वामिनाभियुक्तो

---

विपरीतदर्शनं कथं कर्णेन दृष्टम् ? । इवशब्दोऽनवक्लृप्तौ ॥ १० ॥ **प्रत्यक्षमिति ।** एतद्धृदयमित्यन्वयः । दह्यते दाहवत्क्रियते ॥ ११ ॥ **सुन्दरकवाक्ये ।** ततो देव, स्वामिना तथाविधस्य पुत्रस्य दर्शनेन संगलितमश्रुजातमुज्झित्वानपे-

---

पाठा०-१. 'प्रत्यक्षहतबन्धूनां'. २. 'व्यर्थं'. ३. 'कुतो दुःखं कुतो व्यथा ॥ भद्र सुन्दरक, ततो वयस्येन किं प्रतिपन्नमङ्गराजेन'. ४. 'आयुष्मन्, अलमत्यन्तदुःखावेगेन ।'. ५. 'भद्र सुन्दरक, वयस्येन किं प्रतिपन्नमङ्गराजेन'; 'भद्र सुन्दरक, संप्रति किं प्रतिपन्नं वयस्येनाङ्गराजेन'. ६. 'तहहदस्स पुत्तस्स'; 'तधाविधस्स सुदस्स'. ७. अस्सुजलं'. ८. 'अणवेक्खिदपरप्पहरणाभिओएण सामिणा अंगराएण अहिउत्तो सो दुराआरो मज्झमपंडवो । दुर्योधनः—ततस्ततः । सुन्दरकः—तदो देव, सुदवहामरिसुद्दीविदपरक्कमं विमुक्कजीविदासं तह परिक्कमंतं'; 'अणवेक्खिदपरप्पहरणेण सामिणा अंगराएण अभिजुत्तो धणंजओ । तदो तं सुदवहामरिसिदं विमुक्कजीविदासं तथा परिक्कमंतं'; 'अणवेक्खिदपरप्पहरणेण सामिणा अंगराएण अभिजुत्तो धणंजओ । तदो तं अ सुदवहामरिसिदं विमुक्कजीविदासं तह परक्कमंतं'. ९. 'भीमणउलसहदेवपंचालप्पमुहेहिं'; 'सासंकेहिं भीमणउलसहदेवपंचालप्पमुहेहिं'; 'णउलसहदेवप्पमुहेहिं पांचालबलेहिं'. १०. 'रहो'.

धनंजयः । तं च सुतवधामर्षोद्दीपितपराक्रमं तथा परिक्रामन्तं प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनंजयस्य रथवरः । ]

दुर्योधनः—ततस्ततः ? ।

सुन्दरकः—[1]तदो देव, सल्लेण भणिदं–'अंगराअ, [2]हदतुलंगमो भग्गकूवरो दे रहो ण जोग्गो भीमाज्जुणेहिं सह आजुज्झिदुं' त्ति पडिवट्टिदो रहो ओदारिदो सामी संदणादो बहुप्पआरं अ [3]समस्सासिदो । तदो अ सामिणा सुइरं विलविअ परिअणोवणीदं अण्णं रहं पेक्खिअ दीहं णिस्ससिअ मइ दिट्ठी विणिक्खिविदा । 'सुंदरअ, एहि' त्ति भणिदं अ । तदो अहं उवगदो सामिसमीवं । तदो अवणीअ सीसट्ठाणादो पट्टिअं सरीरसंगलिदेहिं सोणिअबिंदुहिं लि[4]त्तमुहं बाणं

क्षितपरप्रहरणाभियोगेनाभियुक्तो धनंजयः । तं च सुतवधामर्षोद्दीपितपराक्रमवन्तं प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनंजयस्य रथवरः । अन्तरितः पिहितः ॥ **सुन्दरकवाक्ये** । ततो देव, शल्येन भणितम्—'अयि राधेय, स्खलिततुरङ्गमो भग्नकूबरस्ते रथो न योग्यो वोढुं भीमार्जुनाभ्यां सह सांप्रतमायोधितुम् ।' ततः परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनाद्बहुप्रकारं च समाश्वासितः । ततः स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथमारुह्य क्षणेन दीर्घं निःश्वस्य मयि दृष्टिर्विनिहिता । सुन्दरक, आगच्छेति भणितं च । तत उप-

पाठा०–१. 'तदो अज्जुणचावमहाप्फलअपओहरणिस्सरिदसरधारासहस्सेहिं पूरिदेसु दिसामुहेसु सल्लेण भणिदो सामी अंगराओ । जहा अंगराअ'. २. 'क्खुभिदतुलंगमो मथिदचक्कणेमिकूवरो दे रहो । ता ण जुत्तं भीमाज्जुणेहिं सह आजुज्झिदुं त्ति भणिअ णिवट्टिदो रहो समरांगणादो'; 'हदतुलंगमो मथिदचक्कणेमिकूवरो दे रहो । ता ण जुत्तं भीमाज्जुणेहिं अहिजुज्जिदुं त्ति भणिअ णिवट्टिदो रहो'; 'हदतुरंगमो भग्गकूवरो रहो ण जोग्गो भीमसेणाज्जुणेहिं अभिजुत्तुं त्ति भणिअ परिवट्टिअ रहं'. ३. 'अस्सासिदो । दुर्योधनः—ततस्ततः । सुन्दरकः—तदो अ सामिणा सुइरं विलंबिअ परिअणो अभिहिदो अण्णं रहं मे उवणेहि त्ति । परिअणोवणीदं अण्णं रहं पेक्खिअ मइ दिण्णदिट्ठी सुंदरअ, एहि त्ति भणिअं अ । अहं उवगदो समीवं'; 'आस्सासिदो । दुर्योधनः—ततस्ततः । सुन्दरकः—तदो अ देव, सामिणा वि सुइरं विलविअ परिअणो अभिहिदो अण्णं रहं मे उवणेहि त्ति । परिअणोवणीदं अ अण्णं रहं पेक्खिअ अस्सुजलं उज्झिअ दीहं निस्ससिअ मइ दिट्ठी विणिक्खिविदा । भणिदं अ सुन्दरअ, एहि त्ति । तदो गदोम्हि सामिसमीवं'. ४. 'दिद्धवअणं'.

कदुअ [1]अहिलिहिअ प्पेसिदो देवस्स संदेसो । ( [2]इति पट्टिकामर्पयति । )
[ ततो देव, शल्येन भणितम्—'अङ्गराज, हततुरङ्गमो भग्नकूबरस्ते रथो न योग्यो भीमार्जुनाभ्यां सहायोद्धुम्' इति परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनाद्बहुप्रकारं च समाश्वासितः । ततश्च स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथं प्रेक्ष्य दीर्घं निःश्वस्य मयि दृष्टिर्विनिक्षिप्ता । 'सुन्दरक, एहि' इति भणितं च । ततोऽहमुपगतः स्वामिसमीपम् । ततोऽपनीय शीर्षस्थानात्पट्टिकां शरीरसंगलितैः शोणितबिन्दुभिर्लिप्तमुखं बाणं कृत्वाभिलिख्य प्रेषितो देवस्य संदेशः । ]

( दुर्योधनो गृहीत्वा वाचयति । )

यथा—'स्वस्ति, [3]महाराजदुर्योधनं समराङ्गणात्कर्ण एतदन्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति,—

अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमा-
न्भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः ।
[4]यत्संभावित इत्यहं न च हतो दुःशासनारिर्मया
[5]तं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥ १२ ॥'

**दुर्योधनः**—[6]वयस्य कर्ण, किमिदं [7]भ्रातृशतवधदुःखितं माम-

---

गतोऽहं स्वामिसमीपम् । ततः शीर्षस्थानात्पट्टिकामपनीय स्वशरीरसंगलितैः शोणितबिन्दुभिः सुस्निग्धमुखं बाणं कृत्वाभिलिख्य प्रेषितो देवस्य संदेशः । अत्र 'कूबरस्तु युगंधरः' इत्यमरः । शीर्षं मस्तकम् । अपनीयानीय । अस्त्रेति । अयं कर्णः । कृती कुशलः । इत्यनेनाकारेणाहं यत्संभावितो भवता प्रसिद्धः कृतः । 'प्रतिकारः प्रतीकारः' इति शब्दभेदः । तं प्रतीकारमेहि गच्छ । तथा च युद्ध्वा वा रुदित्वा वा । राजन्, भ्रातृदुःखं त्यजेति भावः ॥ १२ ॥ सुन्दरकवाक्ये ।

---

1 अत्र विकल्पालङ्कारः; तल्लक्षणं तु दर्पणे—'विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयु(य)तः' इति ।

---

पाठा०—१. 'अहिलिहिदो एसो देवस्स संलेहो'; 'अहिलिहिदो एसो देवस्स संदेसो'; 'प्पेसिदो देवस्स संदेसो', २. '( इति पत्रिकामर्पयति । )'; '( पट्टिकां दर्शयति । )'. ३. 'महाराज दुर्योधन'. ४. 'त्वत्संभावित इत्यहं'. ५. 'त्वं'. ६. 'वयस्य कर्ण कर्ण'. ७. 'भ्रातृशतवधदुःखदुःखितं'; 'हतभ्रातृशतं'.

परेण वाक्शल्येन घट्टयसि ?। भद्र सुन्दरक, अथेदानीं किमारम्भोऽङ्गराजः ?।

सुन्दरकः—देव[1], अज्जवि आरंभो पुच्छीअदि ?। अवणीदसरीरावरणो अप्पवहकिदणिच्चओ पुणोवि पत्थेण सह समलं मग्गदि। [ देव, अद्याप्यारम्भः पृच्छयते ?। अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गयते। ]

दुर्योधनः[2]—(आवेगादासनादुत्तिष्ठन्।) सूत, रथमुपनय। सुन्दरक, त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रतिबोधय। अलमतिसाहसेन। अभिन्न एवायमावयोः संकल्पः। न खलु भवानेको जीवितपरित्यागाकाङ्क्षी। किंतु,—

हत्वा पार्थान्[3]सलिलमशिवं बन्धुवर्गाय[4] दत्त्वा
मुक्त्वा बाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च।
कृत्वान्योन्यं सुचिरमपुनर्भावि गाढोपगूढं
संत्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ[5] च ॥ १३ ॥

अथवा [6]शोकं प्रति मया न किंचित्संदेष्टव्यम्।

वृषसेनो न ते पुत्रो न मे दुःशासनोऽनुजः।
[7]त्वां बोधयामि किमहं त्वं मां संस्थापयिष्यसि ॥ १४ ॥

---

देव, अद्याप्यारम्भः पृच्छ्यते ?। अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मृगयते। 'संकल्पः कर्म मानसम्' इत्यमरः ॥ **हत्वेति**। अशिवममङ्गलम्। बाष्पं मुक्त्वा रुदित्वा। अपुनर्भावि न पुनर्भविष्यत्। गाढोपगूढं गाढालिङ्गनम्। इमां हततनुं निन्द्यशरीरमेवमेवं कृत्वा आवां संत्यक्ष्याव इत्यन्वयः। आवां कीदृशौ। प्रथमं दुःखितौ ततो निर्वृतौ मुमुक्षू ॥ १३ ॥ **वृषसेन इति**। अनुजः कनिष्ठः ॥ १४ ॥ **सुन्दरकवाक्ये**। यद्देव आज्ञापयति ॥

---

पाठा०–१. 'देव, अवणीदसरीरावरणो अप्पवहकिदणिच्चओ सअं एव्व समलं मग्गदि'. २. 'दुर्योधनः–( श्रुत्वा सत्वरमुत्तिष्ठन्। ) सुन्दरक, त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रबोधय। न खलु जयाकाङ्क्षी भवानिदानीम्। अभिन्न एवायमावयोः संकल्पः। किंतु'. ३. 'पार्थं'. ४. 'बन्धुभिः'. ५. 'दुःखितौ निर्वृतौ वा'; 'निर्वृतौ दुःखितौ वा'; 'निर्वृतौ दुःखितौ च'. ६. 'कर्णं प्रति'; 'सशोकं प्रति'; 'सशोकं कर्णं प्रति'. ७. 'त्वां बोधयिष्ये यदहं मां त्वं वा बोधयिष्यसि'.

सुन्दरकः—जं देवो आणवेदि । (इति निष्क्रान्तः ।) [ यद्देव आज्ञापयति । ]

दुर्योधनः—तूर्णमेव रथमुपस्थापय ।

सूतः—(कर्णं दत्वा ।) देव, ह्रेषासंवलितो नेमिध्वनिः श्रूयते । तथा तर्कयामि नूनं परिजनोपनीतो रथः ।

दुर्योधनः—सूत, गच्छ त्वं सज्जीकुरु ।

सूतः—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनः प्रविशति ।)

दुर्योधनः—(विलोक्य ।) किमिति नारूढोऽसि ? ।

सूतः—एष खलु [2]तातोऽम्बा च [3]संजयाधिष्ठितं रथमारुह्य देवस्य [4]समीपमुपगतौ ।

दुर्योधनः—[5]किं नाम तातोऽम्बा च संप्राप्तौ । [6]कष्टमतिबीभत्स-माचरितं दैवेन ! । सूत, गच्छ त्वं स्यन्दनं तूर्णमुपहर । अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि ।

सूतः—देव, [7]त्वदेकशेषबान्धवावेतौ कथमिव न समा-श्वासयसि ? ।

दुर्योधनः—सूत, कथमिव समाश्वासयामि [8]विमुखभाग-धेयः ? । पश्य,—

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च ।

---

ह्रेषा अश्वशब्दः । नेमिश्चक्रप्रान्तः ॥ त्वदेकबान्धवौ त्वमेको बान्धवो ययोरिति समासः ॥ अद्येति । आवामहं दुःशासनश्च । तामवस्थां मरणरूपाम् । पित्रोरित्यत्र

---

पाठा०—१. '(इति निष्क्रान्तः ।) दुर्योधनः—अये नेमिध्वनिरिव । सूतः—आ-युष्मन्, एष सद्य एव संवर्धितो नेमिध्वनिः । दुर्योधनः—नूनं परिजनोपनीतो रथः । गच्छ त्वं सज्जीकुरु ।'. २. 'तातो धृतराष्ट्रोऽम्बा च'. ३. 'संजयाधिरूढं रथमारूढौ देवसकाशमनुप्राप्तौ'; 'संजयेनाधिरूढौ देवदर्शनमनुप्राप्तौ'; 'संजयाधिरूढं रथमा-रूढौ देवदर्शनमनुप्राप्तौ'. ४. 'समीपमागतौ'. ५. किं नाम तातोऽम्बा च संप्राप्तौ'. ६. 'अहो, अतीव बीभत्समाचरितं दैवेन । सूत, गच्छ स्यन्दनमुपहर'. ७. 'त्वदेक-बान्धवौ'. ८. 'मन्दभाग्यः'.

तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥ १५ ॥

तथाप्यवश्यं वन्दनीयौ गुरू ।

( इति निष्क्रान्तौ । )

इति चतुर्थोऽङ्कः ।

---

'पिता मात्रा' ( १।२।७० ) इत्येकशेषः । घृणा करुणा जुगुप्सा वा । 'जुगुप्साकरुणे घृणे' इत्यमरः । पित्रोः पार्श्वं गत्वा किं नु वक्ष्यामीत्यन्वयः ॥ १५ ॥

असूत यं रत्नधरो गुणाढ्यो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ व्यरंसीदङ्कश्चतुर्थो वरटिप्पनेऽत्र ॥

इति चतुर्थोऽङ्कः ।

---

पाठा०—१. 'पार्श्वं पित्रोरहमपघृणः किं नु वक्ष्यामि गत्वा'; 'पार्श्वं पित्रोरहमुपगतः किं नु वक्ष्यामि ताभ्याम्'; 'पार्श्वं पित्रोरहमुपगतः किं नु वक्ष्यामि गत्वा'.

## पञ्चमोऽङ्कः ।

( ततः प्रविशति [1]रथयानेन गान्धारी संजयो धृतराष्ट्रश्च । )

**धृतराष्ट्रः**—[2]वत्स संजय, कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनस्तिष्ठति । कच्चिज्जीवति वा न वा ? ।

**गान्धारी**—[3]जाद, जइ सच्चं [4]जीवदि मे वच्छो ता कधेहि कस्सिं देसे वट्टदि । [ जात, यदि सत्यं जीवति मे वत्सस्तत्कथय कस्मिन्देशे वर्तते । ]

**संजयः**—[5]नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

[6]**गान्धारी**—( सकरुणम् । ) जाद, एआइ त्ति भणासि । [7]किं णु खु संपदं भादुसदं से पास्से भविस्सदि ? । [ जात, एकाकीति भणसि । किं नु खलु सांप्रतं भ्रातृशतमस्य पार्श्वे भविष्यति ? । ]

**संजयः**—तात, अम्ब, [8]अवतरतं स्वैरं रथात् ।

---

एकशेषोऽवशिष्टः । प्रवालोऽङ्कुरः । 'प्रवालमङ्कुरेऽप्यस्त्री' इत्यमरः ॥ **गान्धारीवाक्ये** । जात, यदि सत्यं जीवति मे पुत्रकस्तत्कथय कस्मिन्नुद्देशे वर्तते ॥ जात, एकाकीति भणसि । अन्यथा किं सांप्रतं भ्रातृशतमस्य पार्श्वे भविष्यति ? ।

---

**पाठा०**–१. 'स्यन्दनयानेन'. २. 'वत्स संजय, कुरुकुलकाननैकशेषप्रवालो मे वत्सो दुर्योधनः'; 'संजय, कथय कस्मिन्नुद्देशे स कुरुकाननैकशेषप्रवालो मे वत्सो दुर्योधनस्तिष्ठति ।'; 'वत्स संजय, कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनः ।'; 'संजय, कथय कथय कस्मिन्नुद्देशे सकलकुलकाननैकपल्लवो वत्सो मे दुर्योधनः ।'; 'वत्स संजय, कस्मिन्नुद्देशे कुरुकुलकाननैकप्रवालो दुर्योधनः ।'; 'वत्स संजय, कुलकाननैकशेषप्रवालो मे वत्सो दुर्योधनः'. ३. 'जाद' इति क्वचिन्नास्ति. ४. जीवदि वच्छो ता कस्सिं कधेहि तं उद्देसं'; 'जीवदि सो मे वच्छो कहेहि तं उद्देसं'; 'जीवदि सो ता कस्सिं कधेहि तं उद्देसं'. ५. 'तात, अम्ब, नन्वेष महाराजः'. ६. 'गान्धारी–( सास्रम् । ) जाद, एआइ त्ति भणासि'; 'गान्धारी—( सकरुणम् । ) जाद, एआइ त्ति णं भणासि'; 'गान्धारी—जाद, एआइ त्ति भणासि'. ७. 'किं णु क्खु सांपदं भादुसदं से पास्से णत्थि'; 'किं णु क्खु संपदं तस्स भादुसदं पास्से णत्थि'; 'किं सांपदं भादुणो से समीवे ण होंति'; 'ण क्खु संपदं भादुसदं से पास्से भविस्सदि'. ८. 'अवतरतं रथात्'; 'अवतरत स्वैरं रथात्'.

( [1]उभाववतरणं नाटयतः । )

( ततः प्रविशति [2]सव्रीडमुपविष्टो दुर्योधनः । )

**संजयः**—( [3]उपसृत्य । ) विजयतां महाराजः । [4]नन्वेष तातोऽम्बया सह प्राप्तः । [5]किं न पश्यति महाराजः ? ।

( दुर्योधनो वैलक्ष्यं नाटयति । )

**धृतराष्ट्रः**—

[1]शल्यानि व्यपनीय [2]कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे [6]कृतापाश्रयः ।
दृग्भिर्निर्जितै[7]र्मान्त्विताननरपतीनालोकयंल्लीलया
सह्या पुत्रक वेदनेति न मया पापेन [8]पृष्टो भवान् ॥ १ ॥

( [9]धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्यालिङ्गतः । )

**गान्धारी**—वच्छ, [10]अदिगाढप्पहारवेअणापज्जाउलस्स [11]अम्हेसु सण्णिहिदेसु वि ण प्पसरदि दे वाणी । [ वत्स, अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी । ]

**धृतराष्ट्रः**—वत्स दुर्योधन, [12]किमकृतपूर्वः संप्रति मय्यप्ययमव्याहारः ? ।

---

अत्र जात पुत्रक ॥ सव्रीडं सलज्जं यथा स्यादेवम् ॥ **गान्धारीवाक्ये** । जात, अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी । अपकृतमपकारः कृतः ॥ **गान्धारीवाक्ये** । जात, यदि त्वं मां नालपसि

---

1 'शल'-'श्वल' आशुगमने धातुः तस्य शल्यमिति रूपम्' इति सुश्रुतसंहिता, 'शल-श्वल आशुगतौ धातू, अनयोराशुगमनमित्यर्थः । तयोराद्यस्य शलधातोः शल्यमिति रूपं निष्पद्यते' इति निबन्धसङ्ग्रहाख्या च तट्टीका । 2 कङ्कमुखं=कङ्कवदनाख्यं शल्याहरणयन्त्रम्, तच्चोक्तं वाग्भटेन-'यथास्थूलं तु वक्ष्यते । तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ मुखैर्मुखानि यन्त्राणां कुर्यात्तत्संज्ञकानि च । अष्टादशाङ्गुलायामान्यायसानि च भूरिशः ॥ मसूराकारपर्यन्तैः कण्ठे बद्धानि कीलकैः ।……तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ।' ( अष्टाङ्गहृ० सू. अ. २५ ) इति ।

---

पाठा०-१. ( सर्वेऽवतरणं नाटयन्ति । )'. २. 'सव्रीडोपविष्टः'. ३. '( उपगम्य । )' ४. 'ननु' इति क्वचिन्नास्ति. ५. 'किं न पश्यसि महाराज'. ६. 'कृतोपाश्रयः'. ७. 'निर्जितशात्रवान्'. ८. 'दृष्टः'. ९. 'स्पर्शेनोपेत्य परिष्वजेते'. १०. 'गाढप्पहार–'. ११. 'अम्हेसु वि ण दे प्पसरदि वाणी'; 'किं अम्हेसु वि ण प्पसरदि दे वाणी'. १२. 'किमकृतपूर्वः संप्रति मय्यव्यवहारः'; 'अभूतपूर्वो मय्यपि संप्रत्यनध्याहारः'.

[1]**गान्धारी**—वच्छ, जइ तुमं वि [2]अम्हे णालवसि ता किं संपदं वच्छो दुस्सासणो आलवदि अध दुम्मरिसणो वा अण्णो वा ? । (इति रोदिति ।) [ वत्स, यदि त्वमप्यस्मान्नालपसि तत्किं सांप्रतं वत्सो दुःशासन आलपत्यथ दुर्मर्षणो वान्यो वा ? । ]

[3]**दुर्योधनः**—

[4]जातोऽहमप्रतिकृतानुजनाशदर्शी
तातस्य बाष्पपयसां तव चाम्ब हेतुः ।
दुर्जातमत्र विमले भरतान्वये [5]वः
किं मां सुतक्षयकरं सुत इत्यवैषि ॥ २ ॥

**गान्धारी**—जाद, [6]अलं परिदेविदेण । तुमं वि दाव एक्को इमस्स अंधजुअलस्स मग्गोवदेसओ । ता चिरं जीव । किं मे रज्जेण जएण वा ? । [ जात, अलं परिदेवितेन । त्वमपि तावदेकोऽस्यान्धयुगलस्य मार्गोपदेशकः । तच्चिरं जीव । किं मे राज्येन जयेन वा ? । ]

---

तदा किं मां सांप्रतं वत्सो दुःशासन आलपतु दुर्मर्षणो वाथान्यो वा ? ॥ **जात इति** । हे अम्ब, तव तातस्य च बाष्पपयसां हेतुः कारणं जातोऽस्मि । कीदृशः । अप्रतिकृतोऽप्रतीकारविषयीकृतो योऽनुजनाशस्तद्दर्शी । त्वं मां सुत इति किमवैषि जानासि ? । कीदृशम् । वो युष्माकमिह भरतकुले दुर्जातं दुष्टपुत्रम् । पुनः कीदृशम् । वः सुतविनाशकरम् । व इति काकाक्षिगोलकवदुभयान्वयि । आकाङ्क्षाया उभयत्र सत्त्वात् । शब्दान्वयस्य वाकाङ्क्षाक्रमेणोत्थानादित्यन्यत्र विस्तरः ॥ २ ॥ **गान्धारीवाक्ये** । जात, अलं परिदेवितेन । त्वमेव तावदेतस्यान्धयुगलस्य मार्गोपदेशको भव । तच्चिरं जीव । किं मे राज्येन जयेन वा ? ।

---

**पाठा०**–१. 'गान्धारी—(सकरुणम् ।) वच्छ'. २. 'अम्हे णालवसि किं दाणीं दुस्सासणो दुम्मरिसणो अण्णो वा आलविस्सदि'; 'अम्हेसु णालवसि ता किं संपदं वच्छो मे दुस्सासणो आलवदि अध दुम्मरिसणो विकण्णो वा'; 'अम्हे णालवसि किं दाणीं दुस्सासणो आलविस्सदि दुम्मरिसणो वा'. ३. 'दुर्योधनः—अम्ब'. ४. 'पापः'; 'योधः'. ५. 'अपि'; 'अस्मिन्'. ६. 'अलमलं परिदेविदेण'. ७. 'एक्को इमस्स अंधजुअलस्स मग्गोवदेसओ चिरंजीव । अलं मे रज्जेण जएण वा ।'; 'एक्को अंधजुअलस्स मग्गोवदेसओ चिरं जीव । किं मे रज्जेण वेरेण वा ।'; 'एक्को इमस्स अंधजुअलस्स पंथोवदेसओ चिरं जीव । भोदु मे रज्जेण वेरेण वा ।'.

दुर्योधनः—

मातः किमप्यसदृशं कृपणं वचस्ते
सुक्षत्रिया क भवती क च दीनतैषा ।
निर्वत्सले सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयसि रक्षसि मामयोग्यम् ॥ ३ ॥

नूनं विचेष्टितमिदं सुतशोकस्य ।

संजयः—महाराज, किं वायं लोकवादो वितथः 'न घटस्य कूपपतने रज्जुस्तत्रैव प्रक्षेप्तव्या' इति ? ।

दुर्योधनः—अपुष्कलमिदम् । उपक्रियमाणाभावे किमुपकरणेन ? । (इति रोदिति ।)

धृतराष्ट्रः—(दुर्योधनं परिष्वज्य ।) वत्स, समाश्वसिहि । समाश्वासय चास्मानिमामतिदीनां मातरं च ।

दुर्योधनः—तात, दुर्लभः समाश्वास इदानीं युष्माकम् । किंतु,—

कुन्त्या सह युवामद्य मया निहतपुत्रया ।
विराजमानौ शोकेऽपि तनयाननुशोचतम् ॥ ४ ॥

---

मातरिति । किमप्यनिर्वचनीयम् । कृपणं दीनम् । सुक्षत्रिया शोभनक्षत्रियजातिः । केति । 'अत्यन्तासंभवेऽर्थे द्वौ क्कौ प्रयुज्येते' इति कोषः । हे निर्वत्सले वात्सल्यवति वात्सल्यहीने वा ॥ ३ ॥ किं वितथोऽसत्यः ? । किंतु सत्य एवेत्यर्थः । रज्जुः रशनादिप्रग्रहः ॥ इदं वचोऽपुष्कलमश्रेष्ठम् । 'श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्'

---

1 अत्र गान्धार्या आक्षेपेण अहङ्कारस्य प्रतीतेः अभिमानाख्या नाट्यालङ्कृतिः; तल्लक्षणं च दर्पणे—'अभिमानः स एव स्यात्' इति ।

---

पाठा०–१. 'विकृतं'. २. 'एनां'. ३. 'नूनं विचेष्टितमिदं सुतशोकस्य' इति कचिन्नास्ति. ४. 'महाराज, किं चायं लोकप्रवादोऽपि विस्मृतो न च घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्येति'; 'महाराज, किं वायं लोकवादो वितथो न घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्येति'. ५. 'अलमलम् उपक्रियमाणे किमपकारेण'; 'अयुक्तमिदम् । अपक्रियमाणे किमुपकारेण'. 'अपुष्कलमिदम् । ननु उपक्रियमाणाभावे किमुपकरणेन'. ६. 'वत्स, समाश्वसिहि समाश्वसिहि'. 'समाश्वासय मां जननीं च'; 'समाश्वासय च मामिमामतिदीनां मातरं च'; 'समाश्वासय चास्मानिमामतिदीनां मातरं ते च'. ७. 'दुर्लभमिदानीं पुनः समाश्वासनं युष्माकम्'. ८. 'लोके'.

**गान्धारी**—[1]जाद, एदं एव्व संपदं प्पभूदं [2]जं तुमं वि दाव एक्को णाणुसोचइदव्वो। ता जाद, प्पसीद। एसो दे सीसंजली। णिवट्टीअदु समरव्वावारादो। अपच्छिमं करेहि पिदुणो वअणं। [ जात, एतदेव सांप्रतं प्रभूतं यत्त्वमपि तावदेको नानुशोचितव्यः। तज्जात, प्रसीद। एष ते शीर्षाञ्जलिः। निवर्त्यतां समरव्यापारात्। अपश्चिमं कुरु पितुर्वचनम्। ]

**धृतराष्ट्रः**—वत्स, शृणु वचनं [3]तवाम्बाया [4]मम च निहताशेषबन्धुवर्गस्य। [5]पश्य,—

[6]दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः [7]शमयतो भीतं जगत्फाल्गुनात्।

---

इत्यमरः॥ **कुन्त्येति**। युवामद्य कुन्त्या सह तनयाननुशोचतमित्यन्वयः॥ ४॥ **गान्धारीवाक्ये**। जात, इदमेव सांप्रतं मे प्रभूतं यत्त्वामप्येकं नानुशोचयिष्ये। तज्जात, प्रसीद। एष ते शीर्षेऽञ्जलिः। निवर्त्यतामेतस्मात्समरव्यापारात्। अपश्चिमं कुरु पितुर्वचनम्। अत्र प्रभूतं युक्तम्। शीर्षेऽञ्जलिः प्रणामः। अपश्चिममलङ्घ्यम्॥ सपत्नः शत्रुः॥ **दायादा इति**। दायादाः शत्रवः। अग्रतः कर्णस्यैव। फाल्गुनादर्जुनात्। मे वत्सानां निधनेनायं रिपुस्त्वयि शेषप्रतिज्ञ

---

पाठा०–१. 'जाद, दाणिं एदं एव्व संपदं प्पभूदं'; 'जाद, एदं वि संपदं प्पभूदं'; 'जाद, एदं एव्व संपदं मे प्पभूदं'; 'जाद, एदं एव्व संपदं प्पभूददरं'. २. 'जं तुमं वि दाव एक्को जीवसि। कं अण्णं अणुसोइस्सं। ता जाद, अकालो दे समरस्स। प्पसीद। एसो दे अंजली। णिवट्टेहि समरव्वावारादो। अपच्छिमं करेहि वअणं।' 'जं तुमं वि दाव एक्को जीवसि। कं अण्णं अणुसोइस्सं। ता जाद, अकालो दे समरस्स। प्पसीद। एसो दे अंजली। निवट्टेहि समरनिब्बंधादो। अपच्चिमं करेहि वअणं।'; 'जं तुमं वि दाव एक्कं णाणुसोचइस्सं। ता जाद, णिवट्टेहि समरादो। अपच्छिमं करेहि सुवअणं।'; 'तुमं वि दाव एक्को णाणुसोचइदव्वो। ता जाद, प्पसीद प्पसीद। एसो दे सीसंजली। णिवट्टीअदु समरव्वावारादो। अवरसं पिदुणो वअणं करेहि।'. ३. 'तव' इति क्वचिन्नास्ति. ४. 'ममापि च निहताशेषबन्धुवर्गस्य'; 'मम च निहतसकलबन्धुवर्गस्य'; 'मम सकलबान्धवस्य च'; 'मम च सकलहतबन्धुवर्गस्य'; 'मम च निहताशेषवर्गस्य'. ५. 'अपि च तात दुर्योधन'. ६. 'देवा वा'. ७. 'शमयता भीतं यतः फाल्गुनात्'; 'शमयता भीतं न वीभत्सुना'.

वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥ ५ ॥

दुर्योधनः—समरात्प्रतिनिवृत्य किं मया कर्तव्यम् ? ।

गान्धारी—जाद, जं पिदा दे विउरो वा भणदि । [ जात, यत्पिता ते विदुरो वा भणति । ]

संजयः—देव, एवमिदम् ।

दुर्योधनः—संजय, अद्याप्युपदेष्टव्यमस्ति ।

संजयः—देव, यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीपुः प्रज्ञावताम् ।

दुर्योधनः—( सक्रोधम् । ) शृणुमस्तावद्भवत एव प्रज्ञावतोऽस्मान्प्रति प्रतिरूपमुपदेशम् ।

धृतराष्ट्रः—वत्स, युक्तवादिनि संजये किमत्र क्रोधेन ? । यदि प्रकृतिमापद्यसे तदहमेव भवन्तं ब्रवीमि । श्रूयताम्,—

इत्यन्वयः । त्वदेकावशिष्टप्रतिज्ञ इत्यर्थः । हे तात मान्य । पितरौ मातापितरौ । एकशेषात् ॥ ५ ॥ गान्धारीवाक्ये । जात, पिता ते विदुरो यद्भणति । पितृकल्पो हितोपदेशात् ॥ प्राणितं जीवितम् । 'संपन्नश्च प्रकृतिभिर्महोत्साहः कृतश्रमः । जेतुमेषणशीलश्च विजिगीपुरिति स्मृतः ॥' इति विजिगीपुलक्षणम् ।

पाठा०—१. 'निधनाच्च मारुतिरसौ शेषप्रतिज्ञस्त्वयि'. २. 'क्रोधं'. ३. 'वैरिणि'. ४. 'वत्स'. ५. 'तात, अम्ब, समरात्प्रतिनिवृत्य किं करिष्यामि'. ६. 'गान्धारी—जाद, जं पिदा दे विउरो वा भणिस्सदि'; 'गान्धारी—जं पिदा दे भणिस्सदि तं अणुचिट्ठ'; 'गान्धारी—जं पिदा दे विउरो वा भणिस्सदि तं अणुचिट्ठ'. 'गान्धारी—जं पिदा दे विउरो वा भणदि तं अणुचिट्ठिदव्वं' ७. 'राजन्'. ८. 'उपदेष्टव्यमस्तीति'; 'उपदेष्टव्यमिति'. ९. 'राजन्, यावत्प्राणितव्यं तावदुपदेष्टव्यभूमयो विजिगीषवः प्रज्ञावताम्'; 'राजन्, यावत्प्राणनाशस्तावदुपदेष्टव्या नृपतयः प्रज्ञावताम्'; 'राजन्, यावत्प्राणनाशस्तावदुपदेष्टव्या नृपतयो विजिगीषवः प्रज्ञावताम्'; 'देव, यावत्प्राणास्तावदुपदेष्टव्यभूमयो विजिगीषवः प्रज्ञावताम्'; 'राजन्, यावत्प्राणनाशस्तावदुपदेष्टव्यभूमयो विजिगीषवः प्रज्ञावताम्'; 'राजन्, यावत्प्राणितव्यं तावदुपदेष्टव्या नृपतयो विजिगीषवः प्रज्ञावताम्'. १०. '( सक्रोधम् । ) शृणुमस्तावद्भवत एव प्रज्ञावतः संप्रत्यस्मदनुरूपमुपदेशम्'; '( सासूयम् । ) शृणुमस्तावत्प्रज्ञावतो भवतोऽस्मत्प्रतिरूपमेवमुपदेशम्'; 'शृणुमस्तावद्भवतः प्रज्ञावतः संप्रत्यनुरूपमुपदेशम्'. ११. 'तव किमत्र'. १२. 'तदहमेव भवन्तं किंचित्कथयामि'; 'तदहमेव कथयामि'; 'तदहमेव तावद्भवन्तं ब्रवीमि'; 'तदहमेव ब्रवीमि'.

**दुर्योधनः**—कथयतु तातः ।

**धृतराष्ट्रः**—[1]वत्स, किं विस्तरेण ? । संधत्तां भवानि[2]दानीमपि युधिष्ठिरमीप्सितपणबन्धेन ।

**दुर्योधनः**—तात, [3]तनयस्नेहवैक्लव्यादम्बा [4]बालिशत्वेन संजयश्च [5]काममेवं ब्रवीतु । [6]युष्माकमप्येवं व्यामोहः । अथवा प्रभवति [7]पुत्रनाशजन्मा हृदयज्वरः । [8]अन्यच्च तात, [9]अस्खलितभ्रातृशतोऽहं यदा तदावधीरितवासुदेवसामोपन्यासः, संप्रति [10]हि दृष्टपितामहाचार्या[11]नुजराजचक्रविपत्तिः [12]स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः संधिम् ? । अन्यच्च, नयवेदिन्संजय,—

> [13]हीयमानाः किल रिपोर्नृपाः संदधते परान् ।
> दुःशासने हतेऽहीनाः सानुजाः पाण्डवाः कथम् ॥ ६ ॥

---

वैक्लव्याद्विह्वलत्वात् । अम्बा वदतीति शेषः । बालिशत्वेन मूर्खतया । संजयो वदतीति शेषः । नाम निश्चये । हृदयज्वरस्तातस्येति शेषः । **तातेत्यादि** । हे तात, दुर्योधनः कथं संधिं करिष्यतीत्यन्वयः । अस्खलितमविनष्टम् । साम संधानम् । पितामहो भीष्मः । आचार्यो द्रोणः । राजचक्रं क्षत्रियसंघः । कीदृशं संधिम् । उदात्तकथाव्रीडाकरमुत्तमकथालज्जाकरम् । दुःखान्तं च ॥ **हीयमाना इति** । किलागमे । रिपोरहितात् । हीयमाना हीनाः । नृपाः परान्शत्रून् संदधते । स्वापेक्षया यदि परे शक्ता भवन्ति तदा तैः समं संधिः कर्तव्य इति भावः । दुःशा-

---

पाठा०–१. 'किं विचारेण'. २. 'इदानीमपि युधिष्ठिरस्य समीप्सितेन पणेन'; 'इदानीं युधिष्ठिरप्रार्थितपणेन'; 'इदानीं युधिष्ठिरस्य समीप्सितेन पणेन'. ३. 'तनयस्नेहात्'. ४. 'बालिशत्वात्'. ५. 'एतद्ब्रवीतु'; 'एतद्ब्रवीति'. ६. 'युक्तो युष्माकमप्ययं मोह इति प्रभवति'; 'युष्माकमपि चायं मोहः । अथ वा प्रभवति'; 'अम्बा तनयवैक्लव्याद्बालिशत्वेन संजयो मामेवं ब्रुवतां नाम व्यामोहो भवतामपि । अथ वा प्रभवति'. ७. 'पुत्रनाशशोकजन्मा'. ८. 'अन्यच्च' इति क्वचिन्नास्ति. ९. 'अस्खलितभ्रातृशतस्तदावधीरितवासुदेवसामोपन्यासः'; 'अस्खलितभ्रातृशतस्तदावधीरितवासुदेवशमोपन्यासः'. १०. 'हि' इति क्वचिन्नास्ति. ११. 'अनुराजचक्रविपत्तिः'; 'अनुजराजन्यशतविपत्तिः'. १२. 'शरीरमात्रस्नेहात्'; 'शरीरमात्रकस्नेहात्'. १३. 'हीयमानान्किल रिपून्नृपाः संदधते कथम् । दुःशासनेन हीनोऽयं सानुजः पाण्डवोऽधुना ॥'; 'हीयमानाः किल रणे नृपाः संदधते परान् । दुःशासने हते हीनाः पाण्डवाः सानुजे कथम् ॥'.

**धृतराष्ट्रः**—वत्स, एवं गतेऽपि मत्प्रार्थनया न किंचिन्न करोति युधिष्ठिरः। अन्यच्च, सर्वमेवापकृतं नानुमन्यते।

**दुर्योधनः**—कथमिव ?।

**धृतराष्ट्रः**—वत्स, श्रूयतां प्रतिज्ञा युधिष्ठिरस्य—'नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्धारयामि' इति। बहुच्छलत्वात्सङ्ग्राममस्यानुजनाशमाशङ्कमानो यदैव भवते रोचते तदैवासौ सज्जः संधातुम्।

**संजयः**—एवमिदम्।

**गान्धारी**—जाद, उपपत्तिजुत्तं पडिवज्जस्स पिदुणो वअणं। [ जात, उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम्। ]

**दुर्योधनः**—तात, अम्ब, संजय,—

एकेनापि विनानुजेन मरणं पार्थः प्रतिज्ञातवा-
न्भ्रातॄणां निहते शते विषहते दुर्योधनो जीवितुम्।
तं दुःशासनशोणिताशनमरिं भिन्नं गदाकोटिना
भीमं दिक्षु न विक्षिपामि कृपणः संधिं विदध्यामहम् ॥७॥

---

सने हते सति सानुजाः पाण्डवा अहीनाः सन्तः कथं परान्संदधत इत्यर्थः ॥६॥ एवं गतेऽपि। भवदुक्तनीतेर्यथार्थत्वेऽपीत्यर्थः। मम प्रार्थनया युधिष्ठिरः किंचिन्न करोत्येवं न, किंतु किंचित्करोत्येव। ननु हे राजन्, युधिष्ठिरः सर्वमेवापकृतं नैवानुमन्यते। तस्य दक्षिणत्वात्सदा धर्मपरायणत्वाच्चेति भावः। कथमिव। कुत इदमित्यर्थः। भवते रोचते तुभ्यं रुचिविषयीभवति। 'रुच्यर्थानां प्रीयमाणः' (१।४।३३) इति चतुर्थी ॥ **गान्धारीवाक्ये**। जात, उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम्। अत्र प्रतिपद्यस्व जानीहि ॥ **एकेनेति**। विनानुजेनेत्यत्र 'पृथग्विना–' (२।३।३२) इत्यादिना तृतीया। पार्थो युधिष्ठिरः। विषहते शक्नोति। तथा च लज्जाकरेण मम जीवितेनालमिति भावः। शोणिता-

---

पाठा०–१. 'किं न करोति युधिष्ठिरः'. २. 'सर्वं दैवापकृष्टं मन्यते युधिष्ठिरः'; 'सर्वदैवापकृष्टमात्मानं मन्यते स भवद्भ्यः'; 'सदैवापकृष्टं मन्यते युधिष्ठिरः'; 'सर्वदैवापकृष्टं मन्यते भवद्भ्यो युधिष्ठिरः'; 'सर्वदैवात्मानमपकृष्टं मन्यते भवद्भ्यो युधिष्ठिरः'; 'सर्वमेवापकृतं न मन्यते भवद्भ्यो युधिष्ठिरः'. ३. 'कथमेवेति'. ४. 'वत्स' इति क्वचिन्नास्ति. ५. 'संधारयामीति'. ६. 'अनुजनाशं शङ्कमानः'; 'अनुजनाशाच्छङ्कमानः'; 'अनुजनाशशङ्कया शङ्कमानः'. ७. 'यथैव भवते रोचते तथैवासौ शक्तः संधातुम्'. ८. 'जाद' इति क्वचिन्नास्ति. ९. 'अभिलषते'. १०. 'भिन्दन्गदाकोटिभिः'. ११. 'विक्षिपत्यनुनयं तस्मिन्विधत्ते कथम्'.

**गान्धारी**—हा जाद दुस्सासण, हा मदंकदुल्ललिद, हा जुअ-राअ, अस्सुदपुव्वा खु कस्स वि लोए ईदिसी विपत्ती!। हा वीरस-दप्पसविणी हदगांधारी, दुक्खसदं प्पसूदा, ण उण सुदसदं । [ हा जात दुःशासन, हा मदङ्कदुर्ललित, हा युवराज, अश्रुतपूर्वा खलु कस्यापि लोक ईदृशी विपत्तिः!। हा वीरशतप्रसविनी हत-गान्धारी, दुःखशतं प्रसूता, न पुनः सुतशतम् । ]

( सर्वे रुदन्ति । )

**संजयः**—( बाष्पमुत्सृज्य । ) तात, अम्ब,[2] प्रतिबोधयितुं[3] महाराज-मिमां भूमिं युवामागतौ । तदात्मापि[4] तावत्संस्तभ्यताम् ।

**धृतराष्ट्रः**—वत्स दुर्योधन,[5] एवं विमुखेषु भागधेयेषु त्वयि[6] चामुञ्चति सहजं मानमरिषु त्वदेकशेषजीवितालम्बनेयं[1] तपस्विनी गान्धारी कमवलम्बतां[7] शरणमहं च ।

**दुर्योधनः**—श्रूयतां यत्प्रतिपत्तुमिदानीं[8] प्राप्तकालम् ।

---

शिनं रक्तभोजिनम् । भोजनपदं लक्षणया पानेऽपि प्रवर्तत इहेत्यवधेयम् । कोटि-रम्रम् । 'कोटिरग्रे प्रकर्षे च' इति धरणिः । अहं भीमं दिक्षु न विक्षिपामि । किंतु विक्षिपाम्येवेत्यर्थः । नः शिरश्चालने । अहं कृपणः सन्संधिं विदध्यां करिष्ये । तथा च भीमवधादेव समीहितसिद्धिर्न तु संधिनेति भावः ॥७॥ **गान्धारीवाक्ये ।** हा जात दुःशासन, हा युवराज, हा मदङ्कदुर्ललित, अश्रुतपूर्वा कस्यापि लोक ईदृशी विपत्तिः । हा वीरशतप्रसविनि, हन्त गान्धारि, दुःखशतं प्रसूतासि, न पुनः पुत्रशतम् ॥ संस्तभ्यतां स्थिरीक्रियताम् ॥ तपस्विनी अनुकम्प्या । 'तपस्वी तापसे चानुकम्पार्हे च तपस्विनी' इति विश्वः । त्वदेकशेषरूपं जीविताशावलम्बनं तद्यो-गिनी । न तु बहुव्रीहिं कृत्वा मत्वर्थीयः । तयोरेकेनैवापरस्य गतार्थत्वादित्यवधे-यम् । 'किंशरणः' इति पाठे किं शरणं यस्य स किंशरणः । अशरण इत्यर्थः । 'शरणं गृहरक्षित्रोः' इत्यमरः । अहं सुवलम्ब इत्यन्वयः (?) ॥ प्रतिपत्तुं कर्तुम् ।

---

1 अत्र 'त्वदेकशेषजीविताशावलम्बनेयं' इति मूलानुगुणः पाठः ।

---

पाठा०–१. 'हा जाद दुस्सासण, हा दुम्मरिसण, हा विकण्ण, हा वीरसदप्पसविणी गांधारी, दुक्खसदं प्पसूदा । ण सुदसदं'. २. 'अम्ब' इति क्वचिन्नास्ति. ३. 'समा-श्वासयितुं'. ४. 'तदात्मानमपि'; 'तदात्मैवं'; 'तदात्मनैव'. ५. 'दुर्योधन' इति क्वचिन्नास्ति. ६. 'त्वयि चामुञ्चति मानबन्धमरिषु'. ७. 'किमवलम्बतां'. ८. 'यत्प्रति-पत्तुमिदानीं प्राप्तकालम्'.

कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः
प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः ।
[1]अभिमुखमरीन्क्रुद्धान्घ्नन्तो हताः शतमात्मजा
वहतु सगरेणोढां तातो धुरं सहितोऽम्बया ॥ ८ ॥

विपर्यये[2] त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्मः स्यात् ।[3]

( नेपथ्ये महान्[4]कलकलः । )

**गान्धारी**—( [5]आकर्ण्य । सभयम् । ) जाद[6], कहिं एदं हाहाकार-मिस्सं तूररसिदं[7] सुणीअदि ? । [ जात, कुत्रैतत् हाहाकारमिश्रं तूर्यरसितं श्रूयते ? ]

**संजयः**[8]—अम्ब, भूमिरियमेवंविधानां भीरुजनत्रासजननी महानिनादानाम् ।

**धृतराष्ट्रः**—वत्स संजय, ज्ञायतामतिभैरवः खलु विस्तारी हाहारवः । कारणेनास्य[9] महता भवितव्यम् ।

**दुर्योधनः**—तात प्रसीद । पराङ्मुखं खलु दैवमस्माकम् । यावदपरमपि किंचिदत्याहितं न श्रावयति तावदेवाज्ञापय[10] मां सङ्ग्रामावतरणाय[11] ।

---

**कलितभुवना इति** । कलितभुवनाः साधितलोकाः । 'कलिवलीकामधेनूः' इति वैयाकरणाः । हे तात, यतस्तवात्मजाः शतं शतसंख्याका हता अतोऽम्बया सह सगरेणोढां धुरं तातो वहतु । यथा सगरस्य शतं पुत्राः शत्रुणा हतास्तथा तवापीति भावः । कीदृशाः । अभिमुखं क्रुद्धान्शत्रून्घ्नन्तो नाशयन्तः । इदं विशेषणं सगरसुतेष्वपि । एवं कलितभुवना इत्याद्यपि । शतमात्मजा इति शतसंख्याया एकवचनान्तेनैव शतशब्देनोक्तत्वादात्मजपदेन बहुवचनान्तेन च तदभिधानादन्वयः । ऊढां धृताम् ॥८॥ क्षात्रवृत्तिः क्षत्रियधर्मः ॥ **गान्धारीवाक्ये** । जानीत किमिदं हाहा-

---

पाठा०-१. 'अभिमुखमरीन्क्रोधाद्घ्नन्तो हताः शतमात्मजाः'; 'अभिमुखमरीन्घ्नन्तः संख्ये हताः शतमात्मजाः'. २. 'विपर्यये तु समुल्लङ्घितः क्षात्रधर्मः स्यात्'; विपर्यये त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्मः स्यात्'. ३. 'धृतराष्ट्रः—वत्स, हितं विधीयते न पुनः क्षात्रवृत्तिरियम्'. ४. 'नादः'. ५. ( श्रुत्वा । समयम् । )'. ६. 'संजअ, हाहाकारमिस्सं'; 'संजअ, किं एदं हाहाकारमिस्सं'. ७. 'समरतूररसिदं'; 'विसमं तूररसिदं'; 'विसमं रसिदं'. ८. 'संजयः—अभूमिरियमेवंविधानां भीरुजनानाम् ।'. ९. 'अस्य' इति क्वचिन्नास्ति. १०. 'तावदेवानुमन्यस्व'. ११. 'सङ्ग्रामं प्रति'.

**गान्धारी**—जाद, मुहुत्तअं दाव मं मंदभाइणीं समस्ससेहि । [ जात, मुहूर्तकं तावन्मां मन्दभाग्यां समाश्वासय । ]

**धृतराष्ट्रः**—वत्स, यद्यपि भवान्समराय कृतनिश्चयस्तथापि रहः[1] परप्रतीघातोपायश्चिन्त्यताम् ।

**दुर्योधनः**—

[2]प्रत्यक्षं हतबान्धवस्य न परान्हन्तुं रथो मे क्षमः
किं वा तेन कृतेन तैरिव[3] कृतं यन्न [4]प्रकाश्यं रणे ।

**गान्धारी**—[5]जाद, एआइ तुमं । [6]को दे सहाअत्तणं करिस्सदि ? । [ जात, एकाकी त्वम् । कस्ते साहाय्यं करिष्यति ? । ]

**दुर्योधनः**—

[7]एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः
[8]साम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥ ९ ॥

( नेपथ्ये कलकलानन्तरम् । )

भो भो योधाः[9], निवेदयन्तु भवन्तः कौरवेश्वराय, [10]इदं महत्क-

---

कारविमिश्रं तूर्यरसितं श्रूयते ॥ अत्याहितमनिष्टम् ॥ **गान्धारीवाक्ये** । जात, मुहूर्तकमपि तावन्मामनाथां समाश्वासय । अत्र मुहूर्तकमित्यत्र स्वार्थे कः ॥ प्रतीघातो विनाशः । **प्रत्यक्षमिति** । मम रथः परान्हन्तुं न क्षम इत्यन्वयः । तेन परप्रतीघातोपायेन । कृतेन वा किम् ? । किंतु न किमपि । तैरपि कर्म कृतं निष्फलं यद्रणे न प्राकाश्येन बोधनीयम् । यदित्यत्र जात्यभिप्रायमेकवचनम् । 'तैरिव कृतम्' इति पाठे यथा तैः शत्रुभिः कृतं निष्फलं रणाप्रकाशनादित्यर्थः । **गान्धारीवाक्ये** । जात, एकाकी त्वम् । कस्ते साहाय्यं करिष्यति ? ॥ हे मातः, एकोऽहमद्वितीयः श्रेष्ठो वास्मि । कीदृशः । भवत्याः पुत्रनाशकरः । भवतीत्यत्र पुंवद्भावाभावः प्रियादिपाठात् । 'स्त्रियाः पुंवत्–' ( ६।३।३४ ) इति योगविभागाद्वा । कियन्तोऽल्पाः । केवलं दैवमेव श्लाघ्यमस्तु । मेदिनी निष्पाण्डवाऽस्तु ॥९॥ यत्र क्रिया नास्ति तत्र कृभ्वस्तयो ग्राह्या इति व्युत्पत्तिः ॥ कदनं पापं भीषणं

---

पाठा०–१. 'रहः' इति क्वचिन्नास्ति. २. 'प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः'. ३. 'तैरिह'; 'तैरपि'. ४. 'प्रकाशं'. ५. 'ता जाद'. ६. 'कोवि दे'. ७. 'नन्वेकः'. ८. 'साध्यं केवलमेतु दैवमधुना'; 'श्लाम्यं केवलमेतु दैवमधुना'; 'सह्यं केवलमेतदेवमधुना'; 'श्लाघ्यं केवलमस्तु दैवमधुना'. ९. 'जनाः'. १०. 'एतन्महत्कदनं संवृत्तम्'.

दनं प्रवृत्तम् । अलमप्रियश्रवणपराङ्मुखतया । यतः कालानुरूपं प्रतिविधातव्यमिदानीम् । तथा हि,—

त्यक्तप्राजनरश्मिरङ्कितधनुः पार्थाङ्कितैर्मार्गणै-
र्वाहैः स्यन्दनवर्त्मनां परिचयादाकृष्यमाणः शनैः ।
वार्तामङ्गपतेर्विलोचनजलैरावेदयन्पृच्छतां
शून्येनैव रथेन याति शिबिरं शल्यः कुरूञ्शल्ययन् ॥१०॥

दुर्योधनः—( श्रुत्वा । साशङ्कम् । ) आः, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् ? । कः कोऽत्र भोः ? ।

( प्रविश्य संभ्रान्तः । )

सूतः—हा, हताः स्मः । ( इत्यात्मानं पातयति । )

दुर्योधनः—अयि, कथय ।

धृतराष्ट्रसंजयौ—कथ्यतां कथ्यताम् ।

---

वा । 'कदनं भीषणे पापे' इति विश्वः । त्यक्तेति । शल्यः शिबिरं यातीत्यन्वयः । किं कुर्वन् । कुरून्कुरुबलानि शल्ययन् दुःखितानि कुर्वन् । कीदृशः । त्यक्तौ प्राजनरश्मी येन स तथा । प्राजनं 'पएना' इति ख्यातम् । 'प्राजनं तोदनं तोत्रम्' इत्यमरः । रश्मिर्वल्गा । मार्गणैर्बाणैः । 'पृषत्कमार्गणशराः' इत्यमरः । वाहैः शनैर्मन्दमाकृष्यमाणः । स्यन्दनवर्त्मनां परिचयाद्रथमार्गानुसंधानात् । पृच्छतां जनानां कृतेऽङ्गपतेर्वार्तां नेत्रजलैरावेदयन्कथयन् । तथा च कर्णो मृत इति रोदनेनैव सूचितमिति भावः ॥ १० ॥ अशनिर्वज्रम् । उभयं क्रियाविशेषणम् । उद्घोषित-

---

पाठा०—१. 'अलमिदानीमप्रियश्रवणपराङ्मुखतया । यतः कालानुरूपं प्रतिविधातव्यम् ।'. २. 'विधातव्यम्'. ३. 'न्युब्जप्रोज्झितरश्मिरङ्किततनुः', 'त्यक्तप्राजनरश्मिरङ्किततनुः'. ४. 'स्यन्दनवर्त्मनः'; 'स्यन्दनवर्त्मना'. ५. 'पृच्छते'. ६. 'कम्पयन्'. ७. 'दुर्यो०—( आकर्ण्य । सभयम् । ) आः, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । कः कोऽत्र भोः'; 'दुर्यो०—( श्रुत्वा । साशङ्कम् । ) आः, केनैतदविस्पष्टमशनिपातदारुणमुद्घोषितम् । कः कोऽत्र भोः'; 'दुर्यो०—( श्रुत्वा । सशङ्कम् । ) सूत, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । ज्ञायताम् । कोऽत्र भोः'; 'दुर्योधनः—( श्रुत्वा । साशङ्कम् । ) सूत, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । ज्ञायताम् । कः कोऽत्र भोः'; 'राजा—आः, किमेवमविस्पष्टमशनिनिर्घातदारुणमुद्घोषितम् । कः कोऽत्र भोः'. ८. 'हतोऽस्मि'. ९. '( इत्यात्मानमपातयत् । )'. १०. 'कथय कथय'. ११. 'धृतराष्ट्रसंजयौ—कथ्यतां कथ्यताम्' इति क्वचिन्नास्ति.

**सूतः**—आयुष्मन्, किमन्यत् ? ।

शल्येन यथा शल्येन मूर्च्छितः प्रविशता जनौघोऽयम् ।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन ॥ ११ ॥

**दुर्योधनः**—हा वयस्य कर्ण,—( इति मोहमुपागतः । )

**गान्धारी**—जाद, समस्सस समस्सस । [ जात, समाश्वसिहि समाश्वसिहि । ]

**संजयः**—समाश्वसितु समाश्वसितु देवः ।

**धृतराष्ट्रः**—भोः, कष्टं कष्टम् ! ।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम् ।
वत्सस्य च सुहृच्छूरो राधेयः सोऽप्ययं हतः ॥ १२ ॥

वत्स, समाश्वसिहि समाश्वसिहि । ननु भो हतविधे,—

अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्ययाहम् ।
अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधनेऽपि हि कृतो भवता [1]निराशः ॥ १३ ॥

वत्स दुर्योधन, समाश्वसिहि समाश्वसिहि । समाश्वासय तपस्विनीं मातरं च ।

---

मुच्चैः शब्दः कृतः ॥ स्मो भवामः ॥ **शल्येनेति** । हे देव, अयं जनौघः शल्येन राज्ञा हेतुभूतेन मूर्च्छितोऽस्ति । कीदृशेन । प्रविशता । अर्थाज्जनौघमेव । कर्णस्य रथमधिरूढेन च । यथा शल्येनास्त्रविशेषेण मूर्च्छितो जनौघो भवति । कीदृशं रथम् । मनोरथमिव । शून्यमित्यर्थः । आर्याच्छन्दः ॥ ११ ॥ **गान्धारीवाक्ये** । जात, समाश्वसिहि समाश्वसिहि ॥ **अन्ध इति** । अशेषितो विनष्टः । विरामो

1 'विरामः' इति टीकाकृदनुमतः पाठः ।

---

पाठा०—१. 'कथयामि किं देव'. २. 'स्वल्पेन'. ३. 'आरूढेन'. ४. हा वयस्य, हा कर्ण'. ५. '( इति मोहं गतः । )'. ६. 'समाश्वसितु समाश्वसितु महाराजः'; 'समाश्वसिहि समाश्वसिहि महाराज'. ७. 'वत्सस्य मे सुहृच्छूरः'; 'पुत्रस्य मे सुहृत्प्रेयान्'; 'वत्सस्य मे सुहृत्प्रेयान्'. ८. 'ननु भो हतविधे भरतकुलविमुख'; 'भो हतविधे'; 'भगवन्विधे'. ९. 'निःशेषिताखिलसुहृद्गुरुबन्धुवर्गः'. १०. 'विरामः'. ११. 'वत्स दुर्योधन, समाश्वासय तपस्विनीं मातरम्'; 'वत्स, समाश्वसिहि समाश्वासय चात्मानम्'.

दुर्योधनः—( लब्धसंज्ञः । )

अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम् ।
[1]सततावियुक्तमकृताप्रियं प्रियं
वृषसेनवत्सल विहाय यासि माम् ॥ १४ ॥

( [2]पुनर्मोहमुपागतः । )

( सर्वे [3]समाश्वासयन्ति । )

दुर्योधनः—

मम प्राणाधिके तस्मिन्[4]नङ्गानामधिपे हते ।
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात का कथा ॥ १५ ॥

अपि च,—

शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना [5]न च बन्धुवर्गम् ।
येनातिदुःश्रवमसाधु [6]कृतं तु कर्णे
कर्तास्मि तस्य निधनं समरे कुलस्य ॥ १६ ॥

---

निरस्तता । 'निराशः' इति पाठे आशाशून्यः ॥१३॥ **अयीति** । त्वं मे कर्णसुखदामित्यन्वयः । हे कर्ण, मयि गिरं प्रयच्छ । कीदृशः । मयि स्थिरां मुदमुद्गिरन्निव इत्येकोऽन्वयः । द्वितीयस्तु—हे कर्ण, मे मम कृते कर्णसुखदां गिरं प्रयच्छ । मुदमुद्गिरन्निव । त्वमिति शेषः । अकृताप्रियं न कृतमप्रियं यस्य तम् । प्रियं मित्रम् । वृषसेनो वत्सलो यस्य स तथा ॥ १४ ॥ **ममेति** । तस्मिन्नङ्गानामधिपे हते सत्युच्छ्वसन्नपि अहं लज्जे । श्वासावधारणेऽपि लज्जां करोमि । का कथा ? । अपितु न कापि ॥ १५ ॥ **शोचामीति** । शोच्यं शोचनार्हम् । येन कर्णेन मम कर्णेऽसाध्वयोग्यमतिदुःश्रवमत्यर्थदुःखश्राव्यं वचो न कृतं तस्य

---

1 अत्र मञ्जुभाषिणी वृत्तम्; तल्लक्षणं च 'सजसा जगौ च यदि मञ्जुभाषिणी' इति । 2 'येनातिदुःश्रवमसाधु कृतं न कर्णे कर्णस्य तस्य निधने निधनं कुलस्य' इति टीकानुगुणः पाठः ।

---

पाठा०-१. 'सततावियुक्तमकृताप्रियं कथं'; 'अनुजैर्वियुक्तमकृताप्रियं प्रियं'. २. ( इति पुनर्मोहमुपगतः । )'. ३. 'आश्वासयन्ति'. ४. 'अङ्गानामीश्वरे गते'; 'अङ्गानामीश्वरे हते'. ५. 'हतबन्धुवर्गम्'. ६. 'कृतं च कर्णे कर्तास्मि तस्य निधनं समरे कुलस्य'.

गान्धारी—जाद, सिढिलेहि दाव क्खणमेत्तं बाप्पमोक्खं ।
[ जात, शिथिलय तावत्क्षणमात्रं बाष्पमोक्षम् । ]

धृतराष्ट्रः—वत्स, क्षणमात्रं परिमार्जयाश्रूणि ।

दुर्योधनः—

मामुद्दिश्य त्यजन्प्राणान्केनचिन्न निवारितः ।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्यते ॥ १७ ॥

सूत, केनैतदसंभावनीयमस्मत्कुलान्तकरणं कर्म कृतं स्यात् ? ।

सूतः—आयुष्मन्, एवं किल जनः कथयति,—

भूमौ[1] निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य ।
निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य ॥ १८ ॥

दुर्योधनः—

कर्णाननेन्दुस्मरणात्क्षुभितः शोकसागरः ।
वाडवेनेव शिखिना पीयते क्रोधजेन मे ॥ १९ ॥

तात, अम्ब, प्रसीदतम् ।

---

कर्णस्य निधने सति मम कुलस्य निधनं विनाश इत्यर्थः । दुःश्रवमिति विशेषणद्वारा विशेष्यलाभः । 'ईषद्दुःसुषु–' ( ३।३।१२६ ) इत्यादिना खल् ॥ १६ ॥ **गान्धारीवाक्ये** । जात, शिथिलय तावत्क्षणमात्रं बाष्पमोक्षम् । अत्र मोक्षस्त्यागः ॥ **मामिति** । न निवारितो य इति शेषः । तत्कृते तं लक्ष्यीकृत्याश्रूणि त्यजतो मे किं वार्यते ? । न वारयितुमर्हतीति भावः ॥ १७ ॥ असंभावनीयं दुष्करम् ॥ **भूम्यामिति** । किल प्रसिद्धौ । तस्येन्द्रसूनोर्र्जुनस्य शरैः स कर्णो निहतः । कीदृशः । भूमौ निमग्नरथाङ्गः । 'चक्रं सैन्यरथाङ्गयोः' इति विश्वः । चक्रायुधः कृष्णः । कृतान्तो यमः ॥ १८ ॥ **कर्णेति** । वाडवेन वडवाजातेन ।

---

1 'भूम्यां' इति जगद्धरानुमतः पाठ इति प्रतीकात् प्रतीयते ।

---

पाठा०–१. 'क्षणमेकं त्यजाश्रूणि'. २. 'केनापि न स वारितः'; 'केनचिन्न स वारितः'. ३. 'सूत, केनेदमसंभावितमस्मत्कुलान्तकरं कर्म कृतं स्यात्'; 'धृतराष्ट्रः—केनेदमसंभावितमस्मत्कुलान्तकरं कर्म कृतम्'. ४. 'आयुष्मन्' इति क्वचिन्नास्ति. ५. 'भूम्यां निमग्नचक्रस्तु स चक्रायुधसारथेः । संख्ये किल हतो बाणैरस्मत्सेनान्तकारिणः ॥'. ६. 'दुर्योधनः—कष्टं भोः कष्टम् । कर्णाननेन्दुस्मरणात्'. ७. 'अम्ब, तात, प्रसीदतम्'.

[1]ज्वलनः शोकजन्मा मामयं दहति दुःसहः ।
समानायां विपत्तौ मे [2]वरं संशयितो रणः ॥ २० ॥

धृतराष्ट्रः—([3]दुर्योधनं परिष्वज्य रुदन् ।)

[4]भवति तनय लक्ष्मीः साहसेष्वीदृशेषु
[5]द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम् ।
[6]अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड
[7]छलबहुलमरीणां सङ्गरं हा हतोऽस्मि ॥ २१ ॥

गान्धारी—[8]जाद, तेण एव्व सुदसदकदंतेण [9]विओदलेण समं समलं मग्गसि । [ जात, तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे । ]

दुर्योधनः—[10]तिष्ठतु तावद्वृकोदरः,—

पापेन येन हृद[11]यस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः ।
पुत्रस्तवाम्ब तव तात [12]नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥ २२ ॥

---

शिखिना अग्निना ॥ १९ ॥ **ज्वलन इति** । समानायां तुल्यायां दाहमरणयोर्विपदि सत्याम् । संशयितोऽपि जये भङ्गे च संदिग्धोऽपि । रणो वरं श्रेष्ठ इत्यर्थः । वरं शब्दो मनागर्थे वा ॥ २० ॥ **भवतीत्यादि** । हे तनय पुत्र, ईदृशेषु साहसेषु लक्ष्मीर्भवति । तदुक्तम्—'न साहसमनारुह्य नरो भद्राणि पश्यति' इति । द्रवति चपलं भवति । भीमं भयानकम् । उत्प्रेक्ष्य विचिन्त्य । हे मानशौण्ड अभिमानख्यात, ते चेष्टितमनिकृतिनिपुणं परक्षेपाकुशलं परभर्त्सनाकुशलं वा अस्तीति शेषः । 'निकृतिर्भर्त्सने क्षेपे' इति विश्वः । अरीणां सङ्गरं युद्धं छलबहुलमस्ति । अतो हा कष्टम् । हतोऽस्मि ॥ २१ ॥ **गान्धारीवाक्ये** । जात, तेनैव सुतशतकृतान्तेन वृकोदरेण सह समरं प्रार्थयेथाः ॥ **पापेनेति** । हे अम्ब, तव पुत्रः

---

पाठा०-१. 'शोकज्वलनजन्मा मां तापो दहति दुःसहः'. २. 'वरं संशयितुं रणे'; 'वरं संशयनं रणे'; 'वरं संशयतो रणः'; 'वरं संशयतो रणम्'. ३. '( दुर्योधनं परिष्वज्य ।)'; '(पुत्रं परिष्वजन् रुदन् ।)'. ४. 'भवति तनय सत्यं संशयः साहसेषु'. ५. 'दहति हृदयमेतत्'; 'द्रवति च हृदयं मे'. ६. 'अनिकृतनिपुणं'; 'प्रतिकृतिनिपुणम्'. ७. 'छलबहलम्'. ८. 'जाद' इति क्वचिन्नास्ति. ९. 'विओदलहदएण'. १०. 'भवतिष्ठतु'; 'अम्ब, तिष्ठतु'. ११. 'हृदयस्थमनोरथः'. १२. 'ममैकमित्रं'.

सूत, अलमिदानीं कालातिपातेन । सज्जं मे रथमुपाहर[1] । भयं चेत्पाण्डवेभ्यस्तिष्ठ[2] । गदामात्रसहाय एव समरभुवमवतरामि[3] ।

सूतः—अलमन्यथा संभावितेन । अयमहमागत एव[4] । (इति निष्क्रान्तः ।)[5]

धृतराष्ट्रः—वत्स दुर्योधन, यदि स्थिर एवास्मान्दग्धुमयं ते[6] व्यवसायस्तत्संनिहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम् ।

दुर्योधनः—नन्वभिषिक्त एव[7] ।

गान्धारी—जाद[8], कदरो उण सो जस्सिं आसं ओलंबिस्सं[9] ? । [ जात, कतरः पुनः स यस्मिन्नाशामवलम्बिष्ये ? । ]

धृतराष्ट्रः—[10]किं वा शल्य उत वाश्वत्थामा ? ।

संजयः[11]—हा कष्टम्,—

गते[12] भीष्मे हते द्रोणे कर्णे च विनिपातिते ।
आशा बलवती राजञ्शल्यो जेष्यति पाण्डवान् ॥ २३ ॥

दुर्योधनः—[13]किं वा शल्येनोत वाश्वत्थाम्ना ? ।

कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।
अनिवारितसंपातैरयमात्माश्रुवारिभिः[14] ॥ २४ ॥

---

कर्णः । हे तात, तव नयैकशिष्यः कर्णः । येन पापेन हत इत्यन्वयः ॥ २२ ॥ अतिपातोऽतिक्रमः ॥ **गान्धारीवाक्ये** । जात, कतरः स यस्मिन्नाशां समवलम्बिष्ये ? । अत्र कतरः क इत्यर्थः । आशां प्रत्याशाम् ॥ **गत इति** । गते शरशय्यामिति शेषः । विनिपातिते घातिते ॥ २३ ॥ **कर्णेति** । अयं ममात्मा कर्णालिङ्गनदायी कर्णानुयायीत्यर्थः । अश्रुवारिभिर्लक्षितः । लक्षणे तृतीया । कीदृशैः ।

---

पाठा०—१. 'उपहर'. २. 'त्वं चेद्बिभेषि पाण्डवेभ्यः'; 'त्वं चेद्बिभ्यत्पाण्डवेभ्यः' । ३. 'समरं'. ४. 'अयमहमागतोऽस्मि'; 'अयमागतोऽस्मि'. ५. '(नेपथ्ये कलकलः ।) दुर्योधनः—अनुमोदध्वमनुमोदध्वम् । पराङ्मुखोऽस्माकं विधिः'. ६. 'यदि स्थिर एवायं निश्चयस्तत्तथा संनिहितेषु'; 'यदि स्थिर एष ते समराध्यवसायस्तत्तथा संनिहितेषु'. ७. 'एवेति'. ८. 'जाद' इति क्वचिन्नास्ति. ९. 'जस्सिं आसा अवलंबीअदु'; 'जहिं एदं हदासं ओअंबिस्सं'. १०. 'किं शल्योऽथवाश्वत्थामा वा'. ११. 'संजयः—हा कष्टम्' इत्यस्मादारभ्य 'शल्यो जेष्यति पाण्डवान्' इत्यन्तं पुस्तकान्तरे नास्ति. १२. 'हते'. १३. 'किं वा शल्येनोत वाश्वत्थाम्ना' इति क्वचिन्नास्ति. १४. 'अस्रवारिभिः'.

( नेपथ्ये[1] कलकलं कृत्वा । )

भो भोः कौरवबलप्रधानयोधाः, अलमस्मानवलोक्य भयादितस्ततो गन्तुम्[2]। कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति ।

( सर्वे ससंभ्रममाकर्णयन्ति । )

( प्रविश्य संभ्रान्तः । )

सूतः—आयुष्मन्,

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।

सर्वे[3]—कश्च कश्च ? ।

सूतः—

स[4] कर्णारिः स च क्रूरो वृककर्मा[5] वृकोदरः ॥ २५ ॥

गान्धारी—( सभयम् । ) जाद, किं एत्थ[6] पडिपज्जिदव्वं ? । [ जात, किमत्र प्रतिपत्तव्यम् ? । ]

दुर्योधनः—ननु[7] संनिहितैवेयं गदा ।

गान्धारी—हा हदम्हि मंदभाइणी[8] । [ हा हतास्मि मन्दभागिनी । ]

दुर्योधनः—अम्ब[9], अलमिदानीं कार्पण्येन । संजय[10], रथमारोप्य पितरौ शिबिरं प्रतिष्ठस्व[11]। समागतो[12]ऽस्माकं शोकापनोदी जनः ।

धृतराष्ट्रः—वत्स, क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे[13] ।

दुर्योधनः—तात, किमनेनोपलब्धेन[14] ? ।

---

अनिवारितासारैः । 'धारासंपात आसारः' इत्यमरः । तथा च मर्तव्यं वा मयार्जुनवधो वा कर्तव्य इति भावः ॥२४॥ **प्राप्ताविति** । इतस्ततः सर्वत्र । कर्णारिरर्जुनः । वृको 'हुण्डार' इति ख्यातः । तद्वद्युद्धकर्म यस्य स वृककर्मा । वृको मृगविशेषो वा । 'कोकस्त्वीहामृगो वृकः' इत्यमरः । 'वृको मृगे तथोरगे' इति धरणिः ॥२५॥ **गान्धारीवाक्ये** । जात, किमत्र कर्तव्यम् ? । 'प्रतिपत्तव्यम्' इत्यपि पाठः । हा हतास्मि

---

1 अत्र उद्वेगाभिधो गर्भसन्धिः, तल्लक्षणं यथा—'नृपादिजनिता भीतिरुद्वेगः परिकीर्तितः' इति ।

---

पाठा०—१. '( नेपथ्ये । )'. २. 'गमनेन'. ३. 'सर्वे–कश्च ।'. ४. 'कर्णस्यारिः'. ५. 'भीमकर्मा'. ६. 'एत्थ संपदं पडिपज्जिदव्वं'; 'एत्थ कादव्वं'. ७. 'अम्ब, ननु'. ८. 'हा हदम्हि अहं मंदभाइणी'; 'हा हदम्हि संपदं पावा'. ९. 'अम्ब' इति कचिन्नास्ति. १०. 'संजय संजय'. ११. 'प्रस्थापय'; 'प्रवेशय'; 'प्रतिप्रवेशय'. १२. 'प्राप्तोऽसच्छोकापनोदप्रणयी जनः'. १३. 'उपलभामहे'. १४. 'उपलब्धेन । तद्गम्यताम् ।'; 'उपलम्भेन । तद्गम्यताम् । ( धृतराष्ट्रो गान्धारी च किंचिद्दूरवा तिष्ठतः )'.

( ततः प्रविशतो भीमा[1]र्जुनौ । )

**भीमः**—भो भोः [2]सुयोधनानुजीविनः, [3]किमिति संभ्रमादयथायथं चरन्ति भवन्तः ? । [4]कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः । [5]अलमावयोः शङ्कया,—

कर्ता द्यूतच्छलानां[1] [6]जतुमयशरणोद्दीपनः सोऽभि[7]मानी
कृष्णाकेशोत्तरीय[8]व्यपनयनमरुत्पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न[9] रुषा द्रष्टुमभ्यागतौ स्वः २६

**धृतराष्ट्रः**—संजय, दारुणः [10]खलूपक्षेपः पापस्य ।

**संजयः**—तात, कर्मणा [11]कृतनिःशेषविप्रियाः संप्रति वाचा व्यवस्यन्ति ।

**दुर्योधनः**—सूत, [12]कथय [13]गत्वोभयोरयं तिष्ठतीति ।

**सूतः**—[14]यथाज्ञापयति देवः । ( [15]तावुपसृत्य । ) [16]ननु भो वृकोदरार्जुनौ, एष महाराजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्टस्ति[17]ष्ठति ।

---

मन्दभागिनी ॥ प्रतीक्षस्व क्षमस्व । अनयोर्भीमार्जुनयोः । भावमभिप्रायम् । अयथायथमितस्ततः । **कर्तेति** । असौ स दुर्योधनः क्वास्ते तत्कथयत । रुषा तं द्रष्टुं नाभ्यागतौ स्वः । सदनं गृहम् । व्यपनयनं दूरीकरणम् । मरुद्वातः । मित्रं स इत्यत्र मित्रशब्दस्याजहल्लिङ्गतयान्वयः ॥ २६ ॥

---

1 अत्र छलनाभिधं वीथ्यङ्गम्; तल्लक्षणं चोक्तं दशरूपके—'प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम् ।' इति ।

---

पाठा०–१. 'रथारूढौ भीमार्जुनौ'. २. सुयोधनानुजीविनो योधाः' ३. 'किमिति संभ्रमात्संचरन्ति भवन्तः'; 'किमिति ससंभ्रममयथायथं संचरन्ति भवन्तः'; 'किमिति ससंभ्रममयथायथं संचरन्ति भवन्तः'. ४. 'कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः' इति क्वचिन्नास्ति. ५. 'अलमावयोः शङ्कया' इति क्वचिन्नास्ति. ६. 'जतुमयसदनोद्दीपनः'. ७. 'अतिमानी'. ८. 'व्यपनयनपटुः', ९. 'परुषाः द्रष्टु°'. १०. 'खल्वाक्षेपः पापस्य'; 'खलु प्रक्षेपः पापयोः'. ११. 'कृतनिःशेषविप्रियौ संप्रति वाचा व्यवस्यतः'; 'कृतनिःशेषेऽपि संप्रति विप्रियं वाचा व्यवस्यन्ति'. १२. 'ब्रूहि'. १३. 'गत्वानयोरयं महाराजस्तिष्ठतीति'. १४. 'यथाज्ञापयसि'; 'यथाज्ञापयसि देव'. १५. '( इति तावुपसृत्य । )'. १६. 'ननु' इति क्वचिन्नास्ति. १७. 'तिष्ठतीति'.

**अर्जुनः**—आर्य, प्रसीद। न युक्तं पुत्रशोकोपपीडितौ[1] पितरौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम्। तद्गच्छावः।

**भीमः**—मूढ[2], अनुल्लङ्घनीयः[3] सदाचारः[4]। न युक्तमनभिवाद्य गुरून्[5]गन्तुम्। (उपसृत्य।) संजय, पित्रोर्नमस्कृतिं श्रावय। अथवा[6] तिष्ठ। स्वयं विश्राव्य नामकर्मणी वन्दनीया गुरवः।

**अर्जुनः**—(उपगम्य[7]।) तात[1], अम्ब,—

> सकल[2]रिपुजयाशा यत्र बद्धा सुतैस्ते
> तृणमिव परिभूतो यस्य गर्वेण लोकः।
> रणशिरसि निहन्ता तस्य राधासुतस्य
> प्रणमति पितरौ वां मध्यमः[8] पाण्डवोऽयम्॥ २७॥

**भीमः**—

> चूर्णिता[9]शेषकौरव्यः क्षीबो दुःशासनासृजा।
> भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति[10]॥ २८॥

उद्वेजयितुमित्यत्र ण्यन्तत्वाद्गुणः॥ सदाचारः शिष्टाचारः। 'समुदाचारः' इति पाठे सद्व्यवहार इत्यर्थः। नमस्कृतिं नमस्कारम्। **सकलेति**। वां पितरावयं मध्यमः पाण्डवोऽर्जुनः प्रणमति। 'वाम्' इति द्वितीयाद्विवचनान्तम्॥२७॥ **चूर्णितेति**। क्षीबो मत्तः। भङ्क्ता भङ्गकर्ता॥२८॥ अपकृतमपकारः कृतः। वीरा जयिनो हताश्च

1 इत आरभ्य 'चूर्णिताशेषकौरव्यः-' (५।२८) इति श्लोकान्तं यावत् विजयबीजानुगतस्वगुणाविष्करणात् विचलनाख्यं अवमर्शसन्ध्यङ्गम्; तल्लक्षणं दशरूपके 'विकत्थना विचलनम्' इति। 2 'सकलरिपुजयाशा-' इत्यत आरभ्य 'द्रक्ष्यन्ति नचिरात्सुप्तं' (५।३४) इति श्लोकावधि भीमदुर्योधनयोरन्योन्यवाक्याधिक्योक्तेः अधिबलाख्यं वीथ्यङ्गम्; तल्लक्षणं यथा—'अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाऽधिबलं भवेत्' इति। 3 अत्र व्यवसायाख्यं विमर्शसन्ध्यङ्गम्; तल्लक्षणं यथा-'व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः' इति।

पाठा०–१. 'पुत्रशोकपीडितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुम्'; 'पुत्रशोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुम्'; 'पुत्रशोकपीडितौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम्'. २. 'पण्डितंमन्य'; 'अयि पण्डित'. ३. 'अलङ्घनीयः'. ४. 'समुदाचारः'. ५. 'स्वगुरुं'. ६. 'अथवा तिष्ठ। स्वयमेव श्रावयावः। (इति रथादवतरतः।) भीमः—विश्राव्य स्वकर्म नाम च वन्दनीया गुरवः'. ७. '(उपसृत्य।)' ८. 'मध्यमः पाण्डुपुत्रः'; 'फाल्गुनः पाण्डवोऽयम्'. ९. 'निहताशेषकौरव्यः' १०. 'शिरसा नतः'.

**धृतराष्ट्रः**—दुरात्मन्वृकोदर, न खल्विदं भवतैव केवलं सपत्नानामपकृतम् । यावत्क्षेत्रं तावत्समरविजयिनो जिता हताश्च वीराः । तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि ? ।

**भीमः**—तात, अलं मन्युना,—

कृष्णा केशेषु कृष्टा तव सदसि पुरः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृशशलभकुलावज्ञया येन दग्धाः ।
एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पा-
त्पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव २९

**दुर्योधनः**—अरे रे मरुत्तनय, किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे ? । अपि च,—

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव दर्पः ॥ ३० ॥

---

भवन्तीति क्षात्रधर्मोऽयम् । विकत्थना उपहासः । **कृष्णेति** । पुरः पाण्डवानामेव । पाण्डवानां वधूः कृष्णा । ते सर्वेऽनेनार्जुनेन दग्धा इत्यन्वयः । कृशं यच्छलभकुलं तद्वदवज्ञयापमानेनेत्यर्थः । तेनाहं त्वां श्रावये । खलु निश्चये । न भुजबलश्लाघया श्रावये । नापि दर्पाच्छ्रावये ॥ २९ ॥ **कृष्टेति** । तव भीमस्य । तव चार्जुनस्य । तस्य राज्ञो युधिष्ठिरस्य । तयोर्नकुलसहदेवयोः । एतेषां प्रत्यक्षं

---

1 इत आरभ्य 'द्रक्ष्यन्ति नचिरात्–' (५।३४) इति श्लोकान्तं यावत् संरब्धयोः भीमदुर्योधनयोः स्वशक्त्युक्तेर्विरोधनाख्यं अवमर्शसन्ध्यङ्गम्; तल्लक्षणं तु—'संरब्धानां विरोधनम्' इति । 2 अत्र संफेटाख्यं नाटकाङ्गम्; तल्लक्षणं चोक्तं दर्पणे—'संफेटो रोषभाषणम्' इति ।

---

पाठा०–१. 'दुरात्मन्वृकोदर, मा तावद्विकत्थयात्मानम्, 'न खल्विदं'. २. 'क्षात्रं'. ३. 'अलमलं मन्युना'; 'अलमिदानीं मन्युना'. ४. 'कृष्टा केशेषु कृष्णा'. ५. 'वधूः'. ६. 'कृतशलभकुलावज्ञया'. ७. 'तेन'; 'अनेन'. ८. 'तात, त्वां श्रावयेऽहं'. ९. 'भव त्वम्'. १०. 'पुरः'. ११. 'अतिनिन्दितव्यमपि'; 'निन्दितमपि'. १२. 'क्ष्मापतीनां'. १३. 'तव किमपकृतं'; 'कथमनपकृतं'. १४. 'वीर्यातिसार–'; 'वीर्यातिभार–'. १५. 'आः दुरात्मन्, एष न भवसि । (इति सक्रोधमुत्थाय हन्तुमिच्छति । धृतराष्ट्रो धृत्वोपवेशयति ।)'.

( भीमः क्रोधं नाटयति । )

**[1]अर्जुनः**—आर्य, प्रसीद । किमत्र क्रोधेन ?

अप्रियाणि [2]करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का [3]व्यथा ॥ ३१ ॥

**भीमः**—अरे रे [4]भरतकुलकलङ्क,—

[5]अत्रैव किं न विशसेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन् ।
विघ्नं [6]गुरुर्न कुरुते यदि [7]मत्कराग्र-
निर्भिद्यमानरणितास्थनि[8] ते शरीरे ॥ ३२ ॥

अन्यच्च मूढ,—

[9]शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलवि[10]घटने यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपतेः [11]कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥ ३३ ॥

---

भूपतीनां च प्रत्यक्षम् । अनुबन्धे प्रकरणे । ये नरेन्द्रा हतास्तैः किमपकृतमित्यन्वयः । द्रविणं धनम् ॥३०॥ **अप्रियाणीति** । एष वाचा अप्रियाणि करोति । कर्मणा न शक्तोऽसमर्थ इत्यन्वयः । यद्वा अशक्त एष वाचा अप्रियाणि करोति न कर्मणेत्यन्वयः । 'प्रलापोऽनर्थकं वचः' इत्यमरः ॥ ३१ ॥ **अत्रैवेति** । अहं भवन्तं किमत्रैव न विशसेयं न विनाशयामि ? । यदि ते शरीरे गुरुर्विघ्नं न कुरुत इत्यन्वयः । विशसेयमिति 'शसु हिंसायाम्' लिङि उत्तमपुरुषैकवचने रूपम् । हे कटुप्रलापिन् । कीदृशे शरीरे । मत्कराग्रैर्निर्भिद्यमानान्यत एव रणितानि शब्दितान्यस्थीनि यत्र तादृशे । 'कीकसं कुल्यमस्थि च' इत्यमरः ॥ ३२ ॥ **शोकमिति** । शोकैर्यथा स्त्री रुदति तथा यत्त्वं नयनसलिलं त्याजितोऽसि ।

---

1 इत आरभ्य 'अप्रियाणि करोत्येष-' (५।३१) इति श्लोकान्तेन छादनाख्यो विमर्शसन्धिः; तल्लक्षणं चोक्तं दर्पणे—'तदाहुश्छादनं पुनः । कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ।' इति ।

---

**पाठा०**–१. 'अर्जुनः—( निवारयन् । ) आर्य, प्रसीद प्रसीद । किमत्र क्रोधेन'; 'अर्जुनः—आर्य, किमत्र क्रोधेन'. २. 'करोत्येव'. ३. 'कथा'. ४. 'भरतकुलेन्दुकलङ्क'. ५. 'अत्रैव किं न विसृजेयम्'; 'अद्यैव किं न विसृजेयम्'. ६. 'गुरू न कुरुतः'. ७. 'मद्गदाग्र–'; 'मद्गदाग्रैः'. ८. 'अस्थिनि'. ९. 'शोकैः स्त्रीवन्नयनसलिलं'; 'शोकं स्त्रीवन्नयनसलिलं'. १०. 'विदलने'. ११. 'कारणा'.

**दुर्योधनः**—दुरात्मन्, [१]भरतकुलापसद, पाण्डवपशो, नाहं भवानिव विकत्थनाप्रगल्भः । किंतु,—

द्रक्ष्यन्ति नचिरात्सुप्तं बान्धवास्त्वां[२] रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽ[३]स्थिवे[1]णिकां[४]भीमभूषणम् ॥ ३४ ॥

**भीमः**—( विहस्य । ) [५]यद्येवं नाश्रद्धेयो भवान् । तथापि प्रत्यासन्नमेव कथयामि ।

पीनाभ्यां मद्भुजाभ्यां [६]भ्रमितगुरुगदाघातसंचूर्णितोरोः
क्रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वः प्रभाते ।
त्वन्[७]मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेना[८]नखाग्रं
[९]स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥ ३५ ॥

---

'शोकम्' इति पाठे नेत्रजलैर्यथा स्त्री शोकं त्याज्यते तथा त्वमपि त्याजित इत्यर्थः । यथा स्त्री रुदित्वा शोकं त्यजति तथा त्वयापि कृतमिति भावः । भीमसेने क्रुद्धे सति तव कुनृपस्य जीवितस्यैतत्कारणमासीद्यद्रोदनं भ्रातृवधदर्शनं च नाम । उभयं चेद्वृत्तं तदा मया त्वमपि घातयितव्य इति भावः ॥ ३३ ॥ **द्रक्ष्यन्तीति** । नचिरादचिरम् । श्रेणिका परम्परा । 'वेणिका' इति पाठे वेणिका प्रवाहः । 'वेणी तु केशवेशे स्यात्प्रवाहेऽपि निगद्यते' इति धरणिः । अत एव त्रिवेणीति । 'कणिका' इति पाठस्तु सुगम एव । सैव भयानकालंकरणं यत्र तम् । नृणां पुर इति शेषः ॥ ३४ ॥ **पीनाभ्यामिति** । श्वः 'कल्हि' । 'ह्यो गतेऽनागतेऽह्नि श्वः' इत्यमरः । अनेन चन्दनेनाहमक्तः संबद्धः । स्वयं भीमं भूषणमनुभवितास्मि । त्वं मुख्यो यत्र तादृशं यद्भ्रातृचक्रं तस्योद्दलनेन खण्डनेन यद्गलत्स्रवदसृक् रक्तं तदेव चन्दनं तेन । मुख्येत्यनेन तस्यापि वधः सूचितः । तथा च त्वदादिसर्वभ्रातृवध इति भावः । स्त्यानेन पिण्डीभूतेन । आनखाग्रान्नखा-

---

1 अत्र '°श्रेणिकाभीमभूषणम्' इति टीकासंमतः पाठः ।

---

**पाठा०**—१. 'भरतकुलाधम, द्यूतदास, पाण्डवपशो'; 'भरतकुलापसद, द्यूतदास, पाण्डवपशो'. २. 'पाण्डवास्त्वां रणाजिरे'. ३. 'असृग्वेणिकाभीमभूषणम्'; 'अस्थिवेणिकाभङ्गभीषणम्'. ४. 'कणिका'. ५. 'यद्येवं न श्रद्धेयो भवांस्तथापि प्रत्यासन्नमेव कथयामि'; 'यदि न श्रद्दधते तदा प्रत्यासन्नमेव कथयामि'; 'यद्येवं श्रद्धत्ते भवांस्तदा प्रत्यासन्नमेव कथयामि'. ६. 'भ्रमितगुरुगदावशसंचूर्णितोरोः'. ७. 'तन्मूर्ख भ्रातृचक्रोद्गमन–'. ८. 'आनखाग्रात्'. ९. 'स्त्यानेनार्द्रेण वाक्षणोः स्वयमनुभविता भूषणं भीमसेनः'; 'स्त्यानेनानेन सिक्तं स्वयमनुभविता भूषणं भीमसेनः'.

( नेपथ्ये । )

भो भो भीमसेनार्जुनौ, एष खलु निहताशेषारातिचक्र आक्रान्तपरशुरामाभिरामयशाः प्रतापतापितदिङ्मण्डलस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति ।

उभौ—किमाज्ञापयत्यार्यः ? ।

( पुनर्नेपथ्ये । )

कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-
नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।
मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ३६

उभौ—यदाज्ञापयत्यार्यः । ( इति निष्क्रान्तौ । )

( नेपथ्ये । )

अरे रे गाण्डीवाकर्षणबाहुशालिन्, अर्जुन, अर्जुन, क्वेदानीं गम्यते ? ।

---

प्रपर्यन्तमक्त इत्यन्वयः ॥३५॥ उद्धतो दुर्वृत्तः ॥ कुर्वन्त्विवति । आप्ता बान्धवादयः । वह्निसात् कार्त्स्न्येन वह्निदेयान् । 'विभाषा सातिः कार्त्स्न्ये' (५।४।५२) इति देयार्थे सातिप्रत्ययः । भारान् संघान् । उन्मिश्रं युक्तम् । मार्गन्तां प्रार्थयन्ताम् । जना इति शेषः । रणशिरसि गहने व्याप्ते । असौ सूर्यो मम रिपुभिः सहास्तं गतः । यथा शत्रवोऽस्तं गतास्तथा रविरपीति भावः । अत्र यद्यपि शत्रुपक्षेऽस्तगमनं विनाशः सूर्यपक्षेऽदृश्यत्वं तथापि शब्दसाम्यात्प्रयोगः । यद्वा उभयत्राप्यस्तगमनमदृश्यत्वमात्रं विवक्षितम् । तच्चैकत्र मरणेन, अन्यत्र अन्यगमनेनेत्यन्यदेतत् । संह्रियन्तामुपसंह्रियन्ताम् ॥ ३६ ॥ संभाव्यतां सहर्षीक्रियताम् ॥ गान्धारी-

---

1 अत्र विरोधस्य प्रशमनात् शक्त्याख्यं विमर्शसन्ध्यङ्गम्, तल्लक्षणं चोक्तं दर्पणे—'शक्तिः पुनर्भवेत् । विरोधस्य प्रशमनम्' इति ।

---

पाठा०–१. 'अयं'. २. 'उद्धृत्तारातिचक्रः'. ३. 'विक्रमाक्रान्त–'. ४. 'प्रतापतापितदिङ्मण्डलः स्थापितस्वजनः श्रीमानजातशत्रुः'; 'प्रतापतापितदिङ्मण्डलः श्रीमानजातशत्रुः'. ५. 'कुर्वन्त्वत्राहतानां'. ६. 'नृणां'. ७. 'अस्रैर्मिश्रं'. ८. 'मृग्यन्तां'. ९. 'असौ'. १०. 'सज्जयन्तां'. ११. 'आः'. १२. 'क्वेदमधुना गम्यते'.

कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवतां शूरशून्ये रणेऽस्मिन् ।
स्पर्शं स्मृत्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरुपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥३७॥

धृतराष्ट्रः—( आकर्ण्य सहर्षम् । ) वत्स दुर्योधन, द्रोणवधपरिभवोद्दीपितक्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्चायमश्वत्थामा प्राप्तः । तत्प्रत्युपगमनेन तावदयं संभाव्यतां वीरः ।

गान्धारी—जाद, पच्चुग्गच्छ एदं महाभाअं । [ जात, प्रत्युद्गच्छैनं महाभागम् । ]

दुर्योधनः—तात, अम्ब, किमनेनाङ्गराजवधाशंसिना वृथायौवनशस्त्रबलभरेण ? ।

धृतराष्ट्रः—वत्स, न खल्वस्मिन्काले पराक्रमवतामेवंविधानां वाङ्मात्रेणापि विरागमुत्पादयितुमर्हसि ।

( प्रविश्य । )

अश्वत्थामा—विजयतां कौरवाधिपतिः ।

दुर्योधनः—(उत्थाय ।) गुरुपुत्र, इत आस्यताम् । (इत्युपवेशयति ।)

---

वाक्ये । जात, प्रत्युद्गच्छैनं महाभागम् ॥ कर्णेति । अहानीत्यत्र अत्यन्तसंयोगे द्वितीया । तेनाहानि व्याप्येत्यर्थः । अत्र रणे भवतां विक्रान्तं पराक्रम आसीत् । विक्रान्तमिति भावे क्तः । कीदृशे । वन इव शूरशून्ये । अहमुपेतोऽस्मि । कीदृशः । द्रौणिर्द्रोणस्यापत्यम् । 'अत इञ्' ( ४।१।९५ ) इति इञ् प्रत्ययः । किं कृत्वा । पितुरुत्तमाङ्गे स्पर्शं स्मृत्वा । अहं कीदृशः । अनवजितो न केनापि जितः ॥ हेतिरस्त्रम् । कल्पः प्रलयः । घस्मरो नाशकः ॥३७॥ इत आगम्यतामिहोपविशतु ।

---

पाठा०-१. 'विजयधनुः'. २. 'भवतः'; 'भवता'. ३. 'अनवहितन्यस्तहेतेः'; 'अनवहितत्यक्तहेतेः'. ४. 'परिभवोद्दीप्तक्रोधपावकः'. ५. 'अमरोपमः' इति क्वचिन्नास्ति. ६. 'अयं महात्माश्वत्थामा प्राप्तः । तत्प्रत्युपगमनेन तावदयं संभाव्यतां महावीरः'; 'अयं महात्मा प्रत्युपगमनेनापि संभाव्यताम्'. ७. 'वृथायौवनबलशस्त्रभरेण'; 'अस्त्रशिक्षाबललाभभारेण'; 'वृथायोधेन समालोकितेन'. ८. 'वचनमात्रेणैवं'; 'वचनमात्रेणैव'; 'वचनमात्रेण'. ९. 'विरागतामुत्पादयितुमर्हसि'; 'विरागयितुमर्हसि'. १०. 'आगम्यताम्'.

अश्वत्थामा—राजन्दुर्योधन,—

कर्णेन कर्णसुभगं बहु यत्तदुक्त्वा
यत्सङ्गरेषु विहितं विदितं त्वया तत् ।
द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्र-
मेषोऽधुना त्यज नृप प्रतिकारचिन्ताम् ॥ ३८ ॥

दुर्योधनः—(साभ्यसूयम् ।) आचार्यपुत्र,—

अवसानेऽङ्गराजस्य योद्धव्यं भवता किल ।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः कः सुयोधनः ॥ ३९ ॥

अश्वत्थामा—(स्वगतम् ।) कथमद्यापि स एव कर्णपक्षपातः ? । अस्मासु च परिभवः ? । (प्रकाशम् ।) राजन्कौरवेश्वर, एवं भवतु । (इति निष्क्रान्तः ।)

धृतराष्ट्रः—वत्स, क एष ते व्यामोहो यदस्मिन्नपि काले एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि ।

दुर्योधनः—किमस्यांप्रियमनृतं च मयोक्तम् ? । किं वा नेदं क्रोधस्थानम् । पश्य,—

अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम् ।

कर्णेनेति । एष द्रौणिरभ्यमित्रमराति लक्ष्यीकृत्याधुनापतित आगतः । अतो हे नृप, प्रतीकारचिन्तां त्यज । मयैव सर्वत्र प्रतीकारः कर्तव्य इति भावः । कीदृशोऽहम् । अधिगता ज्या यत्रेदृशं धनुर्यस्य सः । अत्र 'धनुषश्च' (५।४।१३२) इति विकल्पेनानङ् ॥३८॥ अवसान इति । किल निश्चये । कः कर्ण इति । तथा च कर्णसुयोधनयोर्न विशेष इति भावः ॥ ३९ ॥ अकलितेति । विपन्नं विन-

पाठा०-१. 'अश्व०—(सास्रम् ।) राजन्कौरवाधिपते'. २. 'कर्णसुखदं बहु यत्तदुक्तं'. ३. 'अप्रतिकारदुःखम्'; 'प्रतिकारदुःखम्'. ४. '(सास्रम् ।)'. ५. 'अश्व०—कथमद्यापि स एव कर्णपक्षपातः । अस्मासु च परिभवः । राजन्कौरवेश्वर, एवं भवतु'; 'अश्व०—अवितथमद्यापि स एवं कर्णपक्षपातः । अस्मासु परिभवः । राजन्, इदं भवतु'. ६. 'धृत०—वत्स, क एष ते व्यामोहः । अस्मिन्काले एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि'; 'धृत०—वत्स, क एष ते व्यामोहः । अस्मिन्काले एवंविधस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि'; 'धृत०—(पुत्रं प्रति ।) वत्स, क एष भवतो व्यामोहो यदस्मिन्कालेऽश्वत्थाम्नो विरागमुत्पादयसि'. ७. 'अप्रियं मयोक्तम्'; 'अप्रियमनृतं मयोक्तम्'. ८. 'नेदं कोपस्य स्थानम्'; 'नायं क्रोधस्थानम्'. ९. 'भाग्यदोषैः'.

परिवदति[1] समक्षं मित्रमङ्गाधिराजं
मम खलु कथयास्मिन्को विशेषोऽर्जुने वा ॥ ४० ॥

**धृतराष्ट्रः**—वत्स[2], तवापि कोऽत्र दोषः ? । अवसानमिदानीं[3] भरतकुलस्य । संजय, किमिदानीं करोमि मन्दभाग्यः ? । ( विचिन्त्य । ) भवत्वेवं तावत् । संजय[4], मद्वचनाद्ब्रूहि भारद्वाजमश्वत्थामानम् ,—

स्मरति न भवान्पीतं स्तन्यं विभज्य[5] सहामुना
मम च मृदितं[6] क्षौमं बाल्ये[7] त्वदङ्गविवर्तनैः ।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च य[8]-
द्वचनविकृतिष्वस्य क्रोधो मुधा क्रियते त्वया ॥ ४१ ॥

**संजयः**—यदाज्ञापयति तातः । ( इत्युत्तिष्ठति । )

**धृतराष्ट्रः**—अपि चेदमन्यत्त्वया वक्तव्यम् ,—

यन्मोचितस्तव पिता वितथेन शस्त्रं
यत्तादृशः परिभवः स तथाविधो[9]ऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषं च
दुर्योधनोक्तमपहाय[10] विधास्यतीति ॥ ४२ ॥

**संजयः**—यदाज्ञापयति[11] तातः । ( इति निष्क्रान्तः । )

---

ष्टम् । मम समक्षम् । कर्णम् । अस्मिन्नश्वत्थामन्यर्जुने वा परिभवे सति को विशेषः ? । अपि तु न कोऽपि । हे तात, तं विशेषम् । खलु निश्चयेन । कथय । तयोः कृत्या न भेद इति भावः ॥ ४० ॥ **स्मरतीति** । स्तन्यं स्तनदुग्धम् । अमुना सुयोधनेन । त्वदङ्गविवर्तनैस्त्वच्छरीरपरिवर्तनैः । मम क्षौमं पट्टवस्त्रं यन्मृदितं तन्न स्मरतीत्यन्वयः । यदस्य सुयोधनस्य कनिष्ठवधदीप्ताच्छोकादतिप्रश्रयाच्च तद्वचनविकृतिषु सतीषु त्वया विफलं क्रोधः क्रियते । न कर्तुमर्हतीत्यर्थः ॥ ४१ ॥ **यदिति** । तादृशः प्रसिद्धः । तथाविधस्तत्तत्प्रकारकः । एतद्विचिन्त्यात्मनि बलं च सामर्थ्यं पौरुषं विधास्यतीति वक्तव्यमित्यन्वयः ।

---

**पाठा०**—१. 'परिभवति'. २. 'अथवा वत्स'. ३. 'इदं'. ४. 'वत्स, संजय'. ५. 'च्चिराय'. ६. 'मलिनं'. ७. 'जातं'. ८. 'यद्विकृतवचने मास्मिन्क्रोधश्चिरं क्रियतां त्वया'; 'तद्विकृतवचने मास्मिन्क्रोधश्चिरं क्रियतां त्वया'; 'यद्वचनविकृतिस्तस्य क्रोधो मुधा क्रियते त्वया'. ९. 'तथाविधे'. १०. 'अपनीय'. ११. 'यथाज्ञापयति तातः'.

दुर्योधनः—सूत, साङ्ग्रामिकं मे रथमुपकल्पय ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( इति निष्क्रान्तः । )

धृतराष्ट्रः—गान्धारि, इतो वयं मद्राधिपतेः शल्यस्य शिबिरमेव गच्छावः । वत्स, त्वमप्येवं कुरु ।

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

## इति पञ्चमोऽङ्कः ।

---

किं कृत्वा । दुर्योधनोक्तं त्यक्त्वा । केचित्तु विधास्यतीत्यत्र प्रतीकारमिति शेष इत्यूचुः ॥ ४२ ॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ प्रयातो ग्रन्थे मनोहारिणि पञ्चमोऽङ्कः ॥

इति पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः ।

( ततः प्रविशत्यासनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च[1] । )

**युधिष्ठिरः**[2]—( विचिन्त्य निश्वस्य च । )

[1]तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये[3] च याते दिवम् ।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे[4] जये
सर्वे जीवितसंशयं वयममी वाचा[5] समारोपिताः ॥ १ ॥

**द्रौपदी**—( सबाष्पम् । ) महाराअ[6], पंचालिए त्ति किं ण भणिदं[7] ? । [ महाराज, पाञ्चाल्येति किं न भणितम् ? । ]

---

**तीर्ण इति** । तीर्णेऽतिक्रान्ते । निर्वृत उपशान्ते । आशी सर्पदंष्ट्रा तत्र विषं यस्य तादृशो यो भोगी सर्पस्तस्मिन् । 'आशीराश्यहिदंष्ट्रायाम्' इति शब्दभेदः । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इति विश्वः ( अमरः । ? ) यद्यप्यत्रै-कपदेनैवापरं गतार्थं तथापि विषोल्बणविषधरज्ञापनार्थं तदुक्तम् । यद्वा आश्यां विषं यत्र भोगे शरीरे सोऽस्यास्तीति आशीविषभोगी विषधर इति व्युत्पत्तिः । न चात्रापि गतार्थता । विशिष्टनाम्नो विवक्षाया अपर्यनुयोज्यत्वादिति दिक् । दिवं स्वर्गम् । स्वल्पावशेषेऽपि जये सति भीमेनामी सर्वे वयं वाचा प्रतिज्ञारूपया जीवितसंशयं समारोपिता इत्यन्वयः ॥ १ ॥ **द्रौपदीवाक्ये** । णं वदामि न पांचाल्या वर्तितव्यम् । मया न वर्तितव्यमिति शेषः ॥ अपर्युषितां

---

1 इह विरोधनाख्यो विमर्शसन्धिभेदः; तल्लक्षणं चोक्तं साहित्यदर्पणे—'कार्यात्ययोपगमनं विरोधनमिति स्मृतम्' इति । दशरूपके तु 'तीर्णे भीष्ममहोदधौ' इत्ययं श्लोकमुद्धृत्य 'स्वल्पावशेषे जये' इत्यादिभिर्विजयप्रत्यर्थिसमस्तभीष्मादिमहारथिवधात् अवधारितैकान्तविजयावमर्शनात् अवमर्शनं दर्शितम् इत्यवमर्शसन्धिः इत्युक्तम्; तल्लक्षणं च तत्रैवोक्तम्—'क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् । गर्भनिर्भिन्नबीजार्थः सोऽवमर्शोऽङ्गसङ्ग्रहः' इति ।

---

पाठा०–१. 'कञ्चुकिश्च'. २. 'युधिष्ठिरः—(सचिन्तं निश्वस्य ।) कष्टं भोः कष्टम् । तीर्णे भीष्ममहार्णवे'; 'युधिष्ठिरः—तीर्णे भीष्ममहोदधौ'; 'युधिष्ठिरः—(विचिन्त्य निश्वस्य च ।) तीर्णे भीष्ममहार्णवे'. ३. 'शल्येऽपि याते दिवम्'. ४. 'अल्पावशेषे'; 'अल्पावशिष्टे'. ५. 'वाचा समारोपिताः ॥ (पुरुषमवलोक्य ।) भद्र बुधक, उच्यतां सहदेवो यथा'. ६. 'महाराअ' इति क्वचिन्नास्ति. ७. 'भणासि'.

युधिष्ठिरः—कृष्णे, ननु मया । (पुरुषमवलोक्य।) बुधक,

पुरुषः—देव[1], आज्ञापय ।

युधिष्ठिरः—उच्यतां सहदेवः—'क्रुद्धस्य वृकोदरस्या[2]पर्युषितां प्रतिज्ञामुपलभ्य प्रणष्टस्य मानिनः कौ[3]रवराजस्य पदवीम[4]न्वेष्टुमतिनिपुणमतयस्तेषु तेषु स्था[5]नेषु प[6]रमार्थाभिज्ञाश्चराः सुसचिवाश्च भक्तिमन्तः प[7]टुपटहरवव्यक्तघोषणाः सु[8]योधनसंचारवेदिनः प्रतिश्रुतधनपूजाप्रत्युपक्रियाश्चरन्तु स[9]मन्तात्समन्तपञ्चकम् । अपि च,—

प[10]ङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दा[11]शाः
क[12]क्षेषु क्षुण्णवीरुन्निचयपरिचया वल्लवाः संचरन्तु ।
ना[13]गव्याघ्राटवीषु श्वपचपुरविदो ये च रन्ध्रेष्वभिज्ञा
[14]ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं तेषु चाराश्चरन्तु ॥२॥'

पुरुषः—य[15]थाज्ञापयति देवः ।

---

नान्यदिनगामिनीम् । प्रणष्टस्य गुप्तस्य । पटुपटहघोषणा निपुणं पटहं वादयन्तः । प्रसिद्धार्थमिदम् । प्रतिश्रुताङ्गीकृता मद्दत्तधनादीनां प्रत्युपक्रिया यैस्ते तथा । समन्तपञ्चकं देशभेदः । **पङ्क इति** । पङ्के कर्दमे । सैकतं वालुकामयम् । सुनिभृतपदवी गुप्तपद्धतिः । 'कैवर्ते दाशधीवरौ' इत्यमरः । कक्षः कच्छाली । वीरुन्निचयो लतासंघस्तस्य परिचयो ज्ञानं येषां ते । वल्लभा गोपाः । नागव्याघ्रप्रधाना अटव्यो वनानि । तासु श्वपचपुरविदश्चाण्डालपुरवेदिनः संचरन्तु । नागो हस्ती । 'निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः' इत्यमरः । रन्ध्रेषु परच्छिद्रेषु । सिद्धव्यञ्जनाः सिद्धपुरुषचिह्नवन्तः । चरा एव चाराः । प्रज्ञादित्वात्स्वार्थेऽण् । तथा च यत्र

---

पाठा०—१. 'देव' इति क्वचिन्नास्ति. २. 'दारुणां प्रतिज्ञामुपलभ्य'; 'अपर्युषितदारुणां प्रतिज्ञामुपलभ्य'; 'अपर्युषितां प्रतिज्ञां दारुणामुपश्रुत्य'. ३. 'कौरवनाथस्य'. ४. 'ईक्षितुं'. ५. 'स्थानान्तरेषु'. ६. 'परमार्थाभिज्ञाश्चरा मन्त्रिणश्च'; 'यथार्थाभिज्ञाश्चराः सुसचिवाश्च'; 'यथार्थाभिज्ञाश्च सुसचिवाश्च'; 'यथार्थाभिज्ञाः सुसचिवाश्च'; 'यथार्थाभिज्ञाश्चाराः संचरन्तु । सुसचिवाश्च'. ७. 'पटुपटहघोषणाः'. ८. 'सुयोधनपदसंचारवेदिनः'. ९. 'समन्तात्' इति क्वचिन्नास्ति. १०. 'पङ्के वा सैकते वाप्सु च परपदवीवेदिनः'. ११. 'दासाः'. १२. 'कुञ्जेष्वाक्रान्तवीरुन्निचयपरिचयाः'; 'कुञ्जेष्वाक्रान्तवीरुन्निकरपरिचयाः'; 'कुञ्जेषु क्षुण्णवीरुन्निचयपरिचयाः'. १३. 'नागव्याघ्राटवीषु स्वपरपदविदो ब्रह्मदेशे च संस्थाः'; 'व्याधा व्याघ्राटवीषु स्वपदपरविदो ये च रन्ध्रेष्वभिज्ञाः'. १४. 'ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु'. १५. 'यदाज्ञापयति देवः'.

युधिष्ठिरः—तिष्ठ । एवं च वक्तव्यः सहदेवः,—

ज्ञेया रहः शङ्कितमालपन्तः
सुप्ता रुगार्ता मदिराविधेयाः ।
त्रासो मृगाणां वयसां विरावो
नृपाङ्कपादप्रतिमाश्च यत्र ॥ ३ ॥

पुरुषः—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनः प्रविश्य सहर्षम् ।) देव, पाञ्चालकः प्राप्तः ।

युधिष्ठिरः—त्वरितं प्रवेशय ।

पुरुषः—(निष्क्रम्य पाञ्चालकेन सह प्रविश्य ।) एष देवः । उपसर्पतु पाञ्चालकः ।

पाञ्चालकः—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।

युधिष्ठिरः—पाञ्चालक, कच्चिदासादिता तस्य दुरात्मनः कौरवाधमस्य पदवी ? ।

ये निपुणास्तत्र ते गच्छन्त्विति भावः ॥ २ ॥ ज्ञेया इति । रह एकान्ते । शङ्कितं शङ्कास्पदमालपन्तो जना ज्ञेयाः । एवं सुप्तादिष्वपि ज्ञेया इत्यनेनान्वयः । मदिराविधेया मत्ताः । नृपाङ्को राजचिह्नं मत्स्यादि यत्र पादप्रतिमायां ताश्च यत्र तानि ज्ञेयानीत्यन्वयः । 'वयः पक्षिणि बाल्ये च' इति विश्वः । प्रतिमा प्रतिकृतिः ॥ ३ ॥

1 अत्र 'पाञ्चालक, कच्चिदासादिता' इत्यादिना 'देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः' इत्यन्तेन पाञ्चालकवाक्येन च दुर्योधनस्य दोषप्रख्यापनादपवादाख्यं विमर्शसन्ध्यङ्गम्; तल्लक्षणं चोक्तं दर्पणे—'दोषप्रख्याऽपवादः स्यात्' इति ।

पाठा०—१. 'युधिष्ठिरः—तिष्ठ । इदमपरं वक्तव्यः सहदेवः'; 'युधिष्ठिरः—एवं वक्तव्यः सहदेवः'. २. 'रुगार्ताश्च वने विचेयाः'. ३. 'शत्रोः'. ४. 'कञ्चुकी—यथाज्ञापयति देवः । (इति निष्क्रम्य पुनः प्रविश्य सहर्षम् ।) देव, पाञ्चालकः प्राप्तः । युधि०—त्वरितं प्रवेशय । कञ्चुकी—(निष्क्रम्य पाञ्चालकेन सह प्रविश्य ।) एष देवः । उपसर्पतु । पाञ्चा०—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।'; 'पुरुषः—यथाज्ञापयसि । (इति निष्क्रान्तः ।) पाञ्चा०—(प्रविश्य ।) प्रियमावेदयामि महाराजाय देव्यै च'. ५. 'भद्र पाञ्चालक'. ६. 'कच्चिदासादिता तस्य दुरात्मनः कौरवापसदस्य पदवी'; 'कच्चिदासादिता तस्य कौरवाधमस्य पदवी'; 'कच्चिदासादिता तस्य दुरात्मनः पदवी'.

पाञ्चालकः—न केवलं पदवी। स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः।

युधिष्ठिरः—साधु। भद्र, प्रियमावेदितम्। अथ दर्शनगोचरं गतः।

पाञ्चालकः—देव, समरगोचरं पृच्छ।

द्रौपदी—(सभयम्।) कहं समरगोअरो वट्टइ मे णाहो। [कथं समरगोचरो वर्तते मे नाथः।]

युधिष्ठिरः—(साशङ्कम्।) सत्यं समरगोचरो मे वत्सः।

पाञ्चालकः—सत्यम्। किमन्यथा वक्ष्यते महाराजाय?।

युधिष्ठिरः—

त्रस्तं विनापि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति।
जानामि चोद्यतगदस्य वृकोदरस्य
सारं रणेषु भुजयोः परिशङ्कितं वा॥ ४॥

प्रधानहेतुर्मुख्यनिमित्तम्॥ अथ प्रश्ने॥ द्रौपदीवाक्ये। कथं समरगोचरो वर्तते मे नाथः॥ त्रस्तमिति। प्रियस्य चेतो विवेकमान्द्यमुपैति। कीदृशम्। विषयात्त्रासहेतोर्विनापि त्रस्तमिति वस्तुस्थितिः। प्रकृते तां योजयति—जानामीति। परिशङ्कितं सावधानम्। विषयादिति विनायोगे पञ्चमी। 'भ्रातुर्विनापि विजयादुरुविक्रमस्य' इति पाठे मम चेतो विवेकपरिमन्थरतामुपैत्युरुविक्रमस्य भ्रातुर्विजयाद्विनापि। शत्रुणा यद्यपि मम भ्राता न जितस्तथापि

पाठा०—१. 'देव, न केवलं पदवी'. २. 'अपि'. ३. 'देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुः'; 'देवीकेशस्पर्शमहापातकप्रधानहेतुः'. ४. 'युधिष्ठिरः—(सहर्ष पाञ्चालकं परिष्वज्य।) साधु भद्र, साधु। भवता प्रियमावेदितम्। अपि दर्शनगोचरं गतः'; 'युधिष्ठिरः—साधु भद्र, साधु। भवता प्रियमावेदितम्। अपि दर्शनगोचरं गतः'; 'युधिष्ठिरः—(सहर्षं परिष्वज्य पारितोषिकं भूषणं प्रयच्छति।) साधु भद्र, साधु। भवता प्रियमावेदितम्। अपि दर्शनगोचरं गतः'; 'युधिष्ठिरः—(सहर्षं पाञ्चालकं परिष्वज्य।) साधु भद्र, प्रियमावेदितम्। अथ दर्शनगोचरं गतः'; 'युधिष्ठिरः—साधु भद्र, प्रियमावेदितं मे। दर्शनगोचरं गतः'. ५. 'द्रौपदी—(साशङ्कम्।) कहं समरगोअरे वट्टइ मे णाहो'. ६. 'युधिष्ठिरः—(साशङ्कम्।) भ्रातुर्विनापि विजयादुरुविक्रमस्य'. ७. 'उद्धतगदस्य'. ८. 'विजये'. ९. 'परिशङ्कितश्च'.

([१]द्रौपदीमवलोक्य।) अयि सुक्षत्रिये,—

गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः
पुराभूदस्माकं नृपसदसि योऽयं परिभवः।
प्रिये [२]प्रायस्तस्य द्वितयमपि पारं [३]गमयति
क्षयः प्राणानां [४]नः कुरुपतिपशोर्वा[५]द्य निधनम्॥ ५॥

[६]अथवा कृतं संदेहेन,—

[1]नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा।
बध्यते केशपाशस्ते स चास्या[७]कर्षणक्षमः॥ ६॥

[८]पाञ्चालक, कथय कथय कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे किं वाधुना प्रवृत्तमिति।

**द्रौपदी**—[९]भद्द, कहेहि कहेहि। [भद्र, कथय कथय।]

**पाञ्चालकः**—शृणोतु देवो देवी च। अस्तीह देवेन हते [१०]मद्राधिपतौ शल्ये [११]गान्धारराजकुलशलभे सहदेवशस्त्रानलं प्रविष्टे सेनापतिनिधननि[१२]राक्रन्दविरलयोधोज्झितासु समरभूमिषु [१३]रिपुबल-

---

स्नेहान्मम चित्तमान्ध्यमित्यर्थः॥ ४॥ **गुरूणामिति**। हे प्रिये, तस्य परिभवस्य द्वितयमेव कर्म पारं गमयति। अपिरेवार्थे। तदेवाह—**क्षय इति**। नोऽस्माकं प्राणविनाशः कुरुपतिपशोः प्राणविनाशो वा। तदुभयमित्यर्थः॥ ५॥ **नूनमिति**। बध्यत इति बन्धयितव्यो नाश्यते च। 'बन्ध बन्धने'। 'वध हिंसायाम्' इत्येतयो रूपम्॥ ६॥ **द्रौपदीवाक्ये**। भद्र, कथय॥

---

1 अत्र युधिष्ठिरेण स्वदण्डशक्तेराविष्करणात् व्यवसायाख्यं अवमर्शसन्ध्यङ्गम्; तल्लक्षणं यथा—'व्यवसायः स्वशक्त्युक्तिः' इति।

---

**पाठा०**—१. ('द्रौपदीमवलोक्य मुखादस्या बाष्पमपनयति।)'; ('द्रौपदीमवलोक्य मुखादस्या बाष्पं नयति।)'. २. 'प्रेयः'. ३. 'गमयितुं'; 'गमयतु'. ४. 'वा'. ५. 'तस्य निधनम्'; 'वापि समरे'. ६. 'अथवानास्पद एव संदेहः'. ७. 'आकर्षणे क्षमः'; 'आकर्षणे प्रभुः'; 'आकर्षणप्रभुः'. ८. 'पाञ्चालक, कथय कथय कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे, किमधुना प्रवृत्तमिति'; 'पाञ्चालक, कथमुपलब्धः कस्मिन्नुद्देशे किमधुना प्रवृत्तं कथय'. ९. 'भद्द' इति क्वचिन्नास्ति. १०. 'मद्राधिपे'; 'मद्रपतौ'. ११. 'गान्धारराजशलभकुले सहदेवानलं प्रविष्टे'; 'सहदेवशस्त्रानलमनुप्रविष्टे गान्धारराजशलभे'; 'गान्धारराजकुलशलभे सहदेवानलं प्रविष्टे'. १२. 'निरानन्द–'; 'नराक्रन्द–'. १३. 'रिपुपराजयोद्धतवेल्लितविचित्र–'; 'रिपुपराजयोद्धतचलितविचित्र–'.

पराजयोद्धतवल्गितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्ट-द्युम्नाधिष्ठितासु च युष्मत्सेनासु प्रनष्टेषु कृपकृतवर्माश्वत्थामसु तथा [1]दारुणामपर्युषितां प्रतिज्ञामुपलभ्य [2]कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः ।

युधिष्ठिरः—ततस्ततः ? ।

[3]द्रौपदी—अयि, परदो कहेहि । [ अयि, परतः कथय । ]

पाञ्चालकः—अवधत्तां देवो देवी च । ततश्च भगवता [4]वासु-देवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ तमनासादितवन्तौ च । [5]अनन्तरं देवमनुशोचति मादृशे भृत्यवर्गे दीर्घमुष्णं च निश्वसति कुमारे बीभत्सौ जलधर-समयनिशासंचारित[7]खद्योतप्रकरपिङ्गलैः कटाक्षैरादीपयति गदां [8]वृकोदरे यत्किंचनकारितामधिक्षिपति विधेर्भगवति नारायणे कश्चि-त्संविदितः कुमारस्य मारुतेरुज्झितमांसभारः प्रत्यग्रविशसित[9]मृग-लोहितचरणनिवसनस्त्वरमाणो[10]ऽन्तिकमुपेत्य पुरुषः [11]श्वासग्रस्तार्धश्रु-तवर्णानुमेयपदया वाचा कथितवान्—'[12]अस्मिन्महतोऽस्य सरस-

---

निराक्रन्दोऽनिरुदन् । वल्गनं गतिविशेषः । आसादित आक्रान्तः । तथा दारुणां प्रतिज्ञापूरणाभावे निजवधरूपाम् । **द्रौपदीवाक्ये** । अयि, इतः परतः कथय ॥ पर्यटितुं भ्रमितुम् । 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः । पिङ्गला

---

पाठा०—१. 'दारुणां प्रतिज्ञामुपलभ्य'; 'दारुणामपर्युषितां च प्रतिज्ञामुपलभ्य'. २. 'वृकोदरस्य'. ३. 'द्रौपदी—अग्गदो कहेहि'. ४. 'वासुदेवेनाधिष्ठितावेकरथारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ न चासादितवन्तौ तम्'; 'वासु-देवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ वयं च समन्तात्समन्तपञ्चकं पर्यटितुमार-ब्धास्तमनार्यमनासादितवन्तश्च'. ५. 'अनन्तरं च'. ६. 'निश्वसति कुमारबीभत्सौ'; 'निश्वसति बन्धुवर्गे'. ७. 'तडित्प्रकरपिङ्गलैः'. ८. 'नाथे वृकोदरे यत्किंचनकारितां च विक्षिपति भगवति नारायणे'. ९. 'मृगालोहितचरणनिवसनः', 'मृगलोहितलोहित-चरणनिवसनः'. १०. 'असदन्तिकं'. ११. 'परुषश्वासग्रस्तार्धश्रुतवर्णानुमेयपदया वाचा कथितवान्'; 'श्वासग्रस्तार्धश्रुतवर्णानुमेयसमुदाचारः कथितवान्'. १२. 'देव कुमार, अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती जलमवतीर्णे । तयोरेका स्थलमुत्तीर्णा न द्वितीया लक्षिता'; 'देव कुमार, अस्मिन्महतोऽस्य सरस्तीरे द्वे पद्धती समवतीर्णपद-प्रतिबिम्बे । तयोरेका जलोत्तीर्णा न द्वितीया'; 'तिष्ठतो महतोऽस्य सरसस्तीरे द्वे पद्धती समवतीर्णप्रतिबिम्बे तयोरेका जलोत्तीर्णा न द्वितीया'.

स्तीरे द्वे पदपद्धती समवतीर्णप्रतिबिम्बे । तयोरेका स्थलमुत्तीर्णा न द्वितीया । परत्र कुमारः प्रमाणम्' इति । ततः ससंभ्रमं प्रस्थिताः सर्वे वयं [1]तमेव पुरस्कृत्य गत्वा च सरस्तीरं परिज्ञायमान-सुयोधनपदलाञ्छनां पदवीमासाद्य भगवता वासुदेवेनोक्तम्—'भो वीर वृकोदर, जानाति किल सुयोधनः सलिलस्तम्भनीं विद्याम् । तन्नूनं तेन त्वद्भयात्सरसीमेनामधिशयितेन भवितव्यम् ।' [1]एतच्च वचनमुपश्रुत्य [2]रामानुजस्य सकलदिङ्निकुञ्जपूरितातिरिक्त-मुद्भ्रान्तसलिलचरशकुन्तकुलं त्रासोद्धतनक्रग्राहमालोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्—[3]अरे रे वृथाप्रख्या-

---

कपिशा । आदीपयत्युद्द्योतयति सति । यत्किंचित्कारितां यत्र तत्रानुसंधानादिकं प्रतिषेधयति । संविदितः ख्यातः पुरुषः । कुमारमारुतेरन्तिकमुपेत्य वाचा कथित-वानित्यन्वयः । लोहितं रक्तम् । श्वासग्रस्तोऽर्धश्रुतो यो वर्णोऽक्षरं तेनानुमेयं पदं यस्यास्तया । समवतीर्णं उद्दिष्टः प्रतिबिम्बोऽनुकृतिर्ययोस्ते तथा । प्रमाणमग्रिमतर्के कुमार एव कर्तेत्यर्थः । सरसीमिति 'अधिशीङ्स्थासां कर्म' ( १।४।४६ ) इत्याधारे कर्म । रामानुजः कृष्णः । शकुन्तः पक्षी । नक्रो जलजन्तुभेदः । ग्राहो 'गोह' इति

---

1 'एतच्च वचनमुपश्रुत्य' इत्यादिना 'त्यक्त्वोत्थितः सरभसम्-' ( ६।९ ) इत्यनेन दुर्वचनजलावलोडनाभ्यां दुर्योधनतर्जनोद्वेजनकारिभ्यां पाण्डवविज-यानुकूलदुर्योधनोत्थापनहेतुभ्यां भीमस्य द्युतेरुल्लेखात् द्युतिर्नाम अवमर्श-सन्ध्यङ्गम्; तल्लक्षणं तूक्तं दशरूपके—'तर्जनोद्वेजने द्युतिः' इति ।

---

पाठा०–१. 'तमेव पुरुषं पुरस्कृत्य सरसस्तीरम् । परिज्ञाय सुयोधनपदलाञ्छितां पदवीं कथितं भगवता वासुदेवेन । वृकोदर, जानाति किल सुयोधनः सलिलस्तम्भनीं विद्याम् । नूनं तेन त्वद्भयात्'; 'तमेव पुरस्कृत्य गत्वा च सरस्तीरं परिज्ञाय सुयोधन-पदलाञ्छितां पदवीमासाद्य भगवता वासुदेवेनोक्तम् । भो वृकोदर, जानाति किल सुयोधनः सलिलस्तम्भिनीं विद्याम् । नूनं तेन त्वद्भयात्'. २. 'रामानुजस्य सकल-निकुञ्जपूरिताशातिरिक्तमुद्भ्रान्तसलिलचरशतसंकुलं त्रासोद्वृत्तनक्रग्राहमालोड्य सरः-सलिलं भैरवं च गर्जित्वा'; 'बलानुजस्य सकलदिक्प्रपूरितातिरिक्तमुद्भ्रान्तसकलसलिल-चारिचक्रं त्रासोद्धतनक्रमालोडितसरःसलिलं भैरवं च गर्जित्वा'; 'बलानुजस्य सकल-दिक्प्रपूरितातिरिक्तमुद्भ्रान्तसकलसलिलचारिचक्रं त्रासोद्धतनक्रमालोडितं सरःसलिलं भैरवं च गर्जित्वा'; 'बलानुजस्य सकलदिङ्निकुञ्जपूरितातिरिक्तमुद्भ्रान्तसकलसलिलचर-शकुन्तकुलं त्रासोद्भ्रान्तमत्स्यग्राहमालोडितं सरःसलिलमतिभैरवं गर्जित्वा'. ३. 'अरे रे' इत्यस्मादारभ्य 'महापातकिन्' इत्यन्तं क्वचिन्नास्ति.

पितालीकपौरुषाभिमानिन्, पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्,—

जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ ७ ॥

अपि च, भो मानान्ध,—

पाञ्चाल्या मन्युवह्निः स्फुटमुपशमितप्राय एव प्रसह्य
व्यासक्तैः केशपाशैर्हतपतिपु मया कौरवान्तःपुरेपु ।
भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं भीमसेने विहितमसमये यत्त्वयास्तोऽभिमानः ८

**द्रौपदी**—णाह, अवणीदो मे मण्णु जइ पुणो वि सुलहं दंसणं भविस्सदि । [नाथ, अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति । ]

---

प्रसिद्धः । **जन्मेति** । क्षीबं मत्तम् । नृपशो जनाधम । इह क्षतिनामाऽवमर्शसंधिः । यदाह—'अधिक्षेपोक्तिः क्षतिर्मता' इति ॥७॥ **पाञ्चाल्या इति** । कौरवान्तःपुरेपु मया हतपतिपु सत्सु तदीयकेशपाशैर्व्यासक्तैः संबद्धैर्द्रौपद्या मन्युवह्निरुपशमितप्राय एवेत्यन्वयः । दुःशासनवक्षसः स्रवद्रक्तं मया पीयमानमालोक्य त्वया मयि भीमसेने किं विहितं यदकाल एव मानोऽस्तस्त्वया इदानीं स कर्तुमर्हतीति भावः ॥ ८ ॥ **द्रौपदीवाक्ये** । अपनीतो नाथेन मम मन्युर्यदि पुनरपि सुलभदर्शनः

---

1 कथा चेयम्–'योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते । आस्तीर्य शेषमभजत् कल्पान्ते भगवान् प्रभुः ॥ तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ । विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ ।...तावप्यतिबलोन्मत्तौ महामायाविमोहितौ । उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम् । श्रीभगवानुवाच । भवेतामद्य मे तुष्टौ मम वध्यावुभावपि । वञ्चिताभ्यामिति तदा सर्वमापोमयं जगत् ॥ विलोक्य ताभ्यां गदितो भगवान्कमलेक्षणः । आवां जहि न यत्रोर्वी सलिलेन परिप्लुता । तथेत्युक्त्वा भगवता शङ्खचक्रगदाभृता । कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः ॥' इति मार्कण्डेयपुराणगतानुसन्धेया ।

---

पाठा०–१. 'पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्, धार्तराष्ट्रापसद'; 'पाञ्चालराजतनयाकेशाम्बराकर्षण, महापातकिन्, धार्तराष्ट्रापसद'; 'द्रुपदसुताकेशाम्बराकर्षणमहापातकिन्'. २. 'विमले'. ३. 'मधुक्षीबं रिपुं मन्यसे'. ४. 'त्रासान्मे'. ५. 'मानान्ध, कौरवाधम', ६. 'क्रोधवह्निः'. ७. 'एष प्रसह्य'. ८. 'व्यामुक्तैः'; 'प्रोन्मुक्तैः'.

**युधिष्ठिरः**—कृष्णे, नामङ्गलानि व्याहर्तुमर्हस्यस्मिन्काले[1] । भद्र, ततस्ततः ? ।

**पाञ्चालकः**—[2]ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतं गदापरिघपाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनीवनमपविद्धमूर्च्छितग्राहमुद्भ्रान्तमत्स्यशकुन्तमतिभैरवारवभ्रमितवारिसंचयमायतमपि तत्सरः समन्तादालोडितम् ।

[3]**युधिष्ठिरः**—भद्र, तथापि किं नोत्थितः ? ।

**पाञ्चालकः**—देव[4],—

> त्यक्त्वोत्थितः सरभसं सलिलं[5] सलील-
> मुद्भूतकोपदहनोग्रविषस्फुलिङ्गः ।
> आयस्त[6]भीमभुजमन्दरवेल्लनाभिः
> क्षीरोदधेः[7] सुमथनादिव कालकूटः ॥ ९ ॥

**युधिष्ठिरः**—साधु सुक्षत्रिय[8], साधु ।

---

स भविष्यति । परिघोऽस्त्रभेदः । 'परिघः परिघातनः' इत्यमरः । वृकोदरेण सर आलोडितमित्यन्वयः । उल्लङ्घितमतिक्रान्तम् । अपविद्धः परित्यक्तः । आयतं दीर्घम् ॥ **त्यक्त्वेति** । सलीलं सहेलम् । कालकूटो विषम् । दुर्योधनकालकूटयोः साम्यमाह—**उद्भूतेति** । उद्भूतो यः कोपाग्निः स एवोग्रविषस्य स्फुलिङ्गो यत्र स तथा । आयस्तः क्षिप्तः । वेल्लना चालनम् ॥ ९ ॥ **द्रौपदी-**

---

पाठा०–१. 'अस्मिन्काले' इति क्वचिन्नास्ति. २. 'देव, ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतं भ्रमितभीषणगदापरिषक्तपाणिना सहसैवोल्लङ्घिततीरमुत्सन्नफुल्लनलिनीवनमाविद्धमूर्च्छितग्राहमुद्भ्रान्तमत्स्यशकुन्तमतिभैरवारववेगभ्रमितवारिसंचयमायतमपि तत्सरः समन्तादालोडितम् ।'; 'देव, ततश्चैवं भाषमाणेन वृकोदरेण वीर्यक्रोधोद्धतभ्रमितभीषणगदापाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनमाविद्धमूर्च्छितग्राहमुद्भ्रान्तसमस्तशकुन्तमतिभैरवं वेगभ्रमितवारिसंचयमायतमपि सरः समन्तादवलोडितम् ।'; 'ततश्चैवं भाषमाणेन वृकोदरेण वीर्यक्रोधोद्धतभीमगदापाणिना सहसोल्लासिततीरमुत्सन्ननलिनमाविद्धमूर्च्छितग्राहमुद्भ्रान्तसमस्तशकुन्तमतिभैरवं वेगभ्रमितवारिसंचयमायतमपि सरः समन्तादवलोडितम् ।'. ३ 'युधि०—भद्र, तथापि नोत्थितः', 'युधि०—तथापि नोत्थितः'. ४. 'देव, कथं नोत्थितः'. ५. 'सलिलं सलीलमुद्भ्रान्तकोपदहनोग्रविषस्फुलिङ्गः'; 'सरसः स मूलमुद्भूतकोपदहनो विषविस्फुलिङ्गः'; 'सरसः स मूलमुद्भ्रान्तकोपदहनोग्रविषस्फुलिङ्गः'. ६. 'आयत्त–'. ७. 'क्षीराम्बुधेः सुमथितादिव'; 'क्षीरोदधिप्रमथनादिव'. ८. 'महाक्षत्रिय'.

**द्रौपदी**—पडिवण्णो संमरो ण वा ? । [ प्रतिपन्नः समरो न वा ? । ]

**पाञ्चालकः**—उत्थाय च तस्मात्सलिलाशयात्करयुगलोत्तम्भिततोरणीकृतभीमगदः कथयति स्म–'अरे रे मारुते, किं भयेन प्रलीनं दुर्योधनं मन्यते भवान् ? । मूढ, अनिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यवसितवानस्मि पातालम् ।' एवं चोक्ते वासुदेवकिरीटिभ्यां द्वावप्यन्तःसलिलं निषिद्धसमरारम्भौ स्थलमुत्तारितौ । आसीनश्च कौरवराजः क्षितितले गदां निक्षिप्य विशीर्णरथसहस्रं निहतकुरुसहस्रगजवाजिनरसहस्रकलेवरसंमर्दसंपतद्गृध्रकङ्कजम्बूकमस्मद्वीरमुक्तसिंहनादमपमित्रबान्धवमकौरवं रणस्थानमवलोक्यायतमुष्णं च निश्वसितवान् । ततश्च वृकोदरेणाभिहितम्—'अयि[1]

वाक्ये । प्रतिपन्नः समरो न वा ? । अत्र प्रतिपन्नो लग्नः ॥ उत्तम्भिता उत्तोलिताऽत एव तोरणसदृशी कृता गदा येन स तथा । कलेवरं

1 'अयि भोः कौरवराज' इत्यादिना 'परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ' इत्यनेन भीमदुर्योधनयोः अन्योन्यरोपसंसृष्टभाषणात् विजयबीजान्वयेन संफेटाख्योऽवमर्शसन्धिः; तल्लक्षणं तु—'संफेटो रोषभाषणम्' इति ।

पाठा०–१. 'समरे'; 'स समरो'. २. 'असात्'. ३. 'घोरगदः'. ४. 'मारुते, किं भवतो भयेन प्रलीनं दुर्योधनं समर्थयसे'; 'मारुते, किं भवतो भयेन प्रलीनं दुर्योधनं कथयसि'. ५. 'अनभिहतपाण्डुपुत्रः'. ६. 'विश्रामार्थमध्यवसितवानस्मि पातालम् ।;' 'विश्रान्तिमध्यवसितवानहमस्मि । अतोऽलमलम् ।'. ७. 'एवं चोक्तवति'; 'एवं चोक्तं'. ८. 'निषिद्धसमरसमारम्भौ स्थलमुत्तारितौ भीमसुयोधनौ'; 'निषिद्धसमरसमारम्भौ तीरमुत्तारितौ भीमसुयोधनौ'; 'निषिद्धसमरसमारम्भौ भीमसुयोधनौ'. ९. 'विशीर्णरथसहस्रं' इति क्वचिन्नास्ति. १०. 'निहतकुरुशतगजवाजिनरशतकलेवरसंमर्दसंपतितगृध्रकङ्कजम्बुकमुत्सन्नसुयोधनबलमसद्वीरमुक्तसिंहनादसंवलितसमरतूर्यमबान्धवममित्रबान्धवं कौरवसङ्ग्रामस्थानमवलोक्यायतमुष्णं च निश्वसितवान्'; 'निहतकुरुशतगजवाजिनरकलेवरसंपतद्गृध्रकङ्कजम्बुकमुत्सन्नयोधमसद्वीरविमुक्तसिंहनादसंवलितसमरतूर्यमबान्धवममित्रकौरवं रणस्थानमालोक्य दीर्घमुष्णं च निश्वसितवान्'. ११. 'वृकोदरेणोपगम्याभिहितम्'. १२. 'भो भोः कौरवराज'; 'भोः कौरवराज'.

भोः कौरवराज, [१]कृतं बन्धुनाशदर्शनमन्युना । [२]मैवं विषादं कृथाः पर्याप्ताः [३]पाण्डवाः समरायाहमसहाय इति ।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन ।
[४]दंशितस्यात्तशस्त्रस्य [५]तेन तेऽस्तु रणोत्सवः ॥ १० ॥

[६]इत्थं श्रुत्वासूयान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान्धार्तराष्ट्रः ।

कर्णदुःशासनवधात्तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्धुं [७]त्वमेव प्रियसाहसः ॥ ११ ॥

इत्युत्थाय [८]च [९]परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ वि[१०]चित्रविभ्रमभ्रमितगदापरिभासुरभुजदण्डौ मण्डलैर्विचरितुमारब्धौ भीमदुर्योधनौ । [१][११]अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः । आह च देवो देवकीनन्दनः । अपर्युषितप्रतिज्ञे च मारुतौ प्रणष्टे

---

शरीरम् । जम्बूकः शृगालः । पर्याप्ता आगताः । **पञ्चानामिति** । अस्माकं मध्ये । दंशितस्य कृतसन्नाहस्य । तेन सह तव रणोत्सवोऽस्त्विति संबन्धः । तेनेति सहार्थे तृतीया ॥ १० ॥ कुमारयोः भीमार्जुनयोः । **कर्णेति** । हे भीम, त्वमेव योद्धुं प्रियः । कीदृशः । अमित्रः साहसी च ॥ ११ ॥ विभ्रमो विलासः । मण्डलं करणविशेषः । प्रणष्टेऽदृष्टे । समारम्भा मङ्ग-

---

1 'अहं च देवेन चक्रपाणिना' इत्यत आरभ्य 'परिपतत्याजौ कुतः संशयः' (६।१२) इत्यादिना 'मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः' इत्यन्तेन द्रौपदीकेशसंयमनयुधिष्ठिरराज्याभिषेकयोर्भाविनोरपि सिद्धत्वेन प्रदर्शकं प्ररोचनाख्यं अवमर्शसन्ध्यङ्गम्; तल्लक्षणं यथा—'सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना' इति ।

---

पाठा०—१. 'कृतं बन्धुजननाशजेन मन्युना'; 'कृतं बन्धुजनमन्युना'; 'अलं बन्धुजनमन्युना'; 'कृतं बन्धुजननाशमन्युना'; 'कृतं बन्धुनाशदर्शनजातमन्युना'. २. 'विषादं मा कृथाः'. ३. 'पाण्डवाः सोऽहमसहाय इति । किं च'. ४. 'वर्मितस्य'. ५. 'ते मते'. ६. 'इत्थं च श्रुत्वा किंचिदश्रुपातान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान् ।' 'इत्थं श्रुत्वासूयात्मिकां निक्षिप्य कुमारयोर्दृष्टिमुक्तवान्धार्तराष्ट्रः ।'. ७. 'त्वमेकः'. ८. 'च' इति क्वचिन्नास्ति. ९. 'परस्परक्रोधाक्षेपपरुषवाक्कलहप्रसारितघोरसङ्ग्रामौ'; 'परस्पराक्षेपप्रवर्तितघोरसङ्ग्रामौ'. १०. 'चित्रगदापरिघभासुरभुजभरौ मण्डलैर्विहर्तुमारब्धौ भीमदुर्योधनौ'; 'चिरभ्रमितगदापरिघभासुरभुजपञ्जरौ मण्डलैश्चरितुमारब्धौ भीमदुर्योधनौ'. ११. 'अहं च चक्रपाणिना'; 'अत्रान्तरेऽहं च देवेन चक्रपाणिना'.

कौरवराजे महानासीन्नो विषादः । संप्रति [1]पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान् । अभ्युदयोचिताश्[2]चानवरतं प्रवर्त्यन्तां समारम्भाः । कृतं संदेहेन,—

पूर्यन्तां सलिलेन रत्नकलशा [3]राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम् ।
रामे [4]शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥ १२ ॥

**द्रौपदी**—( सबाष्पम् । ) जं देवो त्तिहुअणणाहो [5]भणादि तं कहं अण्णहा भविस्सदि ? । [ यद्देवस्त्रिभुवननाथो भणति तत्कथमन्यथा भविष्यति ? । ]

**पाञ्चालकः**—[6]न केवलमियमाशीः । असुरनिषूदनस्यादेशोऽपि ।

**युधिष्ठिरः**—को हि नाम [7]भगवता संदिष्टं विकल्पयति । कः कोऽत्र भोः ? ।

( प्रविश्य । )

**कञ्चुकी**—आज्ञापयतु देवः ।

**युधिष्ठिरः**—[1]दे[8]वस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजयमङ्गलाय प्रवर्त्यन्तां तदुचिताः समारम्भाः ।

लादिक्रियाः । **पूर्यन्तामिति** । कबरी केशवेशः । 'क्षणो मुहूर्तोत्सवयोः' इति शाश्वतः । कबरीबन्ध इति निमित्तसप्तमी । रामे परशुरामे । शातं निशितम् । परिपतति गच्छति सति ॥ १२ ॥ **द्रौपदीवाक्ये** । यद्देवस्त्रिभुवननाथो भणति तत्कथमन्यथा भविष्यति ? ॥ 'आज्ञा निदेश आदेशः' इत्य-

1 इत आरभ्य 'प्रवर्त्यन्तां तदुचिताः समारम्भाः' इत्यन्तेन प्रवर्तनाख्यो नाट्यालङ्कारः; तल्लक्षणं चोक्तं दर्पणे—'प्रवर्तनं तु कार्यस्य यत्स्यात्साधुप्रवर्तनम्' इति ।

पाठा०—१. 'पुनर्भीमसेनेन समासादिते सुयोधने निष्कण्टकीकृतं भुवनतलं परिकलयतु भवान्'; 'पुनरस्मिन्दुरात्मनि सुयोधने भीमसेनेनासादिते निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान्'. २. 'च प्रवर्त्यन्तामनवरतमङ्गलसमारम्भाः'; 'चानवरतं प्रवर्त्यन्तां मङ्गलसमारम्भाः'. ३. 'राज्येऽभिषेकाय'. ४. 'घोरकुठारभासुरकरे क्षत्रद्रुमच्छेदिनि'. ५. 'आणवेदि'. ६. 'किमन्यथा संभावितेन । मधुसूदनस्यादेश एवायम्'. ७. 'भगवतां'. ८. 'देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य विजयमङ्गलाशंसया प्रवर्त्यन्तां तदुचिताः समारम्भाः'; 'देवस्य देवकीनन्दनस्य

कञ्चुकी—[1]यथाज्ञापयति देवः। (सोत्साहं परिक्रम्य।) भो भोः संविधातॄणां पुरःसराः, यथाप्रधानम[2]न्तर्वेश्मिका दौवारिकाश्च, [3]एष खलु भुजबलपरिक्षेपोत्तीर्णकौ[4]रवपरिभवसागरस्य निर्व्यूढदु[5]र्वहप्रतिज्ञाभारस्य [6]सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य [7]दुःशासनोरःस्थलविदलननरसिंहस्य [8]दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य बलिनः प्राभञ्जनेर्वृ[9]कोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः। (आकाशे।) किं ब्रूथ—'[10]सर्वतोऽधिकतरमपि प्रवृत्तं [11]किं नालोकयसि' इति। साधु पुत्रकाः, साधु। [12]अनुक्तहितकारिता हि प्रकाशयति मनोगतां [13]स्वामिभक्तिम्।

[14]युधिष्ठिरः—आर्य जयंधर।

कञ्चुकी—आज्ञापयतु देवः।

[15]युधिष्ठिरः—गच्छ प्रियख्यापकं पाञ्चालकं पारितोषिकेण परितोषय।

---

मरः॥ संविधाता पुरोहितादिः। यथाप्रधानं प्रधानपुरुषानुक्रमेण। अन्तर्वेश्मिका अन्तःपुरचारिणः। दौवारिका द्वारनियुक्ताः। निर्व्यूढः कृतः। प्रभञ्जनो वायुः। प्रभञ्जकस्य भञ्जयितुः। प्राभञ्जनेर्वायुपुत्रस्य भीमस्य। अधिकम्। मङ्गलकर्मेति

---

बहुमानाद्वत्सस्य मे विजयमङ्गलशंसया प्रवर्त्यन्तां तदुचिताः समारम्भाः'; 'देवस्य देवकीनन्दनस्यादेशाद्वत्सस्य मे मङ्गलविजयाय प्रवर्त्यन्तामनवरतं तदुचिताः समारम्भाः'; 'कञ्चुकिन्, देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्तन्तां तत्रोपचिताः समारम्भाः'.

पाठा०-१. 'यथाज्ञापयति देवः' इति क्वचिन्नास्ति. २. 'अन्तर्वासिकाः'; 'अन्तर्वेश्मनि'. ३. 'एवं खलु'. ४. 'कौरवार्णवस्य'. ५. 'दुर्धर–'. ६. 'सुयोधनानुजशतोद्धूननप्रभञ्जनस्य'. ७. 'कुमारदुःशासनोरःस्थलनरसिंहस्य'; 'बलिनः प्राभञ्जनेर्दुःशासनोरःस्थलविदलननरसिंहस्य'. ८. 'दुर्योधनोरुस्तम्भभञ्जनाय कृतनिश्चितविजयस्य सहोदरपक्षपातिना चेतसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः'; 'दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य' इति क्वचिन्नास्ति. ९. 'वृकोदरस्य' इति क्वचिन्नास्ति. १०. 'सर्वमधिकमपि प्रवृत्तमालोकयतु।'. ११. 'किं वा'. १२.'अनुकूलहितकारिता प्रकाशयति मनोगतां स्वामिभक्तिम्'. १३. 'स्वामिभक्तिम्। (राजानमुपगम्य।) देव, प्रथमत एव सर्वमनुष्ठितम्।'. १४. 'युधि०—आर्य जयंधर। कञ्चुकी—आज्ञापयतु देवः।' इति क्वचिन्नास्ति. १५. 'युधि०—प्रियख्यापकं पाञ्चालकं पाञ्चाल्या मम च पारितोषिकेण प्राच्छादय'.

**कञ्चुकी**—[1]यदाज्ञापयति देवः। (इति पाञ्चालकेन सह निष्क्रान्तः।)

**[2]द्रौपदी**—महाराअ, किंणिमित्तं उण णाहभीमसेणेण सो दुराआरो [3]भणिदो—'पंचाणं वि अम्हाणं [4]मज्झे जेण दे रोअदि [5]तेण सह दे संगामो होदु' त्ति। [6]जइ मद्दीसुदाणं एकदरेण सह संगामो तेण पत्थिदो भवे तदो अच्चाहिदं भवे। [महाराज, किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः—'पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्ग्रामो भवतु' इति। यदि माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽत्याहितं भवेत्।]

**युधिष्ठिरः**—कृष्णे, [7]एवं मन्यते जरासंधघाती। [8]हतसकलसुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः [9]परित्यजेदायुधं तपोवनं वा व्रजेत्सन्धिं वा पितृमुखेन याचेत। एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत्सकलरिपुजयस्येति। समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः। शङ्के चाहं गदायुद्धं वृकोदरस्यैवानेन। [10]अयि सुक्षत्रिये, पश्य,—

---

शेषः॥ पारितोषिकेण परितोषहेतुना धनेन॥ **द्रौपदीवाक्ये**। महाराज, अथ किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचार एवं भणितः—'पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्गरो भवतु' इति। यदि पुनर्माद्रीसुतयोर्मध्य एकतरेण सह सङ्गरस्तेन प्रार्थितो भवेत्तदात्याहितं भवेत्। अत्र माद्रीसुतौ नकुलसहदेवौ॥

---

**पाठा०**—१. 'यदाज्ञापयसि (इति निष्क्रान्तः।)'. २. 'द्रौपदी—किं उण णाहेण'. ३. 'एव्वं भणिदो'. ४. 'मज्झे' इति क्वचिन्नास्ति. ५. 'तेण सह संगामो होदु त्ति'; 'तेण सह समरो होदु त्ति'. ६. 'जइ एदाणं मद्दीसुदाणं एकदरेणावि सह संगामो तेण पत्थिदो भवे'; 'जइ उण मद्दीसुदाणं मज्झे एकदरेण सह संगामो तेण पत्थिदो भवे'; 'कहं णाम एदाणं मद्दीसुदाणं एकदरेण पत्थिदो तेण संगामो भवे'. ७. 'एवं मन्ये तस्य जरासंधघातिनोऽभिप्रायः'. ८. 'हतसकलबन्धुवीरानुजराजन्यासु'. ९. 'परित्यज्य'. १०. 'अयि' इति क्वचिन्नास्ति.

क्रोधोद्गूर्णगदस्य[1] नास्ति सदृशः सत्यं रणे मारुतेः
कौरव्ये कृतहस्तता पुनरियं देवे[2] यथा सीरिणि ।
स्वस्त्यस्तूद्धत[3]धार्तराष्ट्रनलिनीनागाय वत्साय मे
शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम् ॥ १३ ॥

( नेपथ्ये । )

तृषितोऽस्मि[4] भोस्तृषितोऽस्मि । संभावयतु कश्चित्सलिलच्छायासंप्रदानेन माम् ।

**युधिष्ठिरः**—( आकर्ण्य । ) कः कोऽत्र भोः ? ।

( प्रविश्य[5] । )

**कञ्चुकी**—आज्ञापयतु देवः ।

**युधिष्ठिरः**—ज्ञायतां किमेतत् ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रम्य पुनः प्रविश्य । ) देव, क्षुन्मानतिथिरुपस्थितः[6] ।

**युधिष्ठिरः**—शीघ्रं प्रवेशय ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

( ततः प्रविशति मुनिवेषधारी[7][1] चार्वाको नाम राक्षसः । )

**राक्षसः**—( आत्मगतम्[8] । ) एषोऽपि[9] चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान्वञ्चयितुं भ्रमामि । ( प्रकाशम् । ) तृषि[10]-

---

क्रोधेति । उद्गूर्ण उद्यमितः । 'उद्गूर्णोद्यते' इत्यमरः । कृतहस्तता अस्त्राभ्यासः । 'कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत्' इत्यमरः । सीरिणि बलभद्रे । तस्य

---

1 अत्र च 'तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः । साक्षः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः । स दुष्टः पापमाशंसुः पाण्डवानां महात्मनाम् ॥' इत्यादिशान्तिपर्व( अ० ३८ )गता कथानुसन्धेया ।

---

पाठा०—१. 'क्रोधाद्गूर्णगदस्य'; 'क्रोधोद्धूर्णगदस्य'. २. 'देवस्य या सीरिणः'. ३. 'उद्धृत–'. ४. 'भोस्तृषितोऽस्मि, भोस्तृषितोऽस्मि'; 'भोस्तृषितोऽस्मि।'. ५. 'प्रविश्य सत्वरं'. ६. 'क्षुधाम्लानोऽतिथिरुपस्थितः'. ७. 'मुनिवेष'. ८. '(आत्मगतम् ।)' इत्यस्मादारभ्य '( प्रकाशम् । )' इत्यन्तं कचिन्नास्ति. ९. 'एषोऽस्मि सुयोधनस्य मित्रं'; 'एषोऽस्मि सुयोधनस्य परं मित्रं'; 'एषोऽस्मि भोः सुयोधनस्य मित्रं'. १०. 'तृषितोऽस्मि तृषितोऽस्मि'.

तोऽस्मि । संभावयतु मां कश्चिज्जलच्छायाप्रदानेन । (इति राज्ञः समीपमुपसर्पति ।)

(सर्वे उत्तिष्ठन्ति ।)

युधिष्ठिरः—मुने, अभिवादये ।

राक्षसः—अकालोऽयं समुदाचारस्य । जलप्रदानेन संभावयतु माम् ।

युधिष्ठिरः—मुने, इदमासनम् । उपविश्यताम् ।

राक्षसः—(उपविश्य ।) ननु भवतापि क्रियतामासनपरिग्रहः ।

युधिष्ठिरः—(उपविश्य ।) कः कोऽत्र भोः, सलिलमुपनय ।

(प्रविश्य गृहीतभृङ्गारः)

कञ्चुकी—(उपसृत्य ।) महाराज, शिशिरसुरभिसलिलसंपूर्णोऽयं भृङ्गारः पानभाजनं चेदम् ।

युधिष्ठिरः—मुने, निर्वर्त्यतामुदन्याप्रतीकारः ।

राक्षसः—(पादौ प्रक्षाल्योपस्पृशन्विचिन्त्य ।) भोः, क्षत्रियस्त्वमिति मन्ये ।

युधिष्ठिरः—सम्यग्वेदी भवान् ।

राक्षसः—सुलभश्च स्वजनविनाशः सङ्ग्रामेषु प्रतिदिनमतो नादेयं भवद्भ्यो जलादिकम् । भवतु । छाययैवानया सरस्वतीशिशिरतरङ्गस्पृशा मरुता चानेन विगतक्लमो भविष्यामि ।

---

भीमस्य ॥ १३ ॥ 'भृङ्गारः कनकालुका' इत्यमरः ॥ 'उदन्या तु पिपासा तृट्'

---

पाठा०–१. '(इति राज्ञः समीपमुपगच्छति ।) युधि०—(सहसोत्थाय ।) मुने, अभिवादये'. २. 'मां भवान्'. ३. 'युधि०—मुने, उपविश्यतामासने'; 'युधि०—जयंधर, जयंधर, सलिलं सलिलमुपनय । इदमासनम् । मुने, उपविश्यताम्'. ४. '(तथा कृत्वा)'. ५. 'आसनपरिग्रहः । (सर्वे उपविशन्ति ।)'. ६. 'युधि०—कः कोऽत्र भोः ।'. ७. 'कञ्चुकी—(निष्क्रम्य पुनः प्रविश्य ।) शिशिरजलसंपूर्णोऽयं भृङ्गारो भाजनं चेदम् ।'. ८. 'विचिन्त्य' इति क्वचिन्नास्ति. ९. 'भो भोः'. १०. 'सम्यग्वेत्ति भवान् । क्षत्रिय एवास्मि ।'. ११. 'प्रतिदिनसुलभस्वजनविनाशेषु सङ्ग्रामेषु युष्मत्तो नादेयं सलिलादिकम्'; 'यद्येवं प्रतिदिनसुलभस्वजनविनाशनेषु सङ्ग्रामेषु युष्मत्तो नादेयं सलिलादिकम्'; 'सुलभस्वजनविनाशेभ्यः प्रतिदिनमनादेयं भवद्भ्यः सलिलम्'. १२. 'छाययैवानयाहं सरस्वतीभूमिभागस्पृशा'. १३. 'मरुतानेन'.

**द्रौपदी**—बुद्धिमदिए, वीएहि महेसिं [1]इमिणा तालविंतेण ।
[ बुद्धिमतिके, वीजय महर्षिमनेन तालवृन्तेन । ]

( चेटी तथा करोति । )

**राक्षसः**—[2]भवति, अनुचितोऽयमस्मासु समुदाचारः ।

**युधिष्ठिरः**—[3]मुने, कथय कथमेवं भवान्परिश्रान्तः ।

**राक्षसः**—[4]मुनिजनसुलभेन कौतूहलेन तत्रभवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं [5]पर्यटामि समन्तपञ्चकम् । अद्य तु [6]बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि ।

( [7]सर्वे विषादं नाटयन्ति । )

**कञ्चुकी**—[8]मुने, न खल्वेवम् । भीमसुयोधनयोरिति कथय ।

**राक्षसः**—[9]आः, अविदितवृत्तान्त एव कथं मामाक्षिपसि ? ।

**युधिष्ठिरः**—[10]महर्षे, कथय कथय ।

**राक्षसः**—[11]क्षणमात्रं विश्रम्य सर्वं [12]कथयामि भवतो न पुनरस्य वृद्धस्य ।

**युधिष्ठिरः**—[13]कथय किमर्जुनसुयोधनयोरिति ।

---

इत्यमरः ॥ सरस्वती नदीभेदः ॥ **द्रौपदीवाक्ये** । हञ्जे बुद्धिमतिके, वीजयैनं महर्षिमेतेन तालवृन्तकेन । 'व्यजनं तालवृन्तकम्' इत्यमरः ॥ **चेटीवाक्ये** । यद्भट्टिनी समाज्ञापयति ॥ बलवत्तर इति स्वार्थिकस्तरप् ॥ भवतः कृते इति

---

पाठा०–१. 'इमिणा' इति क्वचिन्नास्ति. २. 'अहह, भवति, अनुचितोऽयमस्मासु समुदाचारः'; 'भवतु । अनुचितोऽस्मासु समुदाचारोऽयम्'. ३. 'मुने, कथय कथं पुनरेवं'; 'मुने, कथं पुनरेवं'; 'मुने, सर्वं तावत्तिष्ठतु । कथं पुनरेवं'. ४. 'भो, बहुजनसुलभेन कौतूहलेन'. ५. 'सदा पर्यटामि'. ६. 'अत्यन्तबलवत्तया शरदातपस्यापर्याप्तमेवालोक्य'. ७. '(सर्वे विषादं नाटयन्ति ।)' इति क्वचिन्नास्ति. ८. 'मुने, न खल्विदम्'. ९. 'कथमविदितवृत्तान्त एवमाक्षिपसि'. १०. 'महर्षे, कथय'. ११. 'मुहूर्तं तिष्ठ । विश्रम्य सर्वं कथयिष्यामि भवते'. १२. 'कथयामि भवते ।'; 'कथयामि भवते न पुनरस्य ।'; 'कथयामि भवते न पुनरस्य वृद्धापसदस्य पुरतः ।'. १३. 'भगवन्, एतावदेव कथय किं पुनरर्जुनसुयोधनयोरिति'.

राक्षसः—पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमर्जुनसुयोधनयोरिति।

युधिष्ठिरः—न भीमसुयोधनयोरिति ?।

राक्षसः—वृत्तं तत्।

(युधिष्ठिरो द्रौपदी च मोहमुपगतौ।)

कञ्चुकी—(सलिलेनासिच्य।) समाश्वसितु देवो देवी च।

चेटी—समस्ससदु समस्ससदु देवी। [समाश्वसितु समाश्वसितु देवी।]

(उभौ संज्ञां लभेते।)

युधिष्ठिरः—किं कथयसि मुने, वृत्तं भीमसुयोधनयोर्गदायुद्धमिति।

द्रौपदी—भअवं, कहेहि कहेहि किं वुत्तं त्ति। [भगवन्, कथय कथय किं वृत्तमिति।]

राक्षसः—कञ्चुकिन्, कौ पुनरेतौ ?।

कञ्चुकी—एष देवो युधिष्ठिरः। इयमपि पाञ्चालतनया।

राक्षसः—आः, दारुणमुपक्रान्तं मया।

द्रौपदी—हा णाह भीमसेण। (इति मोहमुपगता।) [हा नाथ भीमसेन।]

कञ्चुकी—किं नाम कथितम्!।

शेषः ॥ चेटीवाक्ये। समाश्वसितु देवी॥ द्रौपदीवाक्ये। भगवन्, कथय

पाठा०-१. 'ननु पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमिति। युधि०—न भीमसुयोधनयोरिति।'; 'ननु कथितमेव मया गदायुद्धं वर्तत इति। युधि०—(सास्रम्।) ननु भीमसुयोधनयोः।'. २. 'वृत्तं तदेव। राजा—हा वत्स भीमसेन, क्वासि। प्रयच्छ मे प्रतिवचनम्। द्रौपदी—णाह भीमसेण, कहिं सि। देहि मे पडिवअणं। (इति मोहमुपागतौ।) कञ्चुकी—महाराज, समाश्वसिहि समाश्वसिहि। प्रकृतिमापद्यताम्। चेटी—(देवीं प्रति) समस्ससदु समस्ससदु देवी। राजा—(संज्ञां लब्ध्वा।) भगवन्, किं कथयसि'. ३. '(सलिलमासिच्य।)'. ४. 'उपलभेते'. ५. 'भअवं, कहेहि किं वुत्तं त्ति'. ६. 'ब्रह्मन्, एष देवो युधिष्ठिरः'. ७. 'एषा'; 'इयं'; 'इयं च'. ८. 'पाञ्चालराजतनया'. ९. 'मया नृशंसेन'. १०. 'भीम'. ११. 'कञ्चुकी—किं नाम कथितम्' इति पाठः पुस्तकान्तरे नास्ति.

चेटी—समस्ससदु समस्ससदु देवी । [ समाश्वसितु समाश्वसितु देवी । ]

युधिष्ठिरः—( सास्रम् । ) ब्रह्मन्,—

पदे संदिग्ध एवास्मिन्दुःखमास्ते युधिष्ठिरः ।
वत्सस्य निश्चिते तत्त्वे प्राणत्यागादयं सुखी ॥ १४ ॥

राक्षसः—( सानन्दमात्मगतम् । ) अयमेव मे यत्नः । ( प्रकाशम् । ) यदि त्ववश्यं कथनीयं तदा संक्षेपतः कथयामि । न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम् ।

युधिष्ठिरः—( अश्रूणि मुञ्चन् । )

सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा ।
वत्सस्य किमपि श्रोतुमेष दत्तः क्षणो मया ॥ १५ ॥

राक्षसः—श्रूयताम् ।

तस्मिन्कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

द्रौपदी—( सहसोत्थाय । ) तदो तदो ? । [ ततस्ततः ? । ]

राक्षसः—( स्वगतम् । ) कथं पुनरनयोर्लब्धसंज्ञतामपनयामि ? । ( प्रकाशम् । )

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः ।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारौ गतः ॥ १६ ॥

---

किं वर्तत इति ॥ हा नाथ भीमसेन ॥ **पद इति** । संदिग्ध एव पदे भवदुक्ते युधिष्ठिरो दुःखं यथा स्यादेवमास्ते तिष्ठति ॥ १४ ॥ **सर्वथेति** । किमपीत्यनेनामङ्गल्यं निवारयति ॥ १५ ॥ **तस्मिन्निति** । घोरं भयानकम् । प्रियः शिष्यो यस्येति प्रियशिष्यः, तस्य भावः प्रियशिष्यता । प्रतिकृतिं प्रतीकारम् । अर्था-

---

पाठा०–१. 'युधि०—ब्रह्मन्'; 'युधि०—(सास्रम् ।) ब्रह्मन्, कथय कथय'. २. 'अहं सुखी'. ३. 'अयं मे यत्नः । (प्रकाशम् ।) यद्येवमवश्यकथनीयं संक्षेपेण कथयामि'; 'ममाप्ययमेव यत्नः । (प्रकाशम् ।) यदि वावश्यमेव कथनीयं तदा संक्षेपतः कथयामि'; 'अत्रैव मे यत्नः । ( प्रकाशम् ) यदि त्ववश्यं कथनीयं तदा संक्षेपतः कथयामि'. ४. 'अतिविस्तरेण'. ५. 'विमुञ्चन्'. ६. 'एतद्दत्तं मनो मया'. ७. 'गुरुगदाभीमध्वनौ'. ८. 'द्रौपदी—(लब्धसंज्ञा ।) अयि, तदो किं'. ९. 'व्यालम्ब्य प्रियशिष्यतां मुसलिना'. १०. 'संज्ञा रहः सा कृता'; 'शक्ती रहस्याहिता'.

युधिष्ठिरः—हा वत्स, वृकोदर। (इति मोहमुपगतः।)

द्रौपदी—हा णाह भीमसेण, हा मह परिभवपडिआरपरिचत्तजीविअ, जडासुरबअहिडिंबकिम्मीरकीचअजरासंधणिसूदण, सोअंधिआहरणचाडुआर, देहि मे पडिवअणं। (इति मोहमुपगता।) [हा नाथ भीमसेन, हा मम परिभवप्रतीकारपरित्यक्तजीवित, जटासुरबकहिडिम्बकिर्मीरकीचकजरासंधनिपूदन, सौगन्धिकाहरणचाटुकार, देहि मे प्रतिवचनम्।]

कञ्चुकी—(सास्रम्।) हा कुमार भीमसेन, धार्तराष्ट्रकुलकमलिनीप्रालेयवर्ष, (ससंभ्रमम्।) समाश्वसितु महाराजः। भद्रे समाश्वासय स्वामिनीम्। महर्षे, त्वमपि तावदाश्वासय राजानम्।

राक्षसः—(स्वगतम्।) आश्वासयामि प्राणान्परित्याजयितुम्। (प्रकाशम्।) भो भीमाग्रज, क्षणमेकं चीयतां समाश्वासः। कथाशेषोऽस्ति।

युधिष्ठिरः—(समाश्वस्य।) महर्षे, किमस्ति कथाशेषः?।

---

दुःशासनवधस्य। दुःशासनारौ भीमे। तथा च भीमस्तेन हत इति भावः॥ १६॥ द्रौपदीवाक्ये। हा नाथ, मदीयपरिभवप्रतीकारपरित्यक्तजीवित, हा जटासुरबकहिडिम्बनिपूदन, हा सौगन्धिकाहरणात्मचाटुकार, क्वासि। देहि मे प्रतिवचनम्। अत्र जटासुरो दैत्यभेदः। बको दैत्यभेदः। सौगन्धिकं कमलम्। गङ्गायाः

---

1 अत्र 'तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत्। अपश्यत्प्रीतिजननं बालार्कसदृशद्युति।' इत्यत आरभ्य 'स शक्रवद्दानवदैत्यसङ्घान् विक्रम्य जित्वा च रणेऽरिसङ्घान्। विगाह्य तां पुष्करिणीं जितारिः कामाय जग्राह ततोऽम्बुजानि' इत्यादिसौगन्धिकाहरणकथा महाभारततो (वन० अ० १५४) ह्यनुसन्धेया।

---

पाठा०-१. 'देहि मे पडिवअणं' इति क्वचिन्नास्ति. २. '(ससंभ्रमम्।) महाराज, समाश्वसिहि समाश्वसिहि। भद्रे, समाश्वासयात्रभवतीम्।'; 'महाराज, समाश्वसिहि समाश्वसिहि। भद्रे, समाश्वासयात्रभवतीम्।'. ३. 'महर्षे, त्वमप्याश्वासय महाराजम्'. ४. 'त्याजयितुम्'. ५. 'अयि भो भीमाग्रज, क्षणमेकमाधीयतामाश्वासः। कथाशेषोऽप्यस्ति।'. ६. 'युधि०—(समाश्वस्य।) महर्षे, किमस्ति कथाशेषः। राक्षसः—ततश्च हते'; 'युधि०—(समाश्वस्य।) भगवन्, कथय किं कथाशेषोऽप्यस्त्येव। द्रौपदी—(प्रतिबुद्धा।) किं कहासेसो। कञ्चुकी—कथय कथय। चेटी—कहेहि कहेहि। राक्षसः—ततश्च हते'.

**द्रौपदी**—( प्रतिबुद्धा । ) भअवं, कहेहि कीदिसो कहासेसो त्ति। [ भगवन्, कथय कीदृशः कथाशेष इति । ]

**कञ्चुकी**—कथय कथय ।

**राक्षसः**—[1]ततश्च हते तस्मिन्सुक्षत्रिये वीरसुलभां गतिमुपगते [2]समग्रसंगलितं भ्रातृवधशोकजं बाष्पं प्रमृज्य प्रत्यग्रक्षतजच्छटाचर्चितां तामेव गदां [3]भ्रातृहस्तादाकृष्य निवार्यमाणोऽपि संधित्सुना [4]वासुदेवेन, आगच्छागच्छेति सोपहासं भ्रमितगदाझङ्कारमूर्च्छितग[5]म्भीरवचनध्वनिनाहूयमानः कौरवराजेन तृतीयोऽनुजस्ते किरीटी योद्धुमारब्धः। [6]अकृतिनस्तस्य गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुरतिप्र[7]यत्नात्स्वरथमारोप्य द्वारकां नीतः।

**युधिष्ठिरः**—साधु भो अर्जुन, [8]तदेव प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता। अहं पुनः केनोपायेन [9]प्राणपरित्यागाद्धृदयमुत्साहयिष्ये ।

**द्रौपदी**—[10]हा णाह भीमसेण, ण जुत्तं दाणिं दे कणीअसं भादरं असिक्खिदं गदाए दारुणस्स सत्तुणो अहिमुहं गच्छंतं उवेक्खिदुं। ( मोहमुपगता । ) [ हा नाथ भीमसेन, न युक्तमिदानीं ते कनीयांसं भ्रातरमशिक्षितं गदायां दारुणस्य शत्रोरभिमुखं गच्छन्तमुपेक्षितुम् । ]

---

सुवर्णकमलाहरणाद्यद्द्रौपद्या आराधनं तत्र चाटुकारः प्रेम यस्य तादृशः ॥ **द्रौपदीवाक्ये** । भगवन्, कथय कीदृशः कथाशेषः ॥ गतिं मरणरूपाम् । संधित्सुना संधिं कर्तुमिच्छुना । रामो बलभद्रः ॥ **द्रौपदीवाक्ये** । हे नाथ भीम-

---

पाठा०–१. 'ततश्च गते तस्मिन्सुक्षत्रिये वीरसुलभां गतिं'. २. 'समग्रसंगलितमेव भ्रातृवधशोकजं बाष्पं प्रमृज्य भ्रातृवधशोकादपहाय गाण्डीवं प्रत्यग्रक्षतजच्छटाचर्चितां तामेव गदां'; 'समग्रसंगलितभ्रातृवधशोकजं बाष्पमुत्सृज्य भ्रातृवधशोकादपहाय गाण्डीवं प्रत्यग्रक्षतजच्छटाचर्चितां तामेव गदां'. ३. 'भ्रातृहस्ताद्बलादाकृष्य निवार्यमाणः संधित्सुना'. ४. 'भगवता वासुदेवेन'. ५. 'गम्भीरवादध्वनिनाहूयमानः कौरवराजेन सह'. ६. 'तथाऽकृतिनस्तस्य गदाघातान्निधनं'; 'तथा कृतिनस्तस्य गदाघातान्निधनं'; 'अकृतिनस्तस्य गदायां युद्धं'. ७. 'प्रयत्नात्'. ८. 'एतावत्प्रतिपन्ना वृकोदरानुगमनपदवी'. ९. 'प्राणापगमनमहोत्सवमुत्सहिष्ये'. १०. 'हा णाह, भादुवच्छल, ण जुत्तं भादरं असिक्खिदं गदाए सत्तुणो मुहं गच्छंतं उवेक्खिदुं'.

राक्षसः—ततश्चाहं,—

युधिष्ठिरः—भवतु मुने, किमतःपरं श्रुतेन। हा[1] तात भीमसेन, कान्तारव्यसनबान्धव, हा मच्छरीरस्थितिविच्छेदकातर, जतु[2]गृहविपत्समुद्रतरणयानपात्र, हा किर्मीरहिडिम्बासुरजरासंधविजयमल्ल, हा कीचक[3]सुयोधनानुजकमलिनीकुञ्जर,—

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सा[4] तदा
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता।
किं नामापकृतं मया तदधिकं त्वय्[5]यद्य यद्गम्यते
त्यक्त्वा नाथ सबान्धवं सपदि मां प्रीतिः क ते साऽधुना॥१७॥

द्रौपदी—(संज्ञामुपलभ्यो[6]त्थाय च।) महाराअ, किं एदं वट्टइ?। [महाराज, किमेतद्वर्तते?।]

युधिष्ठिरः—कृष्णे, किमन्यत्[7],—

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसंधिभेदा[8]शनिः।

---

सेन, युक्तमिदानीं ते कनीयांसं भ्रातरं धनुर्धरं गदाशिक्षाविमुखं दारुणस्य शत्रोरभिमुखं गच्छन्तं निवारयितुम्। अत्र कनीयांसं कनिष्ठम्॥ 'कान्तारो वर्त्म दुर्गमम्' इत्यमरः। शरीरस्थितिर्जीवनम्। यानपात्रं 'वोहित' इति ख्यातम्। 'यानपात्रं तु पोतः' इत्यमरः। किर्मीरो दैत्यभेदः। **निर्लज्जस्येति**। 'पणे द्यूते दुरोदरम्' इत्यमरः। हे वत्स, त्वया मम तदा दासताङ्गीकृतासीत्। **किं नामेति**। नाम प्रकाशय किं तदित्यर्थः। अतोऽधिकं त्वयि मयाद्य किमपकृतं तत्प्रकाशयेत्यर्थः॥ १७॥ **द्रौपदीवाक्ये**। हे महाराज, किं नामैतद्वर्तते?॥

---

पाठा०–१. 'हा तात भीमसेन, मम कान्तारव्यसनबान्धव, जतुगृहविपत्समुद्रतरणयानपात्र, हा किर्मीरहिडिम्बासुरजरासंधविजयैकमल्ल, हा कीचकसुयोधनानुजद्रुमोन्मूलनप्रभञ्जन, हा द्यूतपण, मम शरीरस्थितिपरिखेदशङ्कासूदन, हा मदाज्ञासंपादक, हा कौरववनदावानल'; 'हा तात भीमसेन, जतुगृहसमुद्रतरणयानपात्र ('जतुगृहसमुद्रतरणयानपोत'), हा किर्मीरहिडिम्बासुरजरासंधजयमल्ल, हा कीचकसुयोधनानुजकमलिनीकुञ्जर, हा द्यूतप्रणयिन्, मम शरीरस्थितिपरिखेदशङ्कासूदन, हा मदाज्ञासंपादक, हा कौरववनदावानल'. २. 'हा जतुगृहसंतरणपोतपते, हा बकहिडिम्बकिर्मीरजटासुरजरासंधजयमल्ल'. ३. 'कीचकसुयोधनानुजशतकमलिनीकुञ्जर'; 'कीचकसुयोधनानुजकुलकमलिनीकुञ्जर'; 'कीचकसुयोधनानुजकमलवनप्रालेय'. ४. 'सीदता'. ५. 'त्वय्यद्य निर्वत्सलं त्यक्त्वाऽनाथमबान्धवं सपदि मां येनासि दूरं गतः'. ६. '(उत्थाय।)'. ७. 'किमन्यत्' इति क्वचिन्नास्ति. ८. 'मज्जाशनिः'.

गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥ १८ ॥

द्रौपदी[1]—णाह भीमसेण, तुए किल मे केसा संजमिदव्वा । ण जुत्तं वीरस्स खत्तिअस्स पडिण्णादं सिढिलेदुं । ता पडिवालेहि मं जाव उवसप्पामि । ([2]पुनर्मोहमुपगता ।) [ नाथ भीमसेन, त्वया किल मे केशाः संयमितव्याः । न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् । तत्प्रतिपालय मां यावदुपसर्पामि । ]

युधिष्ठिरः[3]—( आकाशे । ) अम्ब पृथे, श्रुतोऽयं तव पुत्रस्य समुदाचारः । मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः । तात जरासंधशत्रो, किं नाम वैपरीत्यमेतावता कालेनाल्पायुषि [4]त्वयि समालोकितं जनेन । अथवा मयैव बहूपलब्धम्,—

दत्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे ।
स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत्सूदतां
[5]वत्सैतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥ १९ ॥

---

स इति । मगधाधिपो जरासंधः । गदापरिघः पाणौ यत्र तादृशेन । पाणिः करः । भुजयुगेनेति लक्षणे तृतीया । किल प्रसिद्धौ ॥ १८ ॥ द्रौपदीवाक्ये । हा नाथ भीमसेन, त्वया किल मम केशाः संयमितव्याः । न युक्तमिदानीं भवतो वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् । तत्प्रतिपालय मां क्षणमात्रं यावत्त्वामनुगच्छामि ॥ पृथे पृथानामधेयि । तात मान्य । जरासंधशत्रो भीम । बहु स्वल्पायुःसूचकम् । तदेवाह—दत्वेति । करदो राजभागदाता । प्रीयसे प्रीतो

---

1 अत्र 'गदापरिघपाणिना' इति टीकानुगुणः पाठः.

---

पाठा०—१. 'द्रौपदी—(आकाशे दत्तदृष्टिः ।) णाह भीमसेण, तुए किल मे केसा संजमिदव्वा'; 'द्रौपदी—(आकाशे दत्तदृष्टिः ।) णाह, सअं किल मे केसा संजमिदव्वा'; 'द्रौपदी—णाह, सअं किल मे केसा संजमिदव्वा'; 'द्रौपदी—णाह, मे केसा संजमिदव्वा'. २. '(इति पुनर्मोहमुपगता ।)'; '(मोहमुपगता ।)'. ३. 'युधि०—(आकाशे दत्तदृष्टिः ।) अम्ब पृथे, ननु श्रुतोऽयं तव पुत्रस्य समुदाचारः । मामेकमनाथमकरुणो विलपन्तमुत्सृज्य क्वापि गतः'. ४. 'त्वयि' इति क्वचिन्नास्ति. ५. 'वत्सैतानि विनश्वरस्य सहसा स्पष्टानि चिह्नानि ते'; 'तान्येतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते'.

मुने, किं कथयसि ? । ('तस्मिन्कौरवभीमयोः' (६।१६) इत्यादि पठति।)

राक्षसः—एवमेतत् ।

युधिष्ठिरः—धिगस्मद्भागधेयानि । भगवन्कामपाल, कृष्णाग्रज, सुभद्राभ्रातः,—

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्॥२०॥

(द्रौपदीमुपगम्य।) अयि पाञ्चालि, उत्तिष्ठ । समानदुःखावेवावां भवावः । मूर्च्छया किं मामेवमतिसंधत्से ? ।

द्रौपदी—(लब्धसंज्ञा।) बंधेदु णाहो दुज्जोहणरुधिलाद्देण हत्थेण दुस्सासणविमुक्कं मे केसहत्थं । हञ्जे बुद्धिमदिए, तव पच्चक्खं एव्व

---

भवसि । स्थित्यर्थं वासार्थम् । मत्स्यराजो विराटः । 'सूदस्तु सूपवत्सूपकारेऽपि व्यञ्जनेऽपि च' इति विश्वः । हे वत्स, एतानि चिह्नानि ते विनाशशीलस्य दृष्टानि । तथा च मम भाग्यदोषाद्गुणा एव ते दोषा वृत्ता इति भावः ॥ १९ ॥ 'कामपालो हलायुधः' इत्यमरः । **ज्ञातीति** । सुभद्राभ्रातृत्वेन विशेषणात्सुभद्राद्वारा ज्ञातिप्रीतिर्दर्शिता । धर्मो मनसि न कृतः । स च वीरयोः समदृष्टिता । रूढमुपचितम् । शिष्ययोर्भीमसुयोधनयोः ॥ २० ॥ अतिसंधत्से अनन्वितं करोषि ॥ **द्रौपदीवाक्ये** । बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दुःशासनविमुक्तं मे केश-

---

1 'भगवन्' इत्यत आरभ्य 'कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्' (६।२०) इत्यन्तेन पूज्यस्य गुरोर्बलभद्रस्य युधिष्ठिरेणादरोल्लङ्घनात् द्रवाख्यो विमर्शसन्धिः; तल्लक्षणं चोक्तं दर्पणे—'द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसंभवा' इति ।

---

पाठा०-१. 'इति पठति'. २. 'युधि०—अथवा धिगस्मद्भागधेयानि । भगवन्कामपाल, कृष्णाग्रज, सुभद्राभ्रातः'; 'युधि०—धिङ्मम भागधेयानि । (आकाशमवलोकयन्।) भगवन्सुभद्राभ्रातः, कामपाल'; 'युधि०—धिङ्मम भाग्यानि । (आकाशमवलोकयन्।) भगवन्कामपाल, कृष्णाग्रज'; 'युधि०—विगलन्ति भागधेयानि । भगवन्कामपाल, कृष्णाग्रज'. ३. 'नानुजस्यानुजे मे'. ४. 'प्रेमबन्धः'. ५. 'विमुखो मन्दभाग्ये मयि त्वम्'; 'विगुणो मन्दभाग्ये मयीत्थम्'. ६. 'उत्तिष्ठोत्तिष्ठ'. ७. 'अभिसंधत्से'. ८. 'बंधेदु बंधेदु'. ९. 'दुस्सासणमोइदं'.

णाहेण पडिण्णादं । ( कञ्चुकिनमुपेत्य । ) अज्ज[1], किं संदिट्ठं दाव मे[2] देवेण देवकीणंदणेण पुणो वि केसबंधणं आरंभीअदु त्ति । ता उवणेहि मे पुप्फदामाइं[3] । विरएहि दाव कबरीं । करेहि भअवदो णाराअणस्स[4] वअणं । ण खु सो अलीअं संदिसदि[5] । अहवा किं मए संतत्ताए[6] भणिदं ? । अचिरगदं[7] अज्जउत्तं अणुगमिस्सं । ( युधिष्ठिरमुपगम्य[8] । ) महाराअ, आदीवअ चिदां[9] । तुमं वि खत्तधम्मं अणुबंधंतो एव्व णाहस्स जीविदहरस्स अहिमुहो होहि । अहवा जं दे रोअदि[10] । [ बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दुःशासनविमुक्तं मे केशहस्तम् । हञ्जे बुद्धिमतिके, तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम् । आर्य, किं संदिष्टं तावन्मे देवेन देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति । तदुपनय मे पुष्पदामानि । विरचय तावत्कबरीम् । कुरु भगवतो नारायणस्य वचनम् । न खलु सोऽलीकं संदिशति । अथवा किं मया संतप्तया भणितम् ? । अचिरगतमार्यपुत्रमनुगमिष्यामि । महाराज, आदीपय चिताम् । त्वमपि क्षत्रधर्ममनुबध्नन्नेव नाथस्य जीवितहरस्याभिमुखो भव । अथवा यत्ते रोचते । ]

युधिष्ठिरः—युक्तमाह पाञ्चाली[11] । कञ्चुकिन्, क्रियतामियं तपस्विनी चितासंविभागेन[12] सह्यवेदना । ममापि सज्जं धनुरुपनय[13] । अलमथवा धनुषा,—

---

हस्तम् । हञ्जे बुद्धिमतिके, तवापि प्रत्यक्षमेव प्रतिज्ञातं नाथेन । आर्य, किं संदिष्टं तेन देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति । तदुपनय मे पुष्पदामानि तावत् । विरचय मे कबरीम् । कुरु भगवतो नारायणस्य वचनम् । न खलु सोऽलीकं संदिशति । अथवा किं मया संतप्तया भणितम् । अचिरगतमार्यपुत्रमनुगमिष्ये । महाराज, आदीप्यतां चिता । त्वमपि क्षत्रियधर्माननुबध्नन्नेव तस्य

---

पाठा०–१. 'अज्ज, किं' इति क्वचिन्नास्ति. २. 'मे देवकीणंदणेण केसरअणा आरंभीअदु त्ति'; 'मे देवेण देवकीणंदणेण पुणो वि केसरअणा आरंभीअदु त्ति'. ३. 'फुल्लदामाइं'; 'फुल्लपुप्फदामाइं'. ४. 'पुरिसोत्तमस्स'. ५. 'णहि अलीअं मंतेदि सो'. ६. 'अदिसंतत्ताए'. ७. 'अदूरगदं'; 'अदूरं गदं'. ८. 'उपेत्य'. ९. 'आदीवअ मे चिदां । तुमं वि खत्तधम्मं अणुवट्टंतो एव्व'. १०. 'अहवा जं दे रोअदि' इति क्वचिन्नास्ति. ११. 'याज्ञसेनी'. १२. 'चितासंविधानेन हृतवेदना'. १३. 'उपानय'.

तस्यैव देहरुधिरोक्षितपाटलाङ्गी-[1]
मादाय संप्रति[2] गदामपविध्य[3] चापम् ।
भ्रातृप्रियेण कृतमद्य यदर्जुनेन
श्रेयो ममापि हि तदेव कृतं[4] जयेन ॥ २१ ॥

राक्षसः[5]—राजन्, रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु । वृथा तत्र गमनम् ।

कञ्चुकी[6]—धिङ्मुने, राक्षससदृशं हृदयं भवतः ।

राक्षसः[7]—( सभयं स्वगतम् । ) किं ज्ञातोऽहमनेन ? । ( प्रकाशम् । ) भोः[8] कञ्चुकिन्, तयोर्गदया[9] खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः । जानामि च तयोर्गदायां[10] भुजसारम् । दुःखितस्य पुनरस्य[11] राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि ।

युधिष्ठिरः—( बाष्पं विसृजन्[12] । ) साधु महर्षे, साधु । सुस्निग्ध-[13]मभिहितम् ।

कञ्चुकी—महाराज, किं नाम[14] शोकान्धतया देवेन[15] देवकल्पेनापि प्राकृतेनेव त्यज्यते क्षात्रधर्मः[16] ? ।

युधिष्ठिरः—आर्य जयंधर,—

---

नाथजीवितहरस्य शत्रोरभिमुखो भव । अथवा यत्ते रोचते ॥ **तस्येति ।** तस्यैव भीमस्य । उक्षितं सिक्तम् । पाटलं रक्तम् । अपविध्य त्यक्त्वा ॥ २१ ॥ भुजसारमित्यन्तं कञ्चुकिने कथनम् ॥ सुस्निग्धं हितम् ॥ देवकल्पेन देवतुल्येन ॥

---

पाठा०–१. 'पीवराङ्गीम्'. २. 'संयति'. ३. 'अपहाय चापम्'; 'अपविद्धचापः'. ४. 'जयेन किं मे'. ५. 'राक्षसः—(सविषादमात्मगतम् ।) कथं गच्छति । भवत्वेवं तावत् । (प्रकाशम् ।) राजन्, रिपुजयविमुखं यदि ते चेतस्तदा वरमत्रैव प्राणत्यागः । किं तत्र गमनेन'. ६. 'कञ्चुकी—(सकोपम् ।) ब्रह्मन्, अलं कथितेन । निश्चितं नृशंसं राक्षसमत्रभवतो हृदयम्'; 'कञ्चुकी—(सरोषम् ।) धिङ्मुनिजनासदृशं राक्षसस्य सदृशं भवता व्याहृतम्'. ७. 'राक्षसः—(सभयं स्वगतम् ।) हा धिक्कष्टम् । किं ज्ञातोऽहमनेन'; 'राक्षसः—(स्वगतम् ।) किं ज्ञातोऽहमनेन'. ८. 'भोः कञ्चुकिन्, एतद्ब्रवीमि'. ९. 'तयोर्गदायाः खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः'; 'तयोर्गदायुद्धं वृत्तमेवार्जुनसुयोधनयोः'. १०. 'गदायाः'; 'गदायुद्धे'. ११. 'पुनरस्य' इति क्वचिन्नास्ति. १२. 'उत्सृज्य'; 'विमुञ्चन्'. १३. 'स्निग्धं'; 'सुश्लिष्टं'. १४. 'किं नाम' इति क्वचिन्नास्ति. १५. 'देवकल्पेनापि देवेन त्वया'. १६. 'क्षत्रधर्मः'.

[1]शक्ष्यामि तौ परिघपीवरबाहुदण्डौ
[2]वित्तेशशक्रपुरदर्शितवीर्यसारौ ।
भीमार्जुनौ क्षितितले [3]प्रविचेष्टमानौ
द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम् ॥ २२ ॥

अयि पाञ्चालराजतनये, मद्दुर्नयप्राप्तशोच्यदशे, यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं संभावयावः ।

द्रौपदी—[4]अज्ज, करेहि दारुसंचअं । पज्जलीअदु चिदा । तुवरदि मे हिअअं णाधं पेक्खिदुं । ( सर्वतोऽवलोक्य । ) कहं ण को वि णाधेण विणा महाराअस्स वअणं करेदि ? । हा णाह भीमसेण, तं एव्व एदं राअउलं तुए विरहिदं पडिअणो वि संपदं परिहरदि । [ आर्य, कुरु दारुसंचयम् । प्रज्वाल्यतां चिता । त्वरते मे हृदयं नाथं प्रेक्षितुम् । कथं न कोऽपि नाथेन विना महाराजस्य वचनं करोति ? । हा नाथ भीमसेन, तदेवेदं राजकुलं त्वया विरहितं परिजनोऽपि सांप्रतं परिहरति । ]

राक्षसः—सदृशमिदं [5]भरतकुलवधूनां यत्पत्युरनुमरणम् ।

युधिष्ठिरः—[6]महर्षे, न [7]कश्चिच्छृणोति तावदावयोर्वचनम् । [8]तदिन्धनप्रदानेन प्रसादः क्रियताम् ।

---

**शक्ष्यामीति** । वित्तेशः कुबेरः । भीमार्जुनौ रिपुं च द्रष्टुं शक्ष्यामि । किं तु न शक्ष्यामि ॥ २२ ॥ **द्रौपदीवाक्ये** । महाराज, महाराज, आनाय्यतां तावद्दारुसंचयः । संप्रज्वाल्यतां चिता । त्वरते मम हृदयं नाथं प्रेक्षितुम् । कथं न कोऽपि नाथेन विना महाराजस्य वचनं करोति ? । हा नाथ भीमसेन, तदेव राजकुलमिदानीं त्वया विरहितं परिजनोऽपि महाराजं परिभवति ॥ समिन्धयामि

---

पाठा०—१. 'शक्ष्यामि नो'; 'शक्नोमि तौ'. २. 'वित्तेशशक्रवरुणाधिकवीर्यवन्तौ'; 'वित्तेशशक्रवरुणाधिकवज्रसारौ'. ३. 'परिवर्तमानौ', ४. 'अज्ज, करेहि दारुसंचअं । पज्जलीअदु चिदा । तुवरदि मे हिअअं णाधं पेक्खिदुं । ( सर्वतोऽवलोक्य । ) कहं ण को वि महाराअस्स वअणं करेदि । हा णाह, अज्ज तुए विणा महाराओ परिअणेण वि परिहवीअदि'; 'अज्ज, करेहि दारुसंचअं । कहं ण को वि महाराअस्स वअणं करेदि । हा णाह, अज्ज एसो तुए विणा महाराओ परिअणेण वि परिहवीअदि'. ५. 'भरतकुलवधूनां पत्यनुमरणम्'; 'भरतकुलवधूनां पत्यनुसरणम्'. ६. 'महर्षे' इति क्वचिन्नास्ति. ७. 'कश्चिदिदानीं शृणोति'. ८. 'इन्धनप्रदानेन प्रसादं कर्तुमर्हसि'.

राक्षसः—मुनिजनविरुद्धमिदम् । ( स्वगतम् । ) पूर्णो[1] मे मनोरथः । यावदनुपलक्षितः समिन्धयामि[2] वह्निम् । ( प्रकाशम् । ) राजन्, न शक्नुमो वयमिहैव[3] स्थातुम् । ( इति निष्क्रान्तः । )

युधिष्ठिरः—कृष्णे[4], न कश्चिदस्मद्वचनं करोति ? । भवतु । स्वयमेवाहं दारुसंचयं कृत्वा चितामादीपयामि ।

द्रौपदी—तुवरदु तुवरदु महाराओ । [ त्वरतां त्वरतां महाराजः । ]

( नेपथ्ये कलकलः । )

द्रौपदी—( सभयमाकर्ण्य । ) महाराअ, कस्स वि एसो बलदप्पि[5]-दस्स विसमो संखणिग्घोसो सुणीअदि । अवरं वि अप्पिअं सुणिदुं अत्थि णिब्बंधो तदो विलंबीअदु[6] । [ महाराज, कस्याप्येष बलदर्पितस्य विषमः शङ्खनिर्घोषः श्रूयते । अपरमप्यप्रियं श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यताम् । ]

युधिष्ठिरः—न खलु विलम्ब्यते । उत्तिष्ठ ।

( इति सर्वे परिक्रामन्ति । )

युधिष्ठिरः—अयि पाञ्चालि, अम्बायाः[7] सपत्नीजनस्य च किंचित्संदिश्य निर्वर्तय[8] परिजनम् ।

द्रौपदी—महाराअ[9], अंबाए एव्वं संदिसिस्सं—'जो सो बअहिडिंबकिम्मीरजडासुरजरासंधविजअमल्लो[10] वि दे मज्झमपुत्तो

---

दीपयामि ॥ द्रौपदीवाक्ये । त्वरतां त्वरतां महाराजः । महाराज, कस्याप्येष बलदर्पितस्य विषमः शङ्खनिर्घोषः श्रूयते । तद्यपरं किमपि श्रोतव्यं तदा विलम्ब्यताम् । अत्र निर्घोषः शब्दः ॥ द्रौपदीवाक्ये । महाराज, अम्बायै

---

पाठा०–१. 'पूर्णा मे मनोरथाः'. २. 'समीपेऽहमिन्धनमादीपयामि'. ३. 'वयमिदैवं स्थातुम्'; 'वयमवस्थातुमिति'. ४. 'कृष्णे, न कश्चिदिदानीमेतत्करिष्यति । भवतु । स्वयमेव शुष्कदारुसंचयं कृत्वा चितानलेनात्मानमात्मना दीपयामि'. ५. 'तेजोबलदप्पिदस्स विसमो संखणिग्घोसो'; 'तेजोबलदप्पिदस्स णिग्घोसो'; 'तेजोबहलदप्पिदस्स णिग्घोसो'. ६. 'विलंबीअदि'. ७. 'तत्रभवत्या अम्बायाः'. ८. 'निवार्यतां परिजनः'. ९. 'एव्वं महाराअ, अंबाए संदिसिस्सं'. १०. 'बअहिडिंबकिम्मीरजरासंधजअमल्लो'.

मम हदासाए पक्खवादेण परलोअं गदो' त्ति । [ महाराज, अम्बायै एवं संदेक्ष्यामि—'यः स बकहिडिम्बकिर्मीरजटासुरजरासंधविजयमल्लोऽपि ते मध्यमपुत्रो मम हताशायाः पक्षपातेन परलोकं गतः' इति । ]

युधिष्ठिरः—भद्रे बुद्धिमतिके, उच्यतामस्मद्वचनादम्बा,—

येनासि तत्र जतुवेश्मनि दीप्यमाने
निर्वाहिता[1] सह सुतैर्भुजयोर्बलेन ।
तस्य प्रियस्य बलिनस्तनयस्य पाप-
माख्यामि[2] तेऽम्ब कथयेत्कथमीदृगन्यः ॥ २३ ॥

आर्य जयंधर, त्वया[3] सहदेवसकाशं गन्तव्यम् । वक्तव्यश्च तत्रभवा[4]न्माद्रेयः कनीयान्सकलकुरुकुलकमलाकरदावानलो युधिष्ठिरः परलोकमभिप्रस्थितः प्रियानुजमप्रतिकूलं[5] सततमाशंसनीयमसंमूढं[6] व्यसनेऽभ्युदये च भवन्तमविरलमालिङ्ग्य[7] शिरसि चाघ्रायेदं प्रार्थयते,—

मम हि वयसा दूरेणाल्पः[9] श्रुतेन समो भवा-
न्सहजकृपया[10] बुद्ध्या ज्येष्ठो मनीषितया गुरुः ।

---

एतत्संदेष्टव्यम्—'योऽसौ बकहिडिम्बकिर्मीरजटासुरजरासंधविजयमल्लो मध्यमपुत्रस्ते स मम हताशायाः पक्षपातेन परलोकं गतः' इति ॥ **येनेति** । निर्वाहिता रक्षिता । ते आख्यामि तुभ्यं कथयामि । अन्यो मत्त इति शेषः । मदन्यः क ईदृशं दुःखं कथयेत्? । किंतु न कोऽपीत्यर्थः ॥ २३ ॥ प्रियश्चासावनुजश्चेति विग्रहः । 'बह्वच्यनियमः' इति प्रियस्यैव पूर्वनिपातः । अर्थात्सहदेवम् । अप्रतिकूलमायत्तम् । आशंसनीयं प्रत्याशार्हम् । विपत्तावमूढममुग्धम् । आघ्राय परिचुम्ब्य । **ममेति** । दूरेणाधिकेन । श्रुतेन अध्ययनेन । सहजा स्वाभाविकी

---

पाठा०—१. 'निर्वासिता'. २. 'कोऽन्यस्तवाम्ब कथयेत्कथमीदृशस्य'; 'आख्यामि तेऽम्ब कदनं कथमीदृशस्य'; 'आख्यामि तेऽम्ब नृपशुः कथमीदृगन्यत्'. ३. 'त्वमपि सहदेवसकाशं गच्छ'; 'त्वमपि सहदेवसकाशं गत्वा'; 'त्वयापि सहदेवसकाशं गत्वा'. ४. 'तत्रभवान्पाण्डुकुलबृहस्पतिर्माद्रेयः कनीयानस्माकं स कुरुकुलकमलाकरदावानलः'; 'तत्रभवान्पाण्डुकुलबृहस्पतिर्माद्रेयः कनीयानस्माकं स कुरुकुलकाननदावानलः'; 'तत्रभवान्पाण्डुकुलबृहस्पतिर्वैमात्रेयः कनीयानस्माकं सकलकुरुकुलकमलाकरदावानलः'; 'तत्रभवान्पाण्डुकुलबृहस्पतिर्वैमात्रेयः सकलकुरुकुलकमलाकरवाडवानलः'. ५. 'प्रियमनुजमनुकूलं'. ६. 'सततमासन्नं व्यसने'. ७. 'धृतिमन्तं भवन्तं'. ८. 'अचिरं'. ९. 'दूरेण त्वं'. १०. 'कृतसहजया बुद्ध्या'; 'सहजकृतया बुद्ध्या'.

शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥ २४ ॥

अपि च, बालिशचरितस्य नित्याभिमानिनोऽस्मत्सदृशहृदयसारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यम् । नानुगन्तव्यास्मत्पदवी । त्वया हि वत्स,—

विस्मृत्यास्मान्श्रुतिविशदया प्रज्ञया सानुजांश्च
पिण्डान्पाण्डोरुदकपृषतानश्रुगर्भान्प्रदातुम् ।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥ २५ ॥

गच्छ जयंधर, अस्मच्छरीरस्पृष्टिकया शापितेन भवताऽकालहीनमिदमवश्यमावेदनीयम् ।

द्रौपदी—हला बुद्धिमदिए, भणाहि मह वअणेण पिअसहीं सुभद्दां—'अज्ज वच्छाए उत्तराए आवण्णसत्ताए चउत्थो मासो वट्टदि । सव्वधा णाविउले तं णिक्खिवेसि । कदा वि इदो परलोअ-

---

कृपा दया यस्यां तया । 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः । मुकुलौ पाणी कृत्वाऽञ्जलिं बद्ध्वा । अतोऽर्थये इदं याचे । मयि स्नेहो विरलतां कृशत्वं नेयः । अतो जलप्रदः पितरि भवेत्यन्वयः ॥ २४ ॥ बालिशो मूर्खः । **विस्मृत्येति** । सानुजानस्मान्प्रज्ञया विस्मृत्य पाण्डोरुदकपृषतान्प्रदातुं त्वया शरीरं रक्षणीयमित्यन्वयः । 'पृषन्ति बिन्दुपृषताः पुमांसः' इत्यमरः । श्रुतिरध्ययनम् । वसतिर्वासः ॥ २५ ॥ शापितेन मदङ्गशपथवता । अकालहीनमसमयेऽयोग्यम् ॥ **द्रौपदीवाक्ये** । हञ्जे बुद्धिमतिके, भणिष्यसि मम वचनेन सुभद्रां प्रियसखीम्—'अद्य वत्साया उत्तराया आपन्नसत्त्वायाश्चतुर्थो मासो वर्तते । तदेनां शीघ्रमात्मनो नामीकुलं सत्यं प्रवेक्ष्यसि । कदाप्येतेनापि परलोकगतस्यास्माकं श्वशुरकुलस्योदक-

---

पाठा०—१. 'बालिशचरितस्य विद्याभिमानिनो मद्धृदयसारस्य'; 'बाल्ये संवर्धितस्य नित्यमभिमानिनोऽस्मत्सदृशहृदयसारस्य'; बाल्ये संवर्धितस्य नित्यमभिमानिनोऽश्मसदृशहृदयसारस्य'. २. 'श्रुतविशदया स्वाग्रजौ चात्मबुद्ध्या क्षीणे पाण्डावुदकपृषतानश्रुगर्भान्प्रदातुम्'. ३. 'शापितोऽसि । त्वयाऽकालहीनमिदमवश्यमावेदनीयम्'. ४. 'वच्छाए उत्तराए चउत्थो मासो पडिवण्णस्स गब्भस्स । तुमं एव्व कुलपडिट्ठाअवं सावहाणं रक्ख त्ति । कदा वि इदो लोअगदस्स ससुरउलस्स अम्हाणं अ सलिलबिंदुदो भविस्सदि त्ति'.

गदस्स संसुरउलस्स अम्हाणं वि सलिलबिंदुदो भविस्सदि' त्ति । [ हला बुद्धिमतिके, भण मम वचनेन प्रियसखीं सुभद्राम्—'अद्य वत्साया उत्तराया आपन्नसत्त्वायाश्चतुर्थो मासो वर्तते । सर्वथा नाभीकुले तां निक्षिपसि । कदापीतः परलोकगतस्य श्वशुरकुलस्यास्माकमपि सलिलबिन्दुदो भविष्यति' इति । ]

युधिष्ठिरः—( सास्रम् । ) भोः कष्टम्,—

शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्यन्तबन्धे ।
दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥२६॥

साधु । इदानीमध्यवसितं करणीयम् । ( कञ्चुकिनमवलोक्य । ) आर्य जयंधर, स्वशरीरेण शापितोऽसि तथापि न गम्यते ।

कञ्चुकी—( साक्रन्दम् । ) हा देव पाण्डो, तव सुतानामजातशत्रुभीमार्जुननकुलसहदेवानामयं दारुणः परिणामः । हा देवि कुन्ति भोजराजभवनपताके,—

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिनः ।

बिन्दुर्भविष्यति'। अत्रापन्नसत्त्वा गर्भवती । नाभीकुलं पितृकुलम् (?) ॥ **शाखेति** । रोधोऽवरोधः । आधिक्यमिति यावत् । स्कन्धः तरुप्रकाण्डः । पर्यन्तबन्धः परिवारानुबन्धनम् । ईदृशि तरौ दग्धे सति तस्याङ्कुर आशाबन्धमयं जनः कुरुत इत्यन्वयः । 'आशाबन्धः समाश्वासे तथा मर्कटजालके' इति विश्वः । छाययार्थी छायाप्रार्थकः ॥ २६ ॥ **भ्रातुरिति** । ते भ्रातुर्वसुदेवस्य । शौरिगु-

[1] अत्र आक्रन्दाख्यो नाट्यालङ्कारः, तल्लक्षणं चोक्तं दर्पणे—'आक्रन्दः प्रलपितं शुचा' इति ।

पाठा०—१. 'गुरुउलस्स'. २. '( सास्रम् । )' इति क्वचिन्नास्ति. ३. 'शाखारोह-'. ४. 'पर्यङ्कबन्धे'. ५. 'द्रौपदि, साधयेदानीमध्यवसितम् ।'. ६. 'आर्य जयंधर, असच्छरीरेण शापितोऽसि'; 'जयंधर, असच्छरीरेण शापितोऽसि'; 'आर्य, स्वशरीरेण शापितोऽसि'. ७. 'दशापरिणामः'. ८. 'भोजकुलपताके'; 'राजभवनपताके'. ९. 'नलिनव्यालोलने दन्तिनः'; 'नलिनीव्यालोडनादन्तिनः'.

राजर्षी राजसूयसंतर्पितहव्यवाहः खाण्डवसंतर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः । एषापि पाञ्चालराजतनया देवी वेदिमध्यसंभवा याज्ञसेनी । द्वावपि निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवतः । तत्परित्रायध्वमार्याः, परित्रायध्वम् । कथं न कोऽपि परित्रायते ? । किं व्यवसितं देव्या देवेन[1] च ? । ]

युधिष्ठिरः—अयि बुद्धिमतिके, यद्वत्सलेन प्रियानुजेन विना सदृशं[2] तत् । उत्तिष्ठोत्तिष्ठ, भद्रे उदकमुपानय[3] ।

( चेटी तथा करोति । )

युधिष्ठिरः—( पादौ[4] प्रक्षाल्योपस्पृश्य च । ) एष तावत्सलिलाञ्जलिर्गाङ्गेयाय भीष्माय गुरवे प्रपितामहाय[5] शान्तनवे । अयमपि पितामहाय विचित्रवीर्याय । ( साश्रम् । ) तातस्याधुनावसरः[6] । अयं[7] तावत्स्वर्गस्थिताय सुगृहीतनाम्ने पित्रे पाण्डवे,—

अद्यप्रभृति वारीदमस्मत्तो[8] दुर्लभं पुनः ।
तात माद्र्यम्बया[9] सार्धं मया[10] दत्तं निपीयताम् ॥ २९ ॥

---

याज्ञसेनी । द्वावप्येतौ निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवतः । तत्परित्रायध्वमार्याः, परित्रायध्वम् । कथं न कोऽपि परित्रायते ? । किं व्यवसितं देवेन देव्या च ? ॥ उपस्पृश्याचम्य । गाङ्गेयाय भीष्माय । शान्तनवे शान्तनुनाम्ने । अद्येति ।

---

पाठा०–१. 'नाथेन'. २. 'सदृशम् । तदुत्तिष्ठोत्तिष्ठ । सलिलमुपानय'; 'सदृशं तव । उत्तिष्ठोत्तिष्ठ । सलिलमुपानय'; 'सदृशं तव । भद्रे, उत्तिष्ठोत्तिष्ठ । सलिलमुपनय'. ३. 'उपानय । चेटी—जं देवो आणवेदि । ( इति निष्क्रम्य पुनः प्रविश्य च । ) जेदु जेदु महाराओ । युधि०—पाञ्चालि, त्वमपि तावत्स्वपक्षपातिनो ('तावत्त्वत्पक्षपातिनः') वृकोदरस्य प्रियस्यार्जुनस्योदकक्रियां कुरु । द्रौपदी—महाराओ एव्व करेदु । अहं उण जलणं पविसिस्सं । युधि०—अनतिक्रमणीयं लोकवृत्तम् । भद्रे, उदकमुपानय ।'. ४. 'मुखं'. ५. 'प्रपितामहाय शन्तनवे पितामहाय विचित्रवीर्याय'; 'प्रपितामहाय शान्तनवे पितामहाय चित्रवीर्याय'; 'अयमपि प्रपितामहाय शान्तनवे पितामहाय विचित्रवीर्याय'. ६. 'तात, तवाधुनावसरः'; 'तातस्येदानीमवसरः'. ७. 'अयमपि तत्रभवते स्वर्गस्थाय गुरवे सुगृहीतनाम्ने पित्रे पाण्डवे'. ८. वां दत्तं'. ९. 'माद्याम्बया'; 'त्वयाम्बया'. १०. 'एतद्दत्तं निपीयताम्'.

एतज्जलं जलजनीलविलोचनस्य[1]
भीमप्रियस्य[2] मम चाप्यविभक्तमस्तु।
एकं[3] क्षणं विरम वत्स पिपासितोऽपि
पातुं त्वया सह जवादयमागतोऽस्मि[4] ॥ ३० ॥

अथवा सुक्षत्रियाणां गतिमुपगतं वत्समहमुपगतोऽप्यकृती द्रष्टुम्[5]।
वत्स भीमसेन[6],—

मया पीतं पीतं[7] तदनु भवताम्बास्तनयुगं[8]
मदुच्छिष्टैर्वृत्तिं[9] जनयसि रसैर्वत्सलतया।
वितानेष्वप्येवं[10] तव मम च[11] सोमे विधिरभू-[12]
न्निवापाम्भः पूर्वं पिबसि कथमेवं[13] त्वमधुना ॥ ३१ ॥

कृष्णे[14], त्वमपि देहि सलिलाञ्जलिम्।

**द्रौपदी**—हञ्जे बुद्धिमदिए, उवणेहि[15] मे सलिलं। [ हञ्जे बुद्धिमतिके, उपनय मे सलिलम्। ]

---

हे तात, मया दत्तमेतज्जलं माद्यम्बया सह निपीयताम् ॥ २९ ॥ **एतदिति**। जलजस्य लीला विलासो यत्र तत्। भीमप्रियस्य प्रीतिविषयभीमस्य। अविभक्तं साधारणम्। हे वत्स भीम। विरम विरक्तो भव। त्वया सह पातुं वेगादयमहमागतोऽस्मीत्यन्वयः ॥ ३० ॥ गतिं स्वर्गम्। **मयेति**। तदनु तत्पश्चात्। रसैर्दुग्धैः। वृत्तिं वर्तनम्। वितानं यज्ञः। 'क्रतुविस्तारयोरस्त्री वितानम्' इत्यमरः। साम्यो विधिः समः प्रकारः। साम्य इति चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। 'साम्ये विधिः' इति पाठे साम्ये तुल्यत्वे विधिरित्यर्थः। 'सोमे विधिः' इति पाठे सोमलताद्रवपानेऽयं प्रकार इत्यर्थः। निवापः पितृदेयम् ॥ ३१ ॥ **द्रौपदीवाक्ये**। हञ्जे बुद्धिमतिके, उपनय मे

---

**पाठा०**—१. 'नीलविलोचनाय'; 'लीलविलोचनस्य'. २. 'भीमस्य तस्य मम चाप्यविभक्तमस्तु'; 'भीमाय भोस्तव ममाप्यविभक्तमस्तु'. ३. 'एकं क्षणं तु विषहस्व पिपासितोऽपि'. ४. 'अहं'. ५. 'वत्समहं मृतोऽप्यकृती द्रष्टुम्'; 'वत्सं किमहमुपागतोऽपि प्राप्स्यामि द्रष्टुं भीमसेनम्'; 'वत्समहमुपगतोऽपि न पापः प्राप्नोमि द्रष्टुं भीमम्'. ६. 'तात भीम'. ७. 'पूर्वं'. ८. 'अम्बस्तनयुगं'. ९. मयोच्छिष्टैः'. १०. 'वितानेष्वेवं वा'. ११. 'तव च मम'. १२. 'साम्यो विधिः'; 'साम्ये विधिः'; 'सोऽयं विधिः'. १३. 'मम वत्स'. १४. 'कृष्णे, देहि जलाञ्जलिं तत्रभवते भीमाय'. १५. 'देहि मे उदअं'.

( चेटी तथा करोति । )

द्रौपदी—( उपसृत्य जलाञ्जलिं पूरयित्वा । ) महाराअ, कस्स सलिलं[1] देम्हि ? । [ महाराज, कस्य सलिलं ददामि ? । ]

युधिष्ठिरः—

तस्मै[2] देहि जलं कृष्णे सहसा गच्छते दिवम् ।
अम्बापि येन गान्धारीरुदितेन[3] सखीकृता ॥ ३२ ॥

द्रौपदी—णाह[4] भीमसेण, परिअणोवणीदं उदअं सग्गगदस्स दे पादोदअं भोदु । [ नाथ भीमसेन, परिजनोपनीतमुदकं स्वर्गगतस्य ते पादोदकं भवतु । ]

युधिष्ठिरः—फाल्गुनाग्रज,[5]—

असमाप्तप्रतिज्ञेऽपि[6] याते त्वयि महाभुजे ।
मुक्तकेश्यैव दत्तस्ते[7] प्रियया सलिलाञ्जलिः ॥ ३३ ॥

द्रौपदी—उट्ठेहि महाराअ, दूरं गच्छदि दे भादा । [ उत्तिष्ठ महाराज, दूरं गच्छति ते भ्राता । ]

---

सलिलम् ॥ महाराज, कस्य सलिलं ददामि ? । **तस्मा इति** । सहसा शीघ्रं जलं देहीत्यन्वयः । येन गान्धारीरुदितेनाम्बापि सखीकृता रोदनवती कृतेत्यर्थः ॥३२॥ **द्रौपदीवाक्ये** । नाथ भीमसेन, परिजनोपनीतमुदकं स्वर्गगतस्य ते पादोदकं भवतु ॥ फाल्गुनोऽर्जुनः । **असमाप्तेति** । मुक्तोऽबद्धः ॥ ३३ ॥ **द्रौपदीवाक्ये** । महाराज, उत्तिष्ठोत्तिष्ठ । दूरं गच्छति मे भर्ता ॥

---

पाठा०–१. 'कस्स जलं देम्हि'. २. 'तस्मै देहि जलं पूर्वं सहसा गच्छते दिवम्'; 'तस्मै देवि जलं देहि सहसा यो गतो दिवम्'. ३. 'गान्धार्या रुदितेन सखीकृता'; गान्धार्या रुदितेन समीकृता'; 'गान्धार्या रुदितेषु सखीकृता'. ४. 'णाह भीमसेण, परिअणोवणीदं सग्गगदस्स दे पादोदअं भोदु पदं'; 'णाह, परिजणोवणीदं सग्गगदस्स पादोदअं भविस्सदि पदं'. ५. 'तात फाल्गुनाग्रज'. ६. 'अपि याते त्वयि ममानुजे'; 'अपि जाते त्वयि ममानुजे'; 'अस्तं याते त्वयि महाभुजे'; 'अस्तं गते त्वयि महाभुजे'. ७. 'ते दत्तः प्रियया सलिलाञ्जलिः'; 'दत्तस्ते प्रिययाद्य जलाञ्जलिः'.

**युधिष्ठिरः**—(दक्षिणाक्षिस्पन्दनं सूचयित्वा।) पाञ्चालि, निमित्तानि मे [1]कथयन्ति संभावयिष्यसि वृकोदरमिति ।

**द्रौपदी**—महाराअ, सुणिमित्तं भोदु । [ महाराज, सुनिमित्तं भवतु । ]

( नेपथ्ये [2]कलकलः । )

( प्रविश्य संभ्रान्तः । )

**कञ्चुकी**—परित्रायतां परित्रायतां [3]महाराजः । एष खलु दुरात्मा [4]कौरवापसदः [5]क्षतजाभिषेकपाटलिताम्बरशरीरः [6]समुच्छ्रितदिग्धभीषणगदाशक्तिरुद्यतकालदण्ड इव [7]कृतान्तोऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत [8]एवाभिवर्तते ।

**युधिष्ठिरः**—हा दैव, [9]ते निर्णयो जातः । हा गाण्डीवधन्वन्,—

( इति मुह्यति । )

**द्रौपदी**—हा अज्जउत्त, [10]हा मम सअंवरसअंगाहदुल्ललिद, पिअं [11]भादुअं अणुगदोसि । ण उण महाराअं [12]इमं दासजणं अ । ( इति मोहमुपगता । ) [ हा आर्यपुत्र, हा मम स्वयंवरस्वयंग्राहदुर्ललित, प्रियं भ्रातरमनुगतोऽसि । न पुनर्महाराजमिमं दासजनं च । ]

---

संभावयिष्यसि प्राप्स्यसि । **द्रौपदीवाक्ये** । महाराज, सुनिमित्तं भवतु ॥ क्षतजं रक्तम् । अम्बरं वासः । दिग्धो व्याप्तः । गदाशक्तिः शक्तिरस्त्रभेदः, तद्वद्देत्यर्थः ॥ **द्रौपदीवाक्ये** । हा नाथ अर्जुन, हा मम स्वयंवरस्वयंग्राहदुर्ललित, भ्रातृप्रिय, परलोकमनुगतोऽसि । न पुनर्महाराजमिमं च दासजनम् । अत्र स्वयंवररूपस्वयंग्राह इत्यर्थः ॥ सव्यसाचिन् अर्जुन । निष्पेषो यन्त्रणम् ।

---

**पाठा०**—१. 'कथयन्त्यहतं वृकोदरम् । द्रौपदी—सुणिमित्तं भोदु ।'; 'कथयन्ति स्वयं संभावयामि वृकोदरमिति । भवतु शीघ्रतरमनुगच्छामि । द्रौपदी—सुणिमित्तं भोदु ।'; 'कथयन्ति संभावयसि वृकोदरमिति । भवतु । शीघ्रं दहनमुपसर्पावः । द्रौपदी—आः, पज्जलिदो भअवं हुदवहो ।'. २. 'महान्कलकलः'; 'महाकलकलः'. ३. 'महाराज'. ४. 'कौरवाधमः'. ५. 'क्षतजाभिषेकपाटलीकृताम्बरः'; 'क्षतजाभिषिक्तपाटलिताम्बरः'. ६. 'रक्तभीषणगदापाणिरुद्यत्कालदण्डः'; 'रक्तभीषणगदाशनिरुद्धतकालदण्डः'. ७. 'अन्तकः'. ८. 'अभिवर्तते । तत्परित्रायतां परित्रायतां महाराज'. ९. 'तेन'. १०. 'हा मम सअंवरसअंगहकुडुंबिअ, धणंजअ'; 'मम सअंवरसअंगाहकुडुंबिअ, धणंजअ'; 'मम सअंवरसअंगहकुडुंब, धणंजअ'. ११. 'भादुअं संभावेसि'; 'भादुअं विओदरं संभावेसि'. १२. 'इमं दासजणं अ' इति क्वचिन्नास्ति.

युधिष्ठिरः—हा वत्स सव्यसाचिन्, हा त्रिलोचनाङ्गनिष्पेषमल्ल, हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक, हा बदर्याश्रममुनिद्वितीयतापस, हा द्रोणाचार्यप्रियशिष्य, हा अस्त्रशिक्षाबलपरितोषितगाङ्गेय, हा राधेयकुलकमलिनीप्रालेयवर्ष, हा गन्धर्वनिर्वासितदुर्योधन, हा पाण्डवकुलकमलिनीराजहंस,—

तां वत्सलामनभिवाद्य विनीतमम्बां
गाढं च मामनुपगुह्य मयाप्यनुक्तः ।
एतां स्वयंवरवधूं दयितामदृष्ट्वा
दीर्घप्रवासमयि तात कथं गतोऽसि ॥ ३४ ॥

( मोहमुपगतः । )

कञ्चुकी—( चेटीं प्रति । ) इदानीं भोः कष्टम् । एष कौरवाधमो

---

निवातेति । निवातकवचनामकदैत्यहननेन निःशत्रूकृतसुरलोक इत्यर्थः । बदर्याश्रमो बदरिकाश्रमः । द्वितीयतापसः प्रथमस्तत्पतिः, द्वितीयोऽयमित्यर्थः । तामिति । तामम्बां विशिष्यानभिवाद्य गतोऽसीत्यन्वयः । वत्सलां वात्सल्यवतीम् । अनुपगुह्य अनालिङ्ग्य । अनुक्तोऽस्वीकृतः । दीर्घप्रवासं मरणम् । तात अनुकम्प्य । 'तातोऽनुकम्प्ये जनके' इति विश्वः ॥ ३४ ॥

---

पाठा०-१. 'युधि०—हा असदृशमल्ल, हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक'; 'युधि०—हा असदृशमल्ल, हा निवातकवचोद्धरण, हा निष्कण्टकीकृतामरलोक'. २. 'हा बदर्याश्रममुनिद्वितीयतापस, हा साहसिक, हा द्रोणाचार्यवत्सल, हा वत्सार्जुन'; अत्र कचित् 'हा अस्त्रशिक्षा–' इत्यस्मादारभ्य 'राजहंस' इत्यन्तं नास्ति. ३. 'सुयोधन'. ४. 'अनभिवन्द्य'. ५. 'सदृशीमदृष्ट्वा'; 'सदृशीमपृष्ट्वा'. ६. 'अयि वत्स'; 'अपि वत्स'. ७. 'इति मोहमुपागताः'; 'इति मोहमुपगतः'. ८. 'कञ्चुकी—भोः कष्टम् । एष दुरात्मा सुयोधनो यथेष्टमित एवाभिवर्तते । सर्वथा संप्रत्ययमेव कालोचितः प्रतीकारः । भद्रे बुद्धिमतिके, चितासमीपमुपनयात्रभवतीं पाञ्चालराजतनयाम् । ( चेटीं प्रति । ) भद्रे, त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वा ब्रूहि । अथवा एवमेव स्थिते महाराजेऽस्तमितयोर्भीमार्जुनयोः क नु परित्राणम्'; 'कञ्चुकी—भोः कष्टं कष्टम् । इदानीमयं दुरात्मा कौरवाधमो यथेष्टमित एवाभिवर्तते । सर्वथा संप्रत्ययमेव कालोचितः प्रतीकारः । चितासमीपमुपनयाम्यत्रभवतीं पाञ्चालराजतनयाम् । ( चेटीमुद्दिश्य । ) त्वमपि भद्रे देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ च यथाचारमाक्रन्द । अथवा एवमवस्थे महाराजे अस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा'.

यथेष्टमिहैव प्रवर्तते । सर्वथायं प्रवेशकालः । चितासमीपमुपनयाम्यत्रभवतीं पाञ्चालराजतनयाम् । अहमप्येवमेवानुगच्छामि । भद्रे, त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वाऽवाप्नुहि । एवमवस्थिते महाराजेऽस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा ? ।

[1]चेटी—परित्ताअह परित्ताअह अज्जा । [ परित्रायध्वं परित्रायध्वमार्याः । ]

( नेपथ्ये कलकलानन्तरम् । )

भो भोः, समन्तपञ्चकसंचारिणः [2]क्षतजासवमत्तयक्षराक्षसपिशाचगृध्रजम्बुकवायसभूयिष्ठा विरलयोधपुरुषाः, कृतमस्मद्दर्शन[3]त्रासेन । [4]कथयत कस्मिन्नुद्देशे याज्ञसेनी संनिहितेति । [5]कथयाम्युपलक्षणं तस्याः,—

[6]ऊरू करेण परिघट्टयतः [7]सलीलं
दुर्योधनस्य पुरतोऽपहृताम्बरा या ।
[8]दुःशासनेन कचकर्षणभिन्नमौलिः
सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥ ३५ ॥

---

**चेटीवाक्ये** । परित्रायध्वं परित्रायध्वमार्याः ॥ गृध्रादीनां भूयिष्ठः प्रचुरो निलयो गृहं येषु ते तथा । उपलक्षणं परिवाचकम् । **ऊरू इति** । ऊरू निजोरुयुगं रोषेण परिघट्टयतस्ताडयतः । इदं तु रोषसूचकम् । 'कचः केशः शिरोरुहः' इत्यमरः । कर्षणमाकर्षणम् । भिन्नमौलिर्विदारितधम्मिल्लः । 'मौलिः किरीटे धम्मिल्ले' इति विश्वः । प्रदेशेऽस्तीति शेषः । कथयत तमिति शेषः ॥ ३५ ॥ अर्थसूचनरूपा धृतिकेयम् । 'अन्तःपटीप्रविष्टैर्यत्क्रियतेऽर्थस्य सूचनम् ।...धृतिकार्थप्रकाशनम् ॥' इति भरतः । इह सादननामावसमसंधिः (?) । यदाह–'बीज॰

---

पाठा०–१. इदं चेटीवाक्यं बहुषु पुस्तकेषु न दृश्यते. २. 'क्षतजास्वादमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बुकोलूकवायसभूयिष्ठावशिष्टविरलाश्च योधाः'. ३. 'संत्रासेन'. ४. 'कथयत भवन्तः कस्मिन्नुद्देशे याज्ञसेनी संनिहिता'. ५. 'कथयाम्युपलक्षणं तस्या' इति क्वचिन्नास्ति; 'किं कथयाम्युपलक्षणं तस्याः'; 'किं कथयामि तस्या लक्षणं'; 'कथयाम्युपलक्षणानि तस्याः'. ६. 'ऊरुं'. ७. 'सलज्जा'; 'सरोषम्'. ८. 'दुःशासनस्य करकर्षणभिन्नमौलिः'.

**कञ्चुकी**—हा देवि यज्ञवेदिसंभवे, परिभूयसे संप्रत्यनाथा कुरुकुलकलङ्केन ।

**युधिष्ठिरः**—( सहसोत्थाय । ) पाञ्चालि, न भेतव्यं न भेतव्यम् । ( ससंभ्रमम् । ) कः कोऽत्र भोः ? । सनिषङ्गं मे धनुरुपनय । दुरात्मन्दुर्योधनहतक, आगच्छागच्छ । अपनयामि ते गदाकौशलसंभृतं भुजदर्पं शिलीमुखासारेण । अन्यच्च रे कुरुकुलाङ्गार,—

प्रियमनुजमपश्यंस्तं जरासंधमल्लं
कुपितहरकिरातद्वेषिणं तं च वत्सम् ।
त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो
न च पुनरपहर्तुं बाणवर्षैस्तवासून् ॥ ३६ ॥

( ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः । )

**भीमसेनः**—ननु भोः समन्तपञ्चकसंचारिणः,—

रक्षो नाहं न भूतं रिपुरुधिरजलाह्लादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।

---

कार्योपगमनं यादनं समुदीरितम् ॥ **प्रियमिति** । हरः किरात इव हरकिरातः । किरातरूपी हर इत्यर्थः । तं वत्समर्जुनम् । प्राणितुं जीवितुम् । त्वमिवेति व्यतिरेके दृष्टान्तः । यथा त्वं जीवितुं शक्तस्तथा नाहमित्यर्थात् तवासून्बाणवर्षैः पुनरपहर्तुं न शक्तोऽस्मि । किं तु शक्तोऽस्मि । नः शिरश्चालने ॥ ३६ ॥ **रक्ष**

---

1 इत आरभ्य 'रक्षो नाहं न भूतम्' ( ६।३७ ) इत्यनेन श्लोकेन समस्तरिपुवधकार्यस्य संग्रहात् आदानाख्यो विमर्शसन्धिभेदः, तल्लक्षणं चोक्तं दर्पणे 'कार्यसंग्रह आदानम्' इति ।

---

पाठा०—१. 'देवि याज्ञसेनि परिभू०'; 'भो देवि याज्ञसेनि परिभू०'. २. परिभूयसे संप्रत्यनाथेवानेन कुरुकुलकलङ्केन'; 'परिभूयसे कुरुकुलकेतुना दुर्योधनहतकेन'. ३. '( सहसोत्थाय । सावष्टम्भम् । )'. ४. '(ससंभ्रमम् ।)' इति बहुषु पुस्तकेषु नास्ति. ५. 'कः कोऽत्र भोः' इति क्वचिन्नास्ति. ६. 'उपनीयतां मे सज्जं धनुः। दुरात्मन्दुर्योधनहतक, आगच्छ ।'. ७. 'संभृतं'. ८. 'जरासंधशत्रुं'. ९. 'ननु पुनरपहर्तुं'; 'न तु पुनरपहर्तुं. १०. बाणवर्षेण वाऽसून्'. ११. 'क्षतजसिक्तसर्वाङ्गो रौद्रवेषो भीमसेनः'. १२. 'भीम०—(उद्धतं परिक्रामन् ।) भो भोः समन्तपञ्चकसंचारिणः सैनिकाः, कोऽयमावेगः'. १३. 'रक्षो नाहं न भूतः'; 'नाहं रक्षो न भूतः'. १४. 'प्लाविताङ्गः'; 'आप्लाविताङ्गः'; 'अभ्युक्षिताङ्गः'.

भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः[1] कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्[2] ॥ ३७ ॥

कथयन्तु[3] भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति ।

द्रौपदी[4]—( लब्धसंज्ञा । ) परित्ताअदु परित्ताअदु महाराओ ।
[ परित्रायतां परित्रायतां महाराजः । ]

कञ्चुकी—देवि पाण्डुस्नुषे, उत्तिष्ठोत्तिष्ठ । संप्रति[5] झटिति
चिताप्रवेश एव श्रेयान् ।

द्रौपदी—( सहसोत्थाय[6] । ) कहं ण संभावेमि अज्ज वि चिदास-
मीवं ? । [ कथं न संभावयाम्यद्यापि चितासमीपम् ? । ]

युधिष्ठिरः—कः कोऽत्र भोः ? । सनिषङ्गं[7] धनुरुपनय । कथं न
कश्चित्परिजनः ? । भवतु । बाहुयुद्धेन[8] संभावनविहस्तमेनं गाढमा-
लिङ्ग्य ज्वलनमभिपातयामि । ( परिकरं[9] बध्नाति । )

कञ्चुकी—देवि[10] पाण्डुस्नुषे, संयम्यन्तामिदानीं नयनपथावरो-[11]
धिनो दुःशासनावकृष्टा मूर्धजाः । अस्तमिता संप्रति प्रतीकाराशा ।
द्रुतं[12] चितासमीपं संभावय ।

युधिष्ठिरः—कृष्णे[13], न खल्वनिहते तस्मिन्दुरात्मनि[14] दुर्योधने
संहर्तव्याः केशाः ।

---

इति । आह्लादितः सिक्तः । जलनिधिगहन इत्यत्र पूर्वनिपातविधेरनित्यत्वमेव
समाधानम् । यद्धवद्भिर्लीनैः स्थीयते । त्रासफलमेतत् ॥ ३७ ॥ **द्रौपदीवाक्ये ।**
परित्रायतां परित्रायतां महाराजः ॥ निषङ्गस्तूणीरः । संभावना व्यापारः । विहस्तं
करशून्यं विह्वलं वा । 'परिकरः पर्यङ्कपरिवारयोः' इत्यमरः ॥ न खलु नैवेत्यर्थः ॥

---

पाठा०—१. 'भुक्तशेषाः'. २. 'किम्'. ३. 'कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति' इति पाठः क्वचिन्न वर्तते. ४. इदं द्रौपदीवाक्यं केषुचित्पुस्तकेषु नास्ति. ५. 'संप्रति झटिति चिताप्रवेश एव श्रेयान्' इति क्वचिन्नास्ति. ६. '(उत्थाय ।)'. ७. 'उपनीयतां सनिषङ्गं धनुः । (परिवृत्यावलोक्य च ।) कथं न कश्चिच्छृणोति परिजनः'. ८. 'बाहुयुद्धेनैव दुरात्मानं गाढमालिङ्ग्य'. ९. '(इति परिकरं बध्नाति)'. १०. 'देवि पाण्डुस्नुषे' इति बहुषु पुस्तकेषु नास्ति. ११. 'नयनोपरोधिनः'. १२. 'चितासमीपमेव द्रुततरं संभावय'. १३. 'कृष्णे' इति क्वचिन्नास्ति. १४. 'तस्मिन्दुर्योधनहतके'.

**भीमसेनः**—पाञ्चालि, न[1] खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना। तिष्ठतु तिष्ठतु। स्वयमेवाहं संहरामि।

(द्रौपदी[2] भयादपसर्पति।)

**भीमसेनः**—तिष्ठ[3] तिष्ठ भीरु, क्वाधुना गम्यते?। (इति केशेषु ग्रहीतुमिच्छति।)

**युधिष्ठिरः**—(वेगाद्भीममालिङ्ग्य[4]।) दुरात्मन्[2], भीमार्जुनशत्रो, सुयोधनहतक[5],—

आशैशवादनुदिनं जनितापराधो
मत्तो[6] बलेन भुजयोर्हतराजपुत्रः[7]।
आसाद्य[3] मेऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य[8] पापः[9] ॥ ३८ ॥

---

आशैशवादिति। भुजयोर्बलेन मत्तः। हतो राजपुत्रो भीमादिर्येन स तथा। संकटं मध्यम्। त्वं जीवन् सन् पदात्पदमप्यवश्यं न प्रयासि न प्रयास्यसि। 'वर्तमानसामीप्ये वर्तमानवद्वा' (३।३।१३१) इति भविष्यति लट्। यद्वा

---

1 अत्र 'पाञ्चालि' इत्यादिना 'स्वयमेवाहं संहरामि' इत्यनेन द्रौपदीकेशसंयमनोपक्षेपात् ग्रथनाभिधो निर्वहणसन्धिः, तल्लक्षणं चोक्तं दर्पणे—'उपन्यासस्तु कार्याणां ग्रथनम्' इति। 2 इह दुर्योधनसादृश्यभ्रान्त्या युधिष्ठिरस्य क्षोभवृद्धेः सारूप्याख्यं नाट्यलक्षणम्; 'सारूप्यमनुरूपस्य सारूप्यात् क्षोभवर्धनम्' इति तल्लक्षणम्। 3 'आसाद्य सङ्कटमिदं भुजपञ्जरस्य जीवन्प्रयासि न पदात्पदमप्यवश्यम्' इति टीकानुगुणः पाठः।

---

पाठा०—१. 'न खलु मयि जीवति संहर्तव्या दुःशासनविरूपिता वेण्यात्मपाणिना।'; 'न खलु न खलु मयि जीवति संहर्तव्या दुःशासनविरूपिता वेण्यात्मपाणिना।'; 'न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेण्यात्मपाणिभ्याम्।'; 'न खलु संयमितव्यात्मपाणिना दुःशासनकृष्टा वेणी।'; 'न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेण्यात्मपाणिभ्याम्। तिष्ठ तिष्ठ। अहमेव संहरामि।'; 'न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम्। तिष्ठ। स्वयमेवाहं संहरामीति'. २. '(द्रौपदी भयात्परिक्रामति।)'; '(द्रौपदी भयादपसर्पति।)' इति क्वचिन्नास्ति। ३. 'अये भीरु, क्वेदानीं गम्यते'. ४. '(बलाद्भीममालिङ्ग्य।)'; '(भीममालिङ्ग्य)'. ५. 'दुर्योधनहतक, क्वेदानीं यास्यसि'. ६. 'क्षीबो मदेन'. ७. 'हतराजपुत्र'. ८. 'आसाद्य चान्तरमिदं भुजपञ्जरस्य जीवन्प्रयासि न पदात्पदमप्ययं मे'. ९. 'पाप'.

**भीमसेनः**—कथमार्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति? । देव अजातशत्रो, भीमार्जुनगुरो, यथैवाज्ञापयसि न तथैवैतत् ।

[2]**कञ्चुकी**—( उपसृत्य, सहर्षम् । ) [1]महाराज, वर्धसे । अयं खल्वायुष्मान्भीमसेनः [3]सुयोधनक्षतजारुणीकृतसकलशरीरो [4]दुर्लक्ष्यव्यक्तिः । अलमधुना संदेहेन ।

[5]**चेटी**—देवि, णिवट्टीअदु णिवट्टीअदु । एसो खु पूरिदपडिण्णाभारो णाहो दे वेणीसंहारं कादुं तुमं [6]एव्व अण्णेसेदि । [ देवि, निवर्त्यतां निवर्त्यताम् । एष खलु पूरितप्रतिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्विष्यति । ]

---

तत्कालीनक्रियाया वर्तमानत्वाद्वर्तमाने लट् ॥ ३८ ॥ दुर्लक्षा दुर्ज्ञेया व्यक्तिश्चिह्नं यस्य स तथा ॥ **चेटीवाक्ये** । देवि, निवर्त्यतां निवर्त्यताम् । एष खलु परिपू-

---

1 इत आरभ्य 'सुयोधनक्षतजारुणीकृतसकलशरीरो दुर्लक्ष्यव्यक्तिः' इत्यनेन द्रौपदीकेशसंयमनादिमुखसंध्यादिबीजानां स्वस्वस्थानोपक्षिप्तानामेकार्थतया योजनादत्र निर्वहणाख्यः सन्धिः, तल्लक्षणं च—'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत्' इति ।

---

पाठा०—१. 'भीमसेनः—(सस्मितम् ।) अये, कथं दुर्योधनशङ्कया क्रोधान्मां निर्दयमालिङ्गत्यार्यः । देव अजातशत्रो, भीमार्जुनगुरो, यथैवाज्ञापयसि न तथैवैतत् ।'; 'भीमसेनः—अये, कथमार्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति । आर्य, प्रसीद प्रसीद ।'; 'भीमसेनः—अये, कथमार्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति ।'. २. 'कञ्चुकी—(उपसृत्य । सहर्षम् ।) महाराज, वर्धसे । अयं खलु भीमसेनः'; 'कञ्चुकी—(उपसृत्य । सहर्षम् ।) महाराज, वर्धसे वर्धसे । अयं खलु कुमारभीमसेनः'; 'कञ्चुकी—(निरूप्य । सहर्षम् ।) कथं कुमारो भीमसेनः । दिष्ट्या वर्धसे महाराज । अयं खल्वायुष्मान्भीमसेनः'; 'कञ्चुकी—(उपगम्य । सहर्षम् ।) महाराज वर्द्धयसे । अयं खल्वायुष्मान्भीमसेनः'; 'कञ्चुकी—(निरूप्य । सहर्षम् ।) भीमसेन एवायम् । देव, वर्धतेऽयं खल्वायुष्मान्कुमारो भीमसेनः'. ३. 'सुयोधनक्षतजारुणितसकलशरीराम्बरः'; 'दुर्योधनक्षतजारुणीकृतसर्वशरीरः'. ४. 'दुर्लक्ष्यव्यक्तिः'. ५. 'चेटी—(द्रौपदीमालिङ्ग्य ।) समस्ससदु समस्ससदु देवी । भट्टिणि, अअं क्खु पूरिदपडिण्णाभारो णाहो दे'; 'चेटी—(द्रौपदीमालिङ्ग्य ।) भट्टिणि, एसो क्खु पूरिदपडिण्णाभरो णाहो देवीए'; 'चेटी—(द्रौपदीमालिङ्ग्य ।) देवि, पूरिदपडिण्णाभरो णाहो देवीए'. ६. 'एव्व' इति बहुषु पुस्तकेषु नास्ति.

द्रौपदी—हञ्जे, किं मं अलीअवअणेहिं आसासेसि ? ।[1]
[ हञ्जे, किं मामलीकवचनैराश्वासयसि ? । ]

युधिष्ठिरः—जयंधर,[2] किं कथयसि नायमनुजद्वेषी दुर्योधन-हतकः ? ।

भीमसेनः—[2]देवं[3] अजातशत्रो, कुतो[4]ऽद्यापि दुर्योधनहतकः ? । मया[5] हि तस्य दुरात्मनः,—

भूमौ क्षिप्तं[6] शरीरं निहितमिदमसृक्[7]चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये[8] निषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या[9] ।
भृत्या मित्राणि योधाः कुरु[10]कुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीपि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम्[11] ॥३९॥

रिनप्रतिज्ञाभागो नाथस्ते वेणीसंहरणं कर्तुं त्वामेवान्विष्यति ॥ **द्रौपदीवाक्ये ।** हञ्जे, किं मामलीकवचनेन समाश्वासयसि ॥ **भूमाविति ।** तस्येदमसृङ्मयाङ्गे निहितम् । भूम्या सह श्रीस्त्वयि निषण्णा । भृत्याः कुरूणामिति शेषः । एव-मितरत्रापि । यदेकं शेषमवशिष्टं नाम दुर्योधनस्य ब्रवीषि । शेषशब्दोऽयं कर्म-

1 'अलीअवअणेण समास्सासेसि' इति टीकानुकूलः पाठः । 2 इत आरभ्य 'भूमौ क्षिप्तं शरीरम्' (६–३९) इति श्लोकान्तपर्यन्तं भीमेन स्वानुभूतार्थस्य ख्यापनात् निर्णयाख्यो निर्वहणसन्धिभेदः; 'अनुभूताख्या तु निर्णयः' इति तल्लक्षणम् ।

पाठा०–१. 'कञ्चुकी—महाराज, वर्द्धयसे । (इति पूर्वोक्तमेवाभिधत्ते ।)'. २. 'जयंधर, अपि सत्यं नायं मम वैरी सुयोधनहतकः'; 'जयंधर, अपि सत्यं नायमनुजवैरी सुयोधनहतकः'; 'जयंधर, किं कथयसि नायमनुजद्वेषी दुरात्मा दुर्योधनहतकः'; 'कञ्चुकिन्, किं वदसि नायमर्जुनवैरी दुर्योधनहतकः'; 'युधि०—(स्वैरं मुक्त्वा । भीमसेनमनवलोकयन् ।) जयंधर, किं कथयसि नायमनु-जद्वेषी सुयोधनहतकः'. ३. 'देव, अजातशत्रो, भीमार्जुनगुरो'; 'आर्य देव, अजातशत्रो, भीमार्जुनगुरो'. ४. 'कुतोऽद्यापि सुयोधनहतकः'; 'क्वाद्यापि दुर्योध-नहतकः'; 'अद्यापि दुर्योधनहतकः'. ५. 'मया निहतस्य दुरात्मनस्तस्य'; 'मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविनः'. ६. 'क्षिप्त्वा'. ७. 'असृक्चन्दनं भीमगात्रे'. 'असृक्चन्दनाभं मयाङ्गे'. ८. 'लक्ष्मीरार्ये निषिक्ता'; 'राजन्, लक्ष्मीर्निषण्णा' ९. 'ऊर्व्या'. १०. 'कुरुकुलमनुजाः'. ११. 'शेषम् ॥ भीम०—( पाद-योर्निपत्य ।) जयतु जयतु देवः । युधि०—(सत्वरं मुक्त्वा भीमसेनमवलोक-यन्नंसे परामृश्य ।) तात भीम, पृथानन्दन, पाण्डुकुलप्रदीप । भीम०—आज्ञापय ।

( युधिष्ठिरः [1]स्वैरं मुक्त्वा भीममवलोकयन्नश्रूणि [2]प्रमार्जयति । )

**भीमसेनः**—( पादयोः पतित्वा । ) जयत्वार्यः ।

**युधिष्ठिरः**—वत्स, बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । [3]कथय कच्चिज्जीवति भवान्समं किरीटिना ।

**भीमसेनः**—निहतसकलरिपुपक्षे त्वयि नराधिपे, जीवति भीमोऽर्जुनश्च ।

**युधिष्ठिरः**—( [4]पुनर्गाढमालिङ्ग्य । ) [5]तात भीम,—

रिपोरास्तां तावन्निधनमिदमाख्याहि [6]शतशः
प्रियो भ्राता [7]सत्यं त्वमसि मम [8]योऽसौ बकरिपुः ।

**भीमसेनः**—आर्य, सोऽहम् ।

**युधिष्ठिरः**—

जरासंधस्योरःसरसि [9]रुधिरासारसलिले
तटाघात[10]क्रीडाललितमकरः [11]संप्रति भवान् ॥ ४० ॥

---

ण्यजन्तो वाच्यलिङ्ग इत्यवधेयम् ॥ ३९ ॥ **रिपोरिति**। रिपोर्निधनं तावदास्ताम् । शत्रुनाशं न पृच्छामीत्यर्थः । इदं शतशः शतं वारानाख्याहि कथय । सरसि जलधाविति व्यस्तरूपकम् । तटाघातो जलधितटहननम् । मकरो जलजन्तुभेदः । 'क्रीडाललितमकरोत्' इति पाठे यः क्रीडाललितं क्रीडारूपं विलासं चकारेत्यर्थः ॥ ४० ॥

---

युधि०—वत्स, बाष्पजलान्तरितं न पश्यामि ते वदनचन्द्रमनवरतम् । कथय कच्चिज्जीवति भवान्समं किरीटिना । भीम०—देव, निहतसकलरिपुपक्षे त्वयि जीवति भीमार्जुनौ जीवन्तौ । युधि०—(पुनर्गाढमालिङ्ग्य ।) तात भीम, रिपोरास्तां तावन्निधनम्'; 'शेषम् ॥ युधि०—(सहर्षं भीममालिङ्गति ।) भीम०—जयति जयत्यार्यः । युधि०—वृकोदर, पृथानन्दन, भीमसेन, पाण्डुकुलप्रदीप । भीम०—आज्ञापयत्वार्यः । युधि०—बाष्पसलिलान्तरितत्वान्न पश्यामि ते वदनचन्द्रम् । कथय कच्चिज्जीवति भवान्किरीटिना । भीम०—महाराज, जीवाम्यहं समं किरीटिना । युधि०—अयि फाल्गुनाग्रज, रिपोरास्तां तावन्निधनम्'.

**पाठा०**–१. 'स्वैरं मुक्त्वा' इति कचिन्नास्ति. २. 'मार्जयति'. ३. 'तत्कथय'. ४. 'सस्नेहं पुनर्गाढमालिङ्ग्य'. ५. 'तात भीम' इति पाठः कचिन्नास्ति. ६. 'सहसा'. ७. 'भीमो मम भवसि योऽसौ'. ८. 'यो वै बकरिपुः'. ९. 'रुधिरागाधसलिले'; 'रुधिरासारजलधौ'. १०. 'क्रीडाललितमकरोत्'. ११. 'संप्रति भवान्'; 'यः स तु भवान्'.

**भीमसेनः**—[1]आर्य, स एवाहम् । तन्मुञ्चतु मामार्यः क्षणमेकम् ।

**युधिष्ठिरः**—किमपरमवशिष्टम् ? ।

**भीमसेनः**—[2]सुमहदवशिष्टम् । संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

**युधिष्ठिरः**—[3]गच्छतु भवान् । [4]अनुभवतु तपस्विनी वेणीसंहारम् ।

**भीमसेनः**—( द्रौपदीमुपसृत्य । ) [5]देवि पाञ्चालराजतनये, दिष्ट्या वर्धसे रिपुकुलक्षयेण । अलमलमेवंविधं मामालोक्य त्रासेन,—

कृष्टा[6] येनासि राज्ञां सदसि नृपशुना तेन[7] दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।

---

कृष्टेति । तस्यैतान्यसृञ्जि रक्तपीतशेषाणि मम करयोः स्पृश । हे कान्ते, सुयो-

---

1 अत्र 'आर्य' इत्यत आरभ्य 'अनुभवतु तपस्विनी वेणीसंहारम्' इत्यनेन केशसंयमनकार्यस्य अन्वेषणात् विबोधाख्यो निर्वहणसन्धिः, 'विबोधः कार्यमार्गणम्' इति तल्लक्षणम्। 2 वाक्येनानेन द्रौपद्या भीमसेनेनाराधनात् प्रसादाख्यो निर्वहणसन्धिः; 'प्रसादः पर्युपासनम्' इति च तल्लक्षणम्। 3 अत्र मिथः संलापनात् परिभाषणाख्यं निर्वहणसन्ध्यङ्गम्; तल्लक्षणं यथा—'परिभाषा मिथो जल्पः' इति ।

---

पाठा०—१. 'भीम०—आर्य, मुञ्च मां क्षणमेकं भवान्'; 'भीम०—एवमेतत् । किं तु मुञ्चतु मामार्यः क्षणमेकम्'; 'भीम०—एवमेतत् । मुञ्चतु मामार्यः'; 'भीम०—मुञ्चतु मुञ्चतु मामार्यः क्षणमेकम्'; 'भीम०—मुञ्चतु मामार्यः क्षणमेकम्'. २. 'भीम०—आर्य, सुमहदवशिष्टम् । संयच्छामि तावदनेन दुर्योधनदुःशासनरुधिरोक्षितेन पाणिना'; 'भीम०—आर्य, सुमहदवशिष्टम् । युधि०—वत्स, किम् । भीम०—संयच्छामि तावदनेन सुयोधनशोणिताक्तेन पाणिना'; 'भीम०—सुमहदवशिष्टम् । संयमयामि तावदनेन दुःशासनशोणितोक्षितेन पाणिना'. ३. 'सत्वरं गच्छतु भवान्'. ४. 'अनुभवतु तावत्तपस्विनी वेणीसंहारमहोत्सवम्'; 'अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम्'. ५. 'भीम०—भवति पाञ्चालराजतनये, दिष्ट्या वर्धसे रिपुकुलक्षयेण । द्रौपदी—(उपसृत्य ।) जेदु जेदु णाहो । (इति भयादपसर्पति ।) भीम०—राजपुत्रि, अलमेवं मामालोक्य त्रासेन । पश्य'; 'भीम०—देवि, दिष्ट्या वर्धसे रिपुकुलक्षयेण । द्रौपदी—(उपसृत्य ।) जेदु जेदु णाहो । (इत्यर्धोक्ते भयादपसर्पति ।) भीम०—अयि भीरु, अलमवलोक्यासांत्रासेन । पश्य'. ६. 'येनाकृष्टासि राज्ञां'; 'कृष्टा येनासि तस्मिन्'; 'कृष्टा केशेषु तस्मिन्'. ७. 'येन'.

कान्ते राज्ञः कुरूणामतिसरसमिदं मद्गदाचूर्णितोरो-
रङ्गेऽङ्गेऽसृङ्निषक्तं तव रिपुजनितस्यानलस्योपशान्त्यै ॥ ४१ ॥

बुद्धिमतिके, क सा भानुमती योपहसति पाण्डवदारान्? । भवति यज्ञवेदिसंभवे,—

द्रौपदी—आणवेदु णाहो । [ आज्ञापयतु नाथः । ]

भीमसेनः—स्मरति भवती यत्तन्मयोक्तम्? । ('चञ्चद्भुज-' (१।२१ इत्यादि पठति । )

द्रौपदी—णाह, ण केवलं सुमरामि । अणुहवामि अ णाहस्स प्पसादेण । [ नाथ, न केवलं स्मरामि । अनुभवामि च नाथस्य प्रसादेन । ]

भीमसेनः—( वेणीमवधूय । ) भवति, संयम्यतामिदानीं धार्तराष्ट्रकुलकालरात्रिर्दुःशासनविलुलितेयं वेणी ।

---

घनरुधिरमिदं प्रत्यङ्गं निषक्तं संबद्धमस्ति ॥ ४१ ॥ निर्वहणमिह श्लोके । यदुक्तं तत्रैव—'पूर्वं प्रसारितानां तु बीजादीनां समापनम् । निर्व्यूढलेन क्रियते तन्निर्वहणमीरितम्' ॥ **द्रौपदीवाक्ये** । आज्ञापयतु नाथः ॥ नाथ न केवलं स्मरामि नाथस्य प्रसादेन पुनरनुभवामि । नाथ, विस्मृतोऽयं व्यापारो मया ।

---

1 इह पूर्ववाक्यं नाम निर्वहणसन्ध्यङ्गम्, 'पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम्' इति तल्लक्षणम् । 2 अत्र मुखोपक्षिप्तस्य बीजस्य पुनरुपगमात् सन्धिर्नाम निर्वहणसन्ध्यङ्गम्; तल्लक्षणं च 'सन्धिर्बीजोपगमनम्' इति ।

---

पाठा०–१. 'अपि रुधिरमिदं मद्गदाचूर्णितोरोरङ्गेष्वङ्गेषु सक्तं तव परिभवजस्यानलस्योपशान्त्यै'; 'अपि रुधिरमिदं मद्गदाचूर्णितोरोरङ्गे सद्यो निषक्तं तव परिभवजस्यानलस्योपशान्त्यै'. २. 'क संप्रति भानुमती योपहसति पाण्डवदारान् । भवति वेदिसंभवे याज्ञसेनि'; 'क संप्रति भानुमती नोपहसति पाण्डवदारान् । भवति वेदिसंभवे याज्ञसेनि'; 'कासौ भानुमती योपहसति पाण्डवदारान् । भवति यज्ञवेदिसंभवे'; 'क सा भानुमती । परिभवतु संप्रति पाण्डवदारान् । भवति यज्ञवेदिसंभवे'; 'क भानुमती योपहसति पाण्डवदारान् । भवति पाञ्चालराजतनये'. ३. एतद्द्रौपदीवाक्यं केषुचित्प्राचीनग्रन्थेषु नास्ति. ४. 'यन्मयोक्तम्'; 'यन्मया प्रतिज्ञातम्' ५. 'इति पूर्वोक्तमेव पठति'. ६. 'णाह, सुमरामि अणुहवामि अ ।' ७. 'भीम०—भवति, संयम्यतामिदानीं'; 'भीम०—देवि भवति, संयम्यतामिदानीं'. ८. 'दुःशासनविलुलिता वेणी'.

द्रौपदी—[1]णाह, विसुमरिदम्हि एदं वावारं। णाहस्स प्पसादेण पुणो वि सिक्खिस्सं। [ नाथ, विस्मृतास्म्येतं व्यापारम्। नाथस्य प्रसादेन पुनरपि शिक्षिष्ये। ]

( भीमसेनो वेणीं बध्नाति। )

( नेपथ्ये। )

महासमरानलदग्धशेषाय स्वस्ति भवतु राजन्यकुलाय,—

क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ४२

युधिष्ठिरः—देवि, एष ते मूर्धजानां संहारोऽभिनन्दितो नभस्तलचारिणा सिद्धजनेन।

---

सांप्रतं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये॥ क्रोधान्धैरिति। यस्य मोक्षे मोचननिमित्तं पार्थिवान्तःपुराणि पाण्डवैः क्षेपाच्चालनादधिक्षेपाद्वा निर्मुक्तकेशानि कृतानि। पार्थिवोऽत्र दुर्योधनः। तथा च दुर्योधने हते तदन्तःपुरनार्योऽनिबद्धकेशाः कृता इति भावः॥ ४२॥ पुण्डरीकाक्षः कृष्णः। आशास्ते स्वीकरोति।

---

1 अत्र वाञ्छितस्य केशसंयमनस्य द्रौपद्या प्राप्तत्वात् आनन्दाख्यो निर्वहणसंधिः; तल्लक्षणं चोक्तं दशरूपके—'आनन्दो वाञ्छितावाप्तिः' इति। 2 इह अद्भुतार्थप्राप्तेः उपगूहनाख्यं निर्वहणाङ्गम्; 'कार्यदृष्ट्यद्भुतप्राप्ती पूर्वभावोपगूहने' इति तल्लक्षणात्।

---

पाठा०–१. 'द्रौपदी—विसुमरिदं एदं वावारं'. २. 'पुणो वि सिक्खिस्सं। ( केशान्बध्नाति। )'. ३. 'चेटी वेणीं बध्नाति'. ४. 'महासमरानल······राजन्यकुलाय' इत्येष पाठः क्वचिन्नास्ति. ५. 'भवतु राजकुलाय'; 'भवति राजन्यकुलाय'; 'भवते राजन्यलोकाय'. ६. 'मोक्षात्कुरुनरपतिभिः': 'मोक्षे हतनरपतिभिः'. ७. 'प्रत्याशं मुक्तकेशान्यतुलभुजबलैः'; 'क्षेपान्निर्मुक्तकेशान्यनुदिनमधुना'. ८. 'सोऽयं बद्धः प्रजानां'; 'सोऽयं बद्धः प्रजाभ्यः'. ९. 'राजन्यकेभ्यः'. १०. 'युधि०—देवि, एष ते वेणीसंहारोऽभिनन्द्यते नभस्तलसंचारिणा सिद्धजनेन'. 'कञ्चुकी—कुमार, एष वेणीसंहारोऽभिनन्दितः सिद्धजनेन'. ११. 'सिद्धचारणजनेन'.

( ततः प्रविशतः कृ[१]ष्णार्जुनौ । )

**कृ[२]ष्णः**—(युधिष्ठिरमुपगम्य ।) विजयतां निहतसकलारातिमण्डलः [३]सानुजो युधिष्ठिरः ।

**अर्जुनः**—[४]जयत्वार्यः ।

**यु[५]धिष्ठिरः**—( विलोक्य । ) [६]अये, भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी । [1]भगवन्, कु[७]तस्तस्य विजयादन्यद्यस्य [८]भगवान्पुराणपुरुषो नारायणः स्वयं मङ्गलान्याशास्ते ?

कृतगुरुमहदादिक्षोभसंभू[९]तमूर्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम् ।

---

**कृतेत्यादि** । हे देव, जगति त्वां चिन्तयित्वापि जनो दुःखी न भवति । किं पुनर्दृष्ट्वा दुःखी भवति ? । अपि तु न भवतीति भावः । कीदृशम् । कृता गुरोः स्थूलद्रव्यस्य महदादेर्महत्तत्त्वबुद्धितत्त्वादेः पर्वतादेर्वा क्षोभेण परिणामेन संभूता व्यापिका मूर्तिस्त्रिनयनत्वादिरूपा येन तम् । यद्वा कृतो गुरुः पर्वतादिर्येन स तथा । महदादेराकाशादेः क्षोभेण मिलनेन महाभूतसमाधिना संभूता कृतास्मदादेर्मूर्तिः शरीरं येन स तथा । पश्चाद्विशेषणसमासः । यद्वा कृतं गुरुकार्यं द्रव्यं येन तादृशेन महदादिना कालाकाशादिना संभूता मिलिता मूर्तिर्यस्य तम् । सामान्यकारणेन सह भगवान्वेदादिकर्तेति भावः । अत एव गुणिनं वेदादिसृष्टियोग्यप्रयत्नादिमन्तम् । यद्वा गुणाः सत्त्वरजस्तमोरूपास्तद्योगिनं लोकसृष्टिनाशस्थैर्यकारणं च । तथा च सत्त्वरजस्तमोरूपं गुणत्रयं सहकारि समासाद्य हरिहर-

---

1 अत्र 'भगवन्' इत्यत आरभ्य 'कृतगुरुमहदादि-' ( ६।४३ ) इति श्लोकान्तपर्यंतं युधिष्ठिरदुःखनिर्गमात् समयाख्यं निर्वहणसन्ध्यङ्गम्; 'समयो दुःखनिर्गमः' इति तल्लक्षणम् ।

---

पाठा०—१. 'वासुदेवार्जुनौ'; 'केशवार्जुनौ'. २. 'वासुदेवः—(उपगम्य ।) विजयतां निहतसकलारातिमण्डलः'; 'उभौ—(उपगम्य ।) कृष्णः—विजयतां निहतसकलारातिमण्डलः'. ३. 'सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः'. ४. 'जयत्वार्यः'; 'जयतु जयतु देवः'. ५. 'युधि०—(विलोक्य ।) अये, कथं भगवान्वासुदेवः किरीटी च । ('वत्सश्च किरीटी') भगवन्, अभिवादये । (किरीटिनं प्रति ।) एह्येहि वत्स, परिष्वजस्व माम् । (अर्जुनः प्रणमति । ) युधि०—(वासुदेवं प्रति ।) देव, कुतस्तस्य विजयादन्यद्यस्य खलु भगवान्पुण्डरीकाक्षः स्वयं मङ्गलमाशास्ते'. ६. 'अयं'. ७. 'किमुत मे विजयात्'. ८. 'भगवान्पुराणपुरुषो नारायणो मङ्गलान्याशास्ते'; 'भगवान्पुराणपुरुषः स्वयमेव नारायणो मङ्गलान्याशास्ते'. ९. 'संभूतिमुर्क्त'.

अजममरमचिन्त्यं चिन्तयित्वापि न त्वां
भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥ ४३ ॥

(अर्जुनमालिङ्ग्य ।) वत्स, परिष्वजस्व माम् ।

कृष्णः—महाराज युधिष्ठिर,—

व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो
धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः ।
प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं
स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥ ४४ ॥

अहं पुनश्चार्वाकेण रक्षसा व्याकुलीकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायातः ।

युधिष्ठिरः—कथं चार्वाकेण रक्षसा वयमेवं विप्रलब्धाः ? ।

भीमसेनः—( सरोषम् । ) क्वासौ धार्तराष्ट्रसखो राक्षसः पुण्यजनापसदो येनार्यस्य महांश्चित्तविभ्रमः कृतः ? ।

---

हिरण्यगर्भरवतारोऽयं भगवान् कार्यत्रयकर्तेति भावः । अजमजन्यम् । अमरमनाश्यम् । अचिन्त्यं वाङ्मनसाऽगोचरम् । तदुक्तम्—'यतो वाचो निवर्तन्ते ह्यप्राप्य मनसा सह' इति । अथ च विरोधाभासः । यो हि संभूतमूर्तिः स कथमजः ? । यो ह्यचिन्त्यस्तस्य कथं चिन्तेति । अविरोधस्तु दर्शित एव ॥४३॥ **व्यासोऽयमिति ।** जाबालिनामा मुनिः । रामनामा च । धृष्टद्युम्नो मुखमाद्यो येषां ते तथा । उत्तम्भित उत्तोलितः । तीर्थवारि जाह्नवीप्रभृतिजलम् । एते तेऽभिषेकाय सन्तीति शेषः ॥ ४४ ॥ इहोच्यतां किमन्यदित्यनेन काव्यसंहाररूपकनिर्वहणसंधिः । यदाह—

---

पाठा०–१. 'अजमजरमचिन्त्यं चिन्तयित्वा भवन्तं भवति जगददुःखं किं पुनर्देव दृष्ट्वा'. २. 'कृष्णः—एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्यजाबालिप्रभृतयो महर्षयः कल्पिताभिषेकमङ्गला नकुलसहदेवसात्यकिमुखाश्च सेनापतयो यादवमत्स्यमागधकुलसंभवाश्च राजकुमाराः स्कन्धोत्तम्भिततीर्थवारिकलशास्तवाभिषेकं धारयन्ति'. ३. 'महाराज, अजातारे, सत्यवादिन्'. ४. 'अहमपि चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह सत्वरमागतः'; 'अन्यच्चाहं पुनश्चार्वाकेण दुरात्मना विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरितमागतोऽस्मि'; 'अहमपि चार्वाकेण रक्षसा व्याकुलीकृतं भवन्तं जयंधरमुखादुपश्रुत्यार्जुनेन सह त्वरिततरमायातः'. ५. 'किं नाम चार्वाकेण विप्रलब्धा वयम् ! (सरोषम् ।) क्वासौ धार्तराष्ट्रसखः पुण्यजनापसदो येन मे महांश्चित्तविभ्रमः कृतः'. ६. 'महानयं चित्तविभ्रमः'.

कृष्णः—निगृहीतः स दुरात्मा नकुलेन । तत्कथय महाराज, किमस्मात्परं समीहितं संपादयामि ? ।

युधिष्ठिरः—न किंचिन्न ददाति भगवान्प्रसन्नः । अहं तु पुरुषसाधारणया बुद्ध्या संतुष्यामि । न खल्वतः परमभ्यर्थयितुं क्षमः । पश्यतु देवः,—

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामाद्दतो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥ ४५ ॥

---

'वरप्रदानसंप्राप्तिः काव्यसंहार उच्यते' ॥ किंचिन्न न ददासि । किं तु ददास्येव । द्वौ निषेधौ प्रकृतमर्थं गमयतः । पुरुषकारः पुरुषव्यापारः ॥ क्रोधान्धैरिति । क्रोधान्धैरर्थात्पञ्चपाण्डवैरेव । पञ्च पाण्डवा अक्षता इत्यन्वयः । पाञ्चाल्या निकारसिन्धुर्मम दुर्नयेन विहितस्तीर्णः । पुरुषोत्तम इति । पुरुषेभ्य उत्तम इति समासः । न तु पुरुषेषूत्तम इति । 'न निर्धारणे' ( २।२।१० ) इति निषेधात् । न चानेन षष्ठीसमासनिषेधो न तु सप्तमीसमासनिषेध इति वाच्यम् । तथा सति षष्ठीसमा-

---

1 इह काव्यसंहाराख्यो निर्वहणसन्धिभेदः, तल्लक्षणं चोक्तं दर्पणे—'वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते' इति ।

---

पाठा०-१. 'गृहीतः'; 'निहतः'. २. 'कुमारनकुलेन'. ३. 'तत्कथय महाराज, किमस्मात्परं समीहितम् ।'; 'कथय महाराज, किमस्मात्परं समीहितम् ।'; 'युधिष्ठिरः—प्रियं नः । वासुदेवः—उच्यतां किं ते भूयः प्रियमुपकरोमि ।'. ४. 'एवं पुण्डरीकाक्ष, न किंचिन्न ददाति भगवान्प्रसन्नः ।'; 'भगवन्, पुण्डरीकाक्ष, किं न ददासि प्रसन्नः । परमपि प्रियमस्ति ।'; 'भगवन्, पुण्डरीकाक्ष, किं न ददासि प्रसन्नः । अतः परमपि प्रियमस्ति ।'. ५. 'अहं तु पुरुषसाधारणया बुद्ध्या न खल्वतः परं प्रियमभ्यर्थये । यतः पश्यतु देवः'; 'अहं तु पुरुषार्थचतुष्टयया बुद्ध्या न खल्वतः परं प्रियमभ्यर्थयितुं क्षमः । पश्यतु देवः'. ६. 'तु' इति क्वचिन्नास्ति. ७. 'अर्थयितुं'. ८. 'क्रोधान्धं'; 'क्रोधात् तत्'. ९. 'रिपुबलं'. १०.'दुर्नये पतितया'; 'दुर्नयेन विहितः'. ११. 'निकारोदधिः'. १२. 'मामद्य संभाषसे'. १३. 'प्रियतरं यत्प्रार्थये त्वामहम्'. १४. 'तथापि प्रीतश्चेद्भगवांस्तदिदमस्तु'; 'तथापि प्रीतश्चेद्भगवांस्तदिदमस्तु भरतवाक्यम् ।'; प्रीततरश्चेद्भवांस्तदिदमेवमस्तु'; 'प्रसन्नतरश्च भगवांस्तदिदं भवतु', 'तथापीदं भवतु'.

प्रीततरश्चेद्भगवांस्तदिदमस्तु,—

अकृपणमरुक्श्रान्तं[1] जीव्याज्जनः पुरुषायुषं
भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः[2] ॥ ४६ ॥

कृष्णः[3]—एवमस्तु ।

( इति निष्क्रान्ताः सर्वे । )

इति षष्ठोऽङ्कः ।

समाप्तमिदं वेणीसंहारं नाम नाटकम् ॥

---

सत्याप्राप्तेरेव निषेधात्सर्वत्र सप्तमीसमासेनैव प्रयोगसिद्धेः । तस्मात्पञ्चमीसमास एवायमित्यदोषः । सुकृतिनं पुण्यवन्तम् ॥ ४५ ॥ **अकृपणमिति** । अकृपणं कार्पण्यरहितमरुक्श्रान्तं न रोगेण परिश्रान्तं च यथा स्यादेवं लोकः पुरुषायुषं जीव्याज्जीवतु । पुरुषायुषमिति 'अचतुर-' ( ५।४।७७ ) इत्यादौ साधितम् । हे भगवन्, द्वैतं विनाऽद्वैतक्रमेण पुरुषोत्तमे भक्तिर्भवतु । मम जनानामिति शेषः । गुणेषु पण्डितजनो विहितहृदयो दत्तचित्तः सानुरागो वा भवतु । भूपः सदा पुण्यवान्प्रसाधितराजचक्रश्च भूयात् ॥ ४६ ॥

1 इह प्रशस्त्यभिधं निर्वहणसन्ध्यङ्गम्; 'प्रशस्तिः शुभशंसनम्' इति तल्लक्षणात् ।

पाठा०—१. 'अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं भवतु च भवद्भक्तिर्द्वैधं विना पुरुषोत्तमे'.

२. 'अवनिमवनिपालाः पान्तु वृष्टिं विधत्तां
जगति जलधराली शस्यपूर्णाऽस्तु भूमिः ।
त्वयि मुरनरकारौ भक्तिरद्वैतयोगा-
द्भवतु मम सुदीर्घं हव्यमश्नन्तु देवाः ॥ १ ॥

अपि च,—

स्वस्ति श्रीस्तनपत्रभङ्गमकरीमुद्राङ्किनोरःस्थलो
हेतुः सर्वजये सुरासुरवधूवक्त्राब्जचन्द्रोदयः ।
क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भू-
र्भाति स प्रलयाब्धिपङ्किलतलोत्खातैकमुस्ताकृतिः ॥ २ ॥'.

३. 'कृष्णः—एवमस्तु' इति क्वचिन्नास्ति.

इदं च विदग्धस्निग्धवियोगदुर्मनसा विप्रलपितं तेन कविना—

काव्यालापसुभाषितव्यसनिनस्ते राजहंसा[२] गता-
स्ता गोष्ठ्यः क्षयमागता गुणलवश्लाघ्या[३] न वाचः सताम् ।
सालङ्काररसप्रसन्नमधुराकाराः कवीनां गिरः
प्राप्ता[४] नाशमयं तु भूमिवलये जीयात्प्रबन्धो महान् ॥ ४७ ॥

विदग्धा नागराः । स्निग्धाः स्नेहवन्तः । तेषां योऽत्र वियोगो विश्लेषस्तेन दुर्मनायमानं मनो यस्य तेन कविनेदं विप्रलपितम् । तदाह—**काव्यानामिति** । ते राजहंसा राजश्रेष्ठा गताः । 'राजवंश्या' इति पाठे राजान इत्यर्थः । कीदृशाः । काव्यानां किरातादीनां सुभाषिते सूक्तौ व्यसनं येषां ते तथा । ताश्च गोष्ठ्यः क्षयं नाशमागताः । तथा च सत्कविताग्राहका नरपत्यादयो न सन्त्येवाधुनेति भावः । सतां साधूनां वाचः पुनर्गुणलवैर्गुणकणैः श्लाघ्याः श्लाघाविषयाः । सत्कवीनां या गिरः सालंकारा रसोक्त्या वक्राः । अनृजवो मधुराः कोमलाश्च । तासां गुणान्तरं गुणाधिक्यमिदमस्तु । यथा कामेप्सितानां मनीषितानां गुणान्तरं भवति तथेत्यर्थः । अत्र च कवेरयमाशयः । मत्कविताया अप्यलंकारशालिता रसयोगिता च स्वभावसिद्धैव । भगवत्प्रसादेन पुनर्गुणान्तरयोगित्वमपि भवतु । तथा च काव्यलक्षणं समस्तमिहापि स्यात् । तत्कर्तृतया च कीर्तिर्विवर्तलाभः प्रीतिलाभश्च स्यादिति । तदुक्तं—सरस्वतीकण्ठाभरणे—'निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम् । रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति' इति ॥ ४७ ॥

## ग्रन्थकृत्प्रशस्तिः ।

कतीह नाटकाम्बुधौ स्फुरन्ति नोज्ज्वला रसाः ।
मदीयबुद्धिरल्पिका क्व वेद तानशेषतः ॥ १ ॥

नानादरं मम कृतौ नियतं तनुध्व-
मत्राधुनातनतया गुणदोषविज्ञाः ।
ग्राह्यं शिशोरपि सुभाषितमित्थमात्थ
यूयं ततोऽपि मम टिप्पनमाद्रियध्वम् ॥ २ ॥

लब्धं दुर्लभशासनं सुरगणग्रामोऽपि रामो गुणै-
र्विद्यावंशविभूषणे अपि शुभे छत्रे उभे धारिते ।
येनायं समभूद्द्विजातितिलकश्चण्डेश्वरः पण्डितो
मीमांसैकरहस्यवश्यहृदयो दातावदाताशयः ॥ ३ ॥

---

पाठा०–१. 'विदग्धविवेकदुर्मनसा'. २. 'राजवंश्याः'. ३. 'गुणलवश्लाघ्यः प्रवादः सताम्' ४. 'शान्तिं प्रापुरवाप दुर्जनगणो वाक्पाटवी सांप्रतम्'.

प्रासूतासावहितनगरीनागरीगीतकीर्तिं
विप्रे क्षिप्रं गुणदमधिकं वेदपूर्वं धरं तम् ।
कैवर्तानामलभत नृपाच्छासनं सोऽयमुच्चै-
रापत्पुत्रं गुणमयतनुं रामपूर्वं धरं तम् ॥ ४ ॥

सोऽयं शुवामनगरे पदमाप शुद्धे
मीमांसको विमलकीर्तिपवित्रमूर्तिः ।
पुत्रं गदाधरमवाप गुणैरगाधं
सत्तान्त्रिकं गुणिगणप्रथिताभिमानम् ॥ ५ ॥

असूत विद्याधरमेष धीरं गुणैरनूनं सुकृताधिवासम् ।
तं रत्नपूर्वं धरमाप पुत्रं सोऽपि प्रसिद्धं गुणिनां गुणेन ॥ ६ ॥

दमयन्त्यामयं धीरो लेभे सुतमरिंदमम् ।
श्रीजगद्धरनामानमनर्घगुणशालिनम् ॥ ७ ॥

विद्याछत्रं कुलच्छत्रं धारितं येन धीमताम् ।
जगद्धरः सुरगणे सोऽयं नैयायिकः कविः ॥ ८ ॥

येनापाठि कठोरगौतममतं वैशेषिकं खण्डनं
येनाश्रावि सकोषकाव्यनिवहं तत्पाणिनीयं मतम् ।
छन्दोऽलंकरणं च शुद्धभरतं येनाध्यगायि स्थिरं
तेनानेन जगद्धरेण कविना टीका कृतेयं मुदा ॥ ९ ॥

नानालंकृतिसुन्दरी रसवती नानागुणानां निधि-
र्नानाभावविभावनैकचतुरा नानार्थसार्थाधिका ।
टीकेयं विमलाङ्गनेव रहिता दोषैरशेषैरत-
स्तामेतामधिभूषयन्तु कृतिनस्तेभ्यो नमः सर्वदा ॥ १० ॥

यदि भवति मदीयग्रन्थमध्ये प्रमादः
क्वचिदपि स महिम्ना शोधनीयो महद्भिः ।
स्खलति गमनकारी प्रायशो नात्र चित्रं
भवति च गुरुहस्तालम्बनोऽपि प्रकारः ॥ ११ ॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ व्यरंसीत्षष्ठोऽयमङ्को वरटिप्पनेऽत्र ॥ १२ ॥

**इति महामहोपाध्यायधर्माधिकारिकश्रीजगद्धरकृतौ
वेणीसंहारटीकायां षष्ठोऽङ्कः समाप्तः ।**

**॥ शुभमस्तु ॥**

---

# वेणीसंहारस्थपद्यानामनुक्रमणी ।